

# प्रकाशकीयम्

भो भो नानापुराणनिगमागमरसास्वादनलोलुपा विद्वांसः !

जानन्त्येव तत्रभवन्तो यद्भगवान् शंकरः परमकल्याणमयः। तस्य स्वरूपे लीलायां च परमं कल्याणकारि तत्त्वं समुज्जृम्भते। अतएव बहवो मनीषिणः सांसारिकं प्रपञ्चं विहाय गाढभक्तिपुरःसरं सततं शिवाराधनपरायणा दृश्यन्ते। एवं कृत्वा ते महानुभावा ऐहलौकिकं पारलौकिकं चाभीष्टं लभमाना एतादृशमानन्दमनुभवन्ति, यत्संसारिणां कृते यावज्जीवनमसम्भवप्रायमेव। अतो भगवतः शंकरस्य महिमा न केवलं भारते अपि तु अखिले जगतीतले येनकेनापि रूपेण विद्यमाना सती स्वस्वश्रद्धाविश्वासानुरूपं सर्वाञ्जनानाप्याययति। भारते तु आकश्मीरात्कन्याकुमारीपर्यन्तं नैकाऽपि काचिदेवं स्थली यत्र शिवस्य तद्भक्तानां चाराधका न स्युः। ते सर्वत्र सन्ति। अहर्निशं ते भगवतो निटिलेक्षणस्य गुणगणान्गायमाना लोककल्याणं वितरन्ति। एतादृशानां महापुरुषाणां पुण्यपुञ्जबलादेव स्वार्थैकतत्पराणां पामराणामस्मदादीनां संसारे योगक्षेमं पूर्यते। अन्यथाऽऽधुनिकानां जनानां कार्यकलापमवेक्ष्य तु इत्थमेव विचारो हृदयाकाशे जागर्ति, यदेते कथं जीवन्ति। कलिप्रभावादिदानीं दयाकरुणासत्याहिंसापरोपकारप्रभृतीनां सद्गुणानां लोपो जातः। सर्वे येनकेनाप्युपायेन निकृष्टस्वार्थसाधने निरता रात्रिन्दिवं परापकारमेव जीव-

नस्य समीचीनं लक्ष्यं मन्यन्ते । तत्फलमप्यनुभवन्ति, किन्तु माययाऽपहृतचेतसां तेषां दृष्टिः सत्पथं नावलोकते । विश्वस्यैतादृशीं दशामवलोक्य सतां मनसि महती पीडा जायते । तत्समीक्ष्यैवाहं जनसाधारणानामशिवतत्त्वं दूरयितुं शिवमाहात्म्यप्रतिपादकस्य शिवपुराणग्रन्थस्य प्रकाशने प्रवृत्तोऽभवम्। यतो मे बलीयसी आशा यदेतस्य पठनपाठनश्रवणमननेन विविधपापतापसंतप्तानां लोकानां स्वान्ते शान्तिर्जागरिष्यति । तदनु भगवत्कृपया ते निखिलं दुःखसन्दोहमपहाय परमार्थपथपथिका भविष्यन्ति ।

ग्रन्थस्यास्य सौष्ठववर्द्धनाय मया बहुशः प्रयत्नो विहितः । तथापि भवादृशां शेमुषीमतां दृष्टौ यदि काचित्त्रुटिर्दृश्येत तां परिमार्ज्यास्माँस्तीर्थीकुर्वन्तु तत्रभवन्तः । यतः—

धावतः स्खलनं क्वापि भवेदेव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समाधति साधवः ॥

काशीधाम
रामनवमी
सं० २०२०

प्रकाशकः



# अथ शिवमहापुराणविषयानुक्रमणिका

## श्रीशिवपुराणमाहात्म्यम्





## अथ प्रथमा विद्येश्वरसंहिता १

नस्य समीचीनं लक्ष्यं मन्यन्ते । तत्फलमप्यनुभवन्ति, किन्तु माययाऽपहृतचेतसां तेषां दृष्टिः सत्पथं नावलोकते । विश्वस्यैतादृशीं दशामवलोक्य सतां मनसि महती पीडा जायते । तत्समीक्ष्यैवाहं जनसाधारणानामशिवतत्त्वं दूरयितुं शिवमाहात्म्यप्रतिपादकस्य शिवपुराणग्रन्थस्य प्रकाशने प्रवृत्तोऽभवम्। यतो मे बलीयसी आशा यदेतस्य पठनपाठनश्रवणमननेन विविधपापतापसंतप्तानां लोकानां स्वान्ते शान्तिर्जागरिष्यति । तदनु भगवत्कृपया ते निखिलं दुःखसन्दोहमपहाय परमार्थपथपथिका भविष्यन्ति ।

ग्रन्थस्यास्य सौष्ठववर्द्धनाय मया बहुशः प्रयत्नो विहितः । तथापि भवादृशां शेमुषीमतां दृष्टौ यदि काचित्त्रुटिर्दृश्येत तां परिमार्ज्यास्माँस्तीर्थीकुर्वन्तु तत्रभवन्तः । यतः—

धावतः स्खलनं क्वापि भवेदेव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति साधवः ॥

काशीधाम
रामनवमी
सं० २०२०

प्रकाशकः

# अथ शिवमहापुराणविषयानुक्रमणिका

## श्रीशिवपुराणमाहात्म्यम्





## अथ प्रथमा विद्येश्वरसंहिता १

अध्यायः विषयः पृष्ठ



इति प्रथमा विद्येश्वरसंहिता ॥ १ ॥

---

## अथ द्वितीयाया रुद्रसंहितायाः प्रथमः सृष्टिखण्डः १

अध्यायः विषयः पृ

इति द्वितायाया रुद्रसंहितायाः प्रथमः सृष्टिखण्डः ॥ १ ॥

## अथ रुद्रसंहिताया द्वितीयः सतीखण्डः २

---

## अथ रुद्रसंहितायास्तृतीयः पार्वतीखण्डः ३

इति द्वितीयाया रुद्रसंहितायास्तृतीयः पार्वतीखण्डः ॥ ३ ॥

---

## अथ द्वितीयारुद्रसंहितायाश्चतुर्थः कुमारखण्डः ४

---

## अथ द्वितीयाया रुद्रसंहितायाः पञ्चमो युद्धखण्डः ५

---

## अथ तृतीया शतरुद्रसंहिता ३

इति तृतीया शतरुद्रसंहिता ॥ ३ ॥

## अथ चतुर्थी कोटिरुद्रसंहिता ४

इति चतुर्थी कोटिरुद्रसंहिता ॥ ४ ॥

---

## अथ पंचम्युमासंहिता ५

---

## अथ षष्ठी कैलाससंहिता ६

इति षष्ठी कैलाससंहिता ॥ ६ ॥

अध्यायः विषयः पृष्ठाङ्काः

## अथ सप्तम्या वायवीयसंहितायाः पूर्वभागः १

---

## अथ सप्तम्या वायवीयसंहिताया उत्तरभागः २

इति सप्तमी वायवीयसंहिता ॥ ७ ॥

॥ इति श्रीशिवमहापुराणविषयानुक्रमणिका समाप्ता ॥

---

❀ श्रीगणेशाय नमः ❀

# श्रीशिवपुराणमाहात्म्यम्



## प्रथमोऽध्यायः

### ( शिवपुराणमहत्त्वम् )

श्रीशौनक उवाच

हे सूत महाप्राज्ञ सर्वसिद्धान्तवित्प्रभो। आख्याहि मे कथासारं पुराणानां विशेषतः ॥ १ ॥
दाचारश्च सद्भक्तिर्विवेको वर्द्धते कथम्। स्वविकारनिरासश्च सज्जनैः क्रियते कथम् ॥ २ ॥
ीवाश्चासुरतां प्राप्ताः प्रायो घोरे कलाविह। तस्य संशोधने किं हि विद्यते परमायनम् ॥ ३ ॥
दस्ति वस्तु परमं श्रेयसां श्रेय उत्तमम्। पावनं पावनानां च साधनं तद्वदाधुना ॥ ४ ॥
न तत्साधनेनाशु शुद्धयत्यात्मा विशेषतः। शिवप्राप्तिर्भवेत्तात सदा निर्मलचेतसः ॥ ५ ॥

सूत उवाच

न्यस्त्वं मुनिशार्दूल श्रवणप्रीतिलालसः। अतो विचार्य्य सुधिया वच्मि शास्त्रं महोत्तमम् ॥ ६ ॥
र्वसिद्धांतनिष्पन्नं भक्त्यादिकविवर्द्धनम्। शिवतोषकरं दिव्यं श्रृणु वत्स रसायनम् ॥ ७ ॥
ालव्यालमहात्रासविध्वंसकरमुत्तमम् ।शैवं पुराणं परमं शिवेनोक्तं पुरा मुने ॥ ८ ॥
नत्कुमारस्य मुनेरुपदेशात्परादरात्। व्यासेनोक्तं तु संक्षेपात्कलिजानां हिताय च ॥ ९ ॥
तस्मादपरं किंचित्पुराणाच्छैवतो मुने। विद्यते न मनःशुद्धयै कलिजानां विशेषतः ॥१०॥
न्मान्तरे भवेत्पुण्यं महद्यस्य सुधीमतः। तस्य प्रीतिर्भवेत्तत्र महाभाग्यवतो मुने ॥११॥
तच्छिवपुराणं हि परमं शास्त्रमुत्तमम्। शिवरूपं क्षितौ ज्ञेयं सेवनीयं च सर्वथा ॥१२॥
ठनाच्छ्रवणादस्य भक्तिमान्नरसत्तमः। सद्यः शिवपदप्राप्तिं लभते सर्वसाधनात् ॥१३॥
स्मात्सर्वप्रयत्नेन कांक्षितं पठनं नृभिः। तथास्य श्रवणं प्रेम्णा सर्वकामफलप्रदम् ॥१४॥

पुराणश्रवणाच्छम्भोर्निष्पापो जायते नरः। भुक्त्वा भोगान्सुविपुलाञ्छिवलोकमवाप्नुयात्॥
राजसूयेन यत्पुण्यमग्निष्टोमशतेन च। तत्पुण्यं लभते शम्भोः कथाश्रवणमात्रतः॥
ये शृण्वन्ति मुने शैवं पुराणं शास्त्रमुत्तमम्। ते मनुष्या न मन्तव्या रुद्रा एव न संशयः॥
शृण्वतां तत्पुराणं हि तथा कीर्तयतां च तत्। पादाम्बुजरजांस्येव तीर्थानि मुनयो विदुः॥
गन्तुं निःश्रेयसं स्थानं येऽभिवाञ्छंति देहिनः। शैवम्पुराणममलं भक्त्या शृण्वन्तु ते सदा॥
सदा श्रोतुं यद्यशक्तो भवेत्स मुनिसत्तम। नियतात्मा प्रतिदिनं शृणुयाद्वा मुहूर्तकम्॥
यदि प्रतिदिनं श्रोतुमशक्तो मानवो भवेत्। पुण्यमासादिषु मुने श्रूयाच्छिवपुराणकम्॥
मुहूर्तं वा तदर्द्धं वा तदर्द्धं वा क्षणं च वा। ये शृण्वन्ति पुराणं तन्न तेषां दुर्गतिर्भवेत्॥
तत्पुराणं च शृण्वानः पुरुषो यो मुनीश्वर। स निस्तरति संसारं दग्ध्वा कर्ममहाटवीम्॥
तत्पुण्यं सर्वदानेषु सर्वयज्ञेषु वा मुने। शम्भोः पुराणश्रवणात्तत्फलं निश्चल भवेत्॥
विशेषतः कलौ शैवपुराणश्रवणादृते। परो धर्मो न पुंसां हि मुक्तिसाधनकृन्मुने॥
पुराणश्रवणं शम्भोर्नामसंकीर्तनं तथा। कल्पद्रुमफलं सम्यङ्मनुष्याणां न संशयः॥
कलौ दुर्मेधसां पुंसां धर्माचारोज्झितात्मनाम्। हिताय विदधे शम्भुः पुराणाख्यं सुधारसम्॥
एकोऽजरामरः स्याद्वै पिबन्नेवामृतं पुमान्। शम्भोः कथामृतं कुर्यात्कुलमेवाजरामरम्॥
सदा सेव्या सदा सेव्या सदा सेव्या विशेषतः। एतच्छिवपुराणस्य कथा परमपावनी॥
एतच्छिवपुराणस्य कथाश्रवणमात्रतः। किं ब्रवीमि फलं तस्य शिवश्चित्तं समाश्रयेत्॥
चतुर्विंशतिसाहस्रो ग्रंथोऽयं सप्तसंहितः। भक्तित्रिकसुसंपूर्णः शृणुयात्तं परादरात्॥
विद्येश्वरसंहिताऽऽद्या द्वितीया रुद्रसंहिता। तृतीया शतरुद्राख्या कोटिरुद्रा चतुर्थिका॥
पञ्चम्युमासंहितोक्ता षष्ठी कैलाससंहिता। सप्तमी वायवीयाख्या सप्तैवं संहिता इह॥
ससप्तसंहितं दिव्यं पुराणं शिवसंज्ञकम्। वरीवर्ति ब्रह्मतुल्यं सर्वोपरिगतिप्रदम्॥
एतच्छिवपुराणं हि सप्तसंहितमादरात्। परिपूर्णं पठेद्यस्तु स जीवन्मुक्त उच्यते॥
पुमानज्ञानतस्तावद्भ्रमतेऽस्मिन्भवे मुने। यावत्कर्णगतं नास्ति पुराणं शैवमुत्तमम्॥
किं श्रुतैर्बहुभिः शास्त्रैः पुराणैश्च भ्रमावहैः। शैवम्पुराणमेकं हि मुक्तिदानेन गर्जति॥
एतच्छिवपुराणस्य कथा भवति यद्गृहे। तीर्थभूतं हि तद्गेहं वसतां पापनाशनम्॥
अश्वमेधसहस्राणि वाजपेयशतानि च। कलां शिवपुराणस्य नार्हन्ति खलु षोडशीम्॥
तावत्स प्रोच्यते पापी पापकृन्मुनिसत्तम। यावच्छिवपुराणं हि न शृणोति सुभक्तितः॥
गंगाद्याः पुण्यनद्यश्च सप्तपुर्यो गया तथा। एतच्छिवपुराणस्य समतां यांति न क्वचित्॥
नित्यं शिवपुराणस्य श्लोकं श्लोकार्द्धमेव च। स्वमुखेन पठेद्भक्त्या यदीच्छेत्परमां गतिम्॥

एतच्छिवपुराणं यो वाचयेदर्थतोऽनिशम्। पठेद्वा प्रीतितो नित्यं स पुण्यात्मा न संशयः॥४३॥
अन्तकाले हि यश्चैनं शृणुयाद्भक्तितः सुधीः। सुप्रसन्नो महेशानस्तस्मै यच्छति स्वं पदम् ॥४४॥
एतच्छिवपुराणं यः पूजयेन्नित्यमादरात्। स भुक्त्वेहाखिलान्कामानंते शिवपदं लभेत् ४५॥
एतच्छिवपुराणस्य कुर्वन्नित्यमतन्द्रितः। पट्टवस्त्रादिना सम्यक् सत्कारं स सुखी सदा॥४६॥
शैवं पुराणममलं शैवसर्वस्वमादरात्। सेवनीयं प्रयत्नेन परत्रेह सुखेप्सुना ॥४७॥
चतुर्वर्गप्रदं शैवं पुराणममलं परम्। श्रोतव्यं सर्वदा प्रीत्या पठितव्यं विशेषतः ॥४८॥
वेदेतिहासशास्त्रेषु परं श्रेयस्करं महत्। शैवं पुराणं विज्ञेयं सर्वथा हि मुमुक्षिभिः ॥४९॥

शैवं पुराणमिदमात्मविदां वरिष्ठं सेव्यं सदा परमवस्तु सतां समर्च्यम् ।
तापत्रयाभिशमनं सुखदं सदैव प्राणप्रियं विधिहरीशमुखामराणाम् ॥५०॥

वन्दे शिवपुराणं हि सर्वदाऽहं प्रसन्नधीः। शिवः प्रसन्नतां यायाद्दद्यात्स्वपदयो रतिम् ॥५१॥

इति श्रीस्कान्दे महापुराणे शिवपुराणमाहात्म्ये तन्महिमवर्णनं नाम प्रथमोऽध्यायः ॥१॥

## अथ द्वितीयोऽध्यायः

### ( देवराजमुक्तिवर्णनम् )

### शौनक उवाच

सूत सूत महाभाग धन्यस्त्वं परमार्थवित्। अद्भुतेयं कथा दिव्या श्राविता कृपया हि नः॥१॥
अघौघविध्वंसकरी मनःशुद्धिविधायिनी। शिवसन्तोषजननी कथेयं नः श्रुताऽद्भुता ॥२॥
एतत्कथासमानं न भुवि किंचित्परात्परम्। निश्चयेनेति विज्ञातमस्माभिः कृपया तव ॥३॥
के के विशुद्धयन्त्यनया कथया पापिनः कलौ। वद तान्कृपया सूत कृतार्थं भुवनं कुरु ॥४॥

### सूत उवाच

ये मानवाः पापकृतो दुराचाररताः खलाः। कामादिनिरता नित्यं तेऽपि शुद्धयन्त्यनेन वै ॥५॥
ज्ञानयज्ञः परोऽयं वै भुक्तिमुक्तिप्रदः सदा। शोधनः सर्वपापानां शिवसन्तोषकारकः ॥६॥
तृष्णाकुलाः सत्यहीनाः पितृमातृविदूषकाः। दाम्भिका हिंसका ये च तेऽपि शुद्धयन्त्यनेन वै॥७॥
स्ववर्णाश्रमधर्मेभ्यो वर्जिता मत्सरान्विताः। ज्ञानयज्ञेन तेऽनेन सम्पुनन्ति कलावपि ॥८॥
छलच्छद्मकरा ये च ये च क्रूराः सुनिर्दयाः। ज्ञानयज्ञेन तेऽनेन सम्पुनन्ति कलावपि ॥९॥
ब्रह्मस्वपुष्टाः सततं व्यभिचाररताश्च ये। ज्ञानयज्ञेन तेऽनेन सम्पुनन्ति कलावपि ॥१०॥

सदा पापरता ये च ये शठाश्च दुराशयाः। ज्ञानयज्ञेन तेऽनेन सम्पुनन्ति कलावपि ॥११
मलिना दुर्धियोंऽशान्ता देवताद्रव्यभोजिनः। ज्ञानयज्ञेन तेऽनेन सम्पुनन्ति कलावपि ॥१२
पुराणस्यास्य पुण्यं सन्महापातकनाशनम्। भुक्तिमुक्तिप्रदं चैव शिवसन्तोषहेतुकम् ॥१३
अत्रैवोदाहरन्तीममितिहासं पुरातनम्। यस्य श्रवणमात्रेण पापहानिर्भवत्यलम् ॥१४
आसीत्किरातनगरे ब्राह्मणो ज्ञानदुर्बलः। दरिद्रो रसविक्रेता देवधर्मपराङ्मुखः ॥१५
सन्ध्यास्नानपरिभ्रष्टो वैश्यवृत्तिपरायणः। देवराज इति ख्यातो विश्वस्तजनवञ्चकः ॥१६
स विप्रान्क्षत्रियान्वैश्याञ्छूद्रांश्चापि तथापरान्। हत्वा नानामिषेणैव तत्तद्धनमपाहरत् ॥१७
अधर्माद्बहुवित्तानि पश्चात्तेनार्जितानि वै। न धर्माय धनं तस्य स्वल्पञ्चापीह पापिनः ॥१८
एकदैकतडागे स स्नातुं यातो महीसुरः। वेश्यां शोभावतीं नाम दृष्ट्वा तत्रातिविह्वलः ॥१९
स्ववशं धनिनं विप्रं ज्ञात्वा हृष्टाऽथ सुन्दरी। वार्तालापेन तच्चित्तं प्रीतिमत्समजायत ॥२०
स्त्रियं कर्तुं स ताम्मेने पतिं कर्तुं च सा तथा। एवं कामवशौ भूत्वा बहुकालं विजह्रतुः ॥२१
आसने शयने पाने भोजने क्रीडने तथा। दम्पतीव सदा द्वौ तु वव्रृताते परस्परम् ॥२२
मात्रा पित्रा तथा पत्न्या वारितोऽपि पुनःपुनः। नामन्यत वचस्तेषां पापवृत्तिपरायणः ॥२३
एकदेर्ष्यावशाद्रात्रौ मातरं पितरं वधूम्। प्रसुप्तान्न्यवधीद्दुष्टो धनन्तेषान्तथाऽहरत् ॥२४
आत्मनीनं धनं यच्च पित्रादीनां तथा धनम्। वेश्यायै दत्तवान्सर्वं कामी तद्गतमानसः ॥२५
सोऽभक्ष्यभक्षकः पापी मदिरापानलालसः। एकपात्रे सदाऽभौक्षीत्सवेश्यो ब्राह्मणाधमः ॥२६
कदाचिद्दैवयोगेन प्रतिष्ठानमुपागतः। शिवालयं ददर्शासौ तत्र साधुजनावृतम् ॥२७
स्थित्वा तत्र च विप्रोऽसौ ज्वरेणातिप्रपीडितः। शुश्राव सततं शैवीं कथां विप्रमुखोद्गताम् ॥२८
देवराजश्च मासान्ते ज्वरेणापीडितो मृतः। बद्धो यमभटैः पाशैर्नीतो यमपुरम्बलात् ॥२९
तावच्छिवगणाः शुभ्रास्त्रिशूलाङ्कितपाणयः। भस्मभासितसर्वाङ्गा रुद्राक्षाञ्चितविग्रहाः ॥३०
शिवलोकात्समागत्य क्रुद्धा यमपुरीं ययुः। ताडयित्वा तु तद्दूतांस्तर्जयित्वा पुनःपुनः ॥३१
देवराजं समामोच्य विमाने परमाद्भुते। उपवेश्य यदा दूताः कैलासं गन्तुमुत्सुकाः ॥३२
तदा यमपुरीमध्ये महाकोलाहलोऽभवत्। धर्मराजस्तु तं श्रुत्वा स्वालयाद्बहिरागमत् ॥३३
दृष्ट्वाऽथ चतुरो दूतान्साक्षाद्रुद्रानिवापरान्। पूजयामास धर्मज्ञो धर्मराजो यथाविधि ॥३४
ज्ञानेन चक्षुषा सर्वं वृत्तान्तं ज्ञातवान्यमः। न भयात्पृष्टवान्किञ्चिच्छम्भोर्दूतान्महात्मनः ॥३५
पूजिताः प्रार्थितास्ते वै कैलासमगमंस्तदा। ददुश्शिवाय साम्बाय तं दयावारिराशये ॥३६
धन्या शिवपुराणस्य कथा परमपावनी। यस्याः श्रवणमात्रेण पापीयानपि मुक्तिभाक् ॥३७

सदाशिवमहास्थानं परं धाम परम्पदम्। यदाहुर्वेदविद्वांसः सर्वलोकोपरि स्थितम् ॥३८॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा अन्येऽपि प्राणिनः। हिंसिता धनलोभेन बहवो येन पापिना ॥३९॥
मातृपितृवधूहन्ता वेश्यागामी च मद्यपः। देवराजो द्विजस्तत्र गत्वा मुक्तोऽभवत्क्षणात् ४०॥

इति श्रीस्कान्दे शिवपुराणमाहात्म्ये देवराजमुक्तिवर्णनं नाम द्वितीयोऽध्यायः ॥२॥

## अथ तृतीयोऽध्यायः

### ( चंचुलावैराग्यवर्णनम् )

### शौनक उवाच

सूत सूत महाभाग सर्वज्ञोऽसि महामते। त्वत्प्रसादात्कृतार्थोऽहं कृतार्थोऽहम्पुनः पुनः ॥१॥
इतिहासमिमं श्रुत्वा मनो मेऽतीव मोदते। अन्यामपि कथां शम्भोर्वद प्रेमविवर्द्धिनीम् ॥२॥
नामृतम्पिबतां लोके मुक्तिः क्वापि सभाज्यते। शम्भोः कथासुधापानं प्रत्यक्षं मुक्तिदायकम् ॥३॥
धन्या धन्या कथा शम्भोस्त्वं धन्यो धन्य एव च। यदाकर्णनमात्रेण शिवलोकं व्रजेन्नरः ॥४॥

### सूत उवाच

शृणु शौनक वक्ष्यामि त्वदग्रे गुह्यमप्युत। यतस्त्वं शिवभक्तानामग्रणीर्वेदवित्तमः ॥५॥
समुद्रनिकटे देशे ग्रामो बाष्कलसंज्ञकः। वसन्ति यत्र पापिष्ठा वेदधर्मोज्झिता जनाः ॥६॥
दुष्टा दुर्विषयात्मानो निर्दैवा जिह्मवृत्तयः। कृषीवलाः शस्त्रधराः परस्त्रीभोगिनः खलाः ॥७॥
ज्ञानवैराग्यसद्धर्मं न जानन्ति परं हि ते। कुकथाश्रवणाढ्येषु निरताः पशुबुद्धयः ॥८॥
अन्ये वर्णाश्च कुधियः स्वधर्मविमुखाः खलाः। कुकर्मनिरता नित्यं सदा विषयिणश्च ते ॥९॥
स्त्रियः सर्वाश्च कुटिलाः स्वैरिण्यः पापलालसाः। कुधियो व्यभिचारिण्यः सद्वृत्ताचारवर्जिताः॥१०॥
एवं कुजनसंवासे ग्रामे बाष्कलसंज्ञिते। तत्रैको बिन्दुगो नाम विप्र आसीन्महाधमः ११॥
स दुरात्मा महापापी सुदारोऽपि कुमार्गगः। वेश्यापतिर्बभूवाथ कामाकुलितमानसः ॥१२॥
स्वपत्नीं चंचुलां नाम हित्वा नित्यं सुधर्मिणीम्। रेमे स वेश्यया दुष्टः स्मरबाणप्रपीडितः ॥१३॥
एवं कालो व्यतीयाय महांस्तस्य कुकर्मणः। सा स्वधर्मभयात्क्लेशात्स्मरार्तापि च चंचुला ॥
अथ तस्याङ्गना सापि प्ररूढनवयौवना। अविषह्यस्मरावेशा स्वधर्माद्विरराम ह ॥१५॥
जारेण संगता रात्रौ रेमे पापेन गुप्ततः। पतिदृष्टिं वञ्चयित्वा भ्रष्टसत्त्वा कुमार्गगा ॥१६॥
कदाचित्तां दुराचारां स्वपत्नीं चंचुलां मुने। जारेण संगतां रात्रौ ददर्श स्मरविह्वलाम् ॥१७॥
दृष्ट्वा तां दूषितां पत्नीं कुकर्मासक्तमानसाम्। जारेण संगतां रात्रौ क्रोधाद्दुद्राव वेगतः ॥१८॥

तमागतं गृहे दुष्टमाज्ञाय बिन्दुगं खलः। पलायितो द्रुतं जारो वेगतश्छद्मवान्स वै ॥१९
अथ स बिन्दुगः पत्नीं गृहीत्वा सुदुराशयः। मुष्टिबन्धेन संतर्ज्य पुनःपुनरताडयत् ॥२०
सा नारी ताडिता भर्त्रा चञ्चुला स्वैरिणी खला। कुपिता निर्भया प्राह स्वपतिं बिन्दुगं खलम् ॥२१

## चंचुलोवाच

भवान्प्रतिदिनं कामं रमते वेश्यया कुधीः। मां विहाय स्वपत्नीं च युवतीं पतिसेविनीम् २२
रूपवत्या युवत्याश्च कामाकुलितचेतसः। विना पतिं विहारं स्यात्का गतिर्मे भवान्वदेत् ॥२३
अहं महारूपवती नवयौवनविह्वला। कथं सहे कामदुःखं तव सङ्गं विनाऽऽर्तधीः ॥२४

## सूत उवाच

इत्युक्तः स तया-मूर्खो मूढधीर्ब्राह्मणोऽधमः। प्रोवाच बिन्दुगः पापी स्वधर्मविमुखः खलः २५

## बिन्दुग उवाच

सत्यमेतत्त्वयोक्तं हि कामव्याकुलचेतसा। हितं वक्ष्यामि तस्मात्ते शृणु कांते भयं त्यज ॥२६
जारैर्विहर नित्यं त्वं चेतसा निर्भयेन वै। धनमाकर्षतेभ्यो हि दत्त्वा तेभ्यः परां रतिम् ॥२७
तद्धनं देहि सर्वं मे वेश्यासंसक्तचेतसः। महत्स्वार्थं भवेन्नूनं तवापि च ममापि च ॥२८

## सूत उवाच

इति भर्तृवचः श्रुत्वा चञ्चुला तद्वधूश्च सा। तथेति भर्तृवचनं प्रतिजग्राह हृष्टधीः ॥२९
कृत्वैवं समयं तौ वै दम्पती दुष्टमानसौ। कुकर्मनिरतौ जातौ निर्भयेन कुचेतसा ॥३०
एवं तयोस्तु दम्पत्योर्दुराचारप्रवृत्तयोः। महान्कालो व्यतीयाय निष्फलो मूढचेतसोः ॥३१
अथ विप्रः स कुमतिर्बिन्दुगो वृषलीपतिः। कालेन निधनं प्राप्तो जगाम नरकं खलः ॥३२
भुक्त्वा नरकदुःखानि बह्वहानि स मूढधीः। विन्ध्येऽभवत्पिशाचो हि गिरौ पापी भयङ्करः ३३
मृते भर्तरि तस्मिन्वै दुराचारेऽथ बिन्दुगे। उवास स्वगृहे पुत्रैश्चिरकालं विमूढधीः ॥३४
एवं विहरती जारैः सा नारी चञ्चुलाह्वया। आसीत्कामरता प्रीता किञ्चिदुत्क्रान्तयौवना ३५
एकदा दैवयोगेन सम्प्राप्ते पुण्यपर्वणि। सा नारी बन्धुभिः सार्द्धं गोकर्णं क्षेत्रमाययौ ॥३६
प्रसङ्गात्सा तदा गत्वा कस्मिंश्चित्तीर्थपाथसि। सस्नौ सामान्यतो यत्र तत्र बभ्राम बन्धुभिः ३७
देवालयेऽथ कस्मिंश्चिद्दैवज्ञमुखतः शुभाम्। शुश्राव सत्कथां शम्भोः पुण्यां पौराणिकीं च सा ३८
योषितां जारसक्तानां नरके यमकिङ्कराः। संतप्तलोहपरिघं क्षिपन्ति स्मरमन्दिरे ॥३९
इति पौराणिकेनोक्तां श्रुत्वा वैराग्यवर्द्धिनीम्। कथामासीद्भयोद्विग्ना चकम्पे तत्र सा च वै ॥४०
कथासमाप्तौ सा नारी निर्गतेषु जनेषु च। भीता रहसि तं प्राह शैवं संवाचकं द्विजम् ४१

चंचुलोवाच

ब्रह्मंस्त्वं श्रृण्वसद्वृत्तमजानन्त्या स्वधर्मकम्। श्रुत्वा मामुद्धर स्वामिन्कृपां कृत्वातुलामपि ॥४२॥
चरितं सूल्बणं पापं मया मूढधिया प्रभो। नीतं पौंश्चल्यतः सर्वं यौवनं मदनान्धया ॥४३॥
श्रुत्वेदं वचनं तेऽद्य वैराग्यरसजृम्भितम्। जाता महाभया साऽहं सकम्पात्तवियोगिका ॥४४॥
धिङ् मां मूढधियं पापां काममोहितचेतसम्। निन्द्यां दुर्विषयासक्तां विमुखीं हि स्वधर्मतः ४५
यदल्पस्य सुखस्यार्थे स्वकार्यस्य विनाशिनः। महापापं कृतं घोरमजानन्त्याऽतिकष्टदम् ॥४६॥
यास्यामि दुर्गतिं कां कां घोरां हा कष्टदायिनीम्। को ज्ञो यास्यति मां तत्र कुमार्गरतमानसाम् ॥
मरणे यमदूताँस्तान्कथं द्रक्ष्ये भयंकरान्। कथं पाशैर्बलात्कण्ठे बध्यमाना धृतिं लभे ॥४८॥
कथं सहिष्ये नरके खंडशो देहकृन्तनम्। यातनां तत्र महतीं दुःखदां च विशेषतः ॥४९॥
दिवा चेष्टामिन्द्रियाणां कथं प्राप्स्यामि शोचती। रात्रौ कथं लभिष्येऽहं निद्रां दुःखपरिप्लुता ॥
हा हतास्मि च दग्धास्मि विदीर्णहृदयास्मि च। सर्वथाऽहं विनष्टाऽस्मि पापिनी सर्वथाप्यहम् ॥
हा विधे मां महापापे तत्त्वा दुःशेमुषीं हठात्। अपैति यत्स्वधर्माद्वै सर्वसौख्यकरादहो ॥५२॥
शूलप्रोतस्य शैलाग्रात्पततस्तुङ्गतो द्विज। यद्दुःखं देहिनो घोरं तस्मात्कोटिगुणं मम ॥५३॥
अश्वमेधशतं कृत्वा गंगां स्नात्वा शतं समाः। न शुद्धिर्जायते प्रायो मत्पापस्य गरीयसः ॥५४॥
किं करोमि क्व गच्छामि कं वा शरणमाश्रये। कस्त्रायेत मां लोकेऽस्मिन्पतन्तीं नरकार्णवे ॥५५॥
त्वमेव मे गुरुर्ब्रह्मंस्त्वं माता त्वं पिताऽसि च। उद्धरोद्धर मां दीनां त्वमेव शरणं गताम् ॥५६॥

सूत उवाच

इति संजातनिर्वेदां पतिताञ्चरणद्वये। उत्थाप्य कृपया धीमान्बभाषे ब्राह्मणः स हि ५७॥

इति श्रीस्कान्दे शिवपुराणमाहात्म्ये चंचुलावैराग्यवर्णनं नाम तृतीयोऽध्यायः ॥३॥

## अथ चतुर्थोऽध्यायः

### ( चंचुलायाः सद्गतिः )

ब्राह्मण उवाच

दिष्ट्या काले प्रबुद्धासि शिवानुग्रहतो वराम्। इमां शिवपुराणस्य श्रुत्वा वैराग्यवत्कथाम्॥ १ ॥
मा भैषीर्द्विजपत्नि त्वं शिवस्य शरणं व्रज। शिवानुग्रहतः सर्वं पापं सद्यो विनश्यति ॥ २ ॥
वक्ष्यामि ते परं वस्तु शिवकीर्तिसमन्वितम्। भविष्यति गतिर्येन सर्वदा ते सुखावहा ॥ ३ ॥
सत्कथाश्रवणादेव जाता ते मतिरीदृशी। पश्चात्तापान्विता शुद्धा वैराग्यं विषयेषु च ॥ ४ ॥
पश्चात्तापः पापकृतां पापानां निष्कृतिः परा। सर्वेषां वर्णितं सद्भिः सर्वपापविशोधनम् ॥ ५ ॥

पश्चात्तापेनैव शुद्धिः प्रायश्चित्तं करोति सः। यथोपदिष्टं सद्भिर्हि सर्वपापविशोधनम् ॥६
प्रायश्चित्तमधीकृत्य विधिवन्निर्भयः पुमान्। स याति सुगतिं प्रायः पश्चात्तापी न संशयः ॥७
एतच्छिवपुराणस्य कथाश्रवणतो यथा। जायते चित्तशुद्धिर्हि न तथान्यैरुपायतः ॥८
शोध्यमानं दर्पणं हि यथा भवति निर्मलम्। तथैतत्कथया चेतो विशुद्धिं यात्यसंशयम् ॥९
विशुद्धे चेतसि शिवो नृणां तिष्ठति साम्बिकः। ततो याति विशुद्धात्मा साम्बशंभोः परं पदम् ॥१०
अतः सर्वस्य वर्गस्यैतत्कथासाधनं मतम्। एतदर्थं महादेवो निर्ममे त्वाग्रहादिमाम् ॥११
कथया सिद्ध्यति ध्यानमनया गिरिजापतेः। ध्यानाज्ज्ञानं परं तस्मात्कैवल्यं भवति ध्रुवम् ॥१२
असिद्धशंकरध्यानः कथामेव शृणोति यः। स प्राप्यान्यभवे ध्यानं शंभोर्याति परां गतिम् ॥१३
एतत्कथाश्रवणतः कृत्वा ध्यानमुमापतेः। ते पश्चात्तापिनः पापा बहवः सिद्धिमागताः ॥१४
सर्वेषां श्रेयसां बीजं सत्कथाश्रवणं नृणाम्। यथावत्संसमाराध्यं भवबन्धगदापहम् ॥१५
कथाश्रवणतः शम्भोर्मननाच्च ततो हृदा। निदिध्यासनतश्चैव चित्तशुद्धिर्भवत्यलम् ॥१६
अतो भक्तिर्महेशस्य पुत्राभ्यां भवति ध्रुवम्। तदनुग्रहतो दिव्या ततो मुक्तिर्न संशयः ॥१७
तद्विहीनः पशुर्ज्ञेयो मायाबन्धनसक्तधीः। संसारबन्धनान्नैव मुक्तो भवति स ध्रुवम् ॥१८
अतो हि द्विजपत्नि त्वं विषयेभ्यो निवृत्तधीः। शृणु शंभोः कथां चैतां भक्त्या परमपावनीम् ॥१९
शृण्वन्त्याः सत्कथामेतां शंकरस्य परात्मनः। शुद्धिमेष्यति चेतस्ते ततो मुक्तिमवाप्स्यसि ॥२०
ध्यायतः शिवपादाब्जं चेतसा निर्मलेन वै। एकेन जन्मना मुक्तिः सत्यं सत्यं वदाम्यहम् ॥२१

सूत उवाच

इत्युक्त्वा स द्विजवरो वरः शैवः कृपार्द्रधीः। तूष्णीं बभूव शुद्धात्मा शिवध्यानपरायणः ॥२२
अथ बिंदुगपत्नी सा चंचुलाह्वा प्रसन्नधीः। इत्युक्ता तेन विप्रेण समासीद्बाष्पलोचना ॥२३
पपातारं द्विजेन्द्रस्य पादयोस्तस्य हृष्टधीः। चंचुला साञ्जलिः सा च कृतार्थास्मीत्यभाषत ॥२४
अथ सोत्थाय सातंका साञ्जलिर्गद्गदाक्षरम्। तमुवाच महाशैवं द्विजं वैराग्ययुक्सुधीः ॥२५

चंचुलोवाच

ब्रह्मञ्छैववर स्वामिन्धन्यस्त्वं परमार्थदृक्। परोपकारनिरतो वर्णनीयः सुसाधुषु ॥२६
उद्धरोद्धर मां साधो पतन्तीं नरकार्णवे। श्रुत्वा यां सुकथां शैवीं पुराणार्थविजृम्भिताम् २७
विरक्तधीरहं जाता विषयेभ्यश्च सर्वतः। सुश्रद्धा महती ह्येतत्पुराणश्रवणेऽधुना ॥२८

सूत उवाच

इत्युक्त्वा साञ्जलिः सा वै संप्राप्य तदनुग्रहम्। तत्पुराणं श्रोतुकामाऽतिष्ठत्तत्सेवने रता ॥२९
अथ शैववरो विप्रस्तस्मिन्नेव स्थले सुधीः। सत्कथां श्रावयामास तत्पुराणस्य तां स्त्रियम् ३०

इत्थं तस्मिन्महाक्षेत्रे तस्मादेव द्विजोत्तमात्। कथां शिवपुराणस्य सा शुश्राव महोत्तमाम् ॥३१॥
भक्तिज्ञानविरागाणां वर्द्धिनीं मुक्तिदायिनीम्। बभूव सुकृतार्था सा श्रुत्वा तां सत्कथां पराम् ३२
सद्गुरोस्तस्य कृपया शुद्धचित्ता च सा द्रुतम्। शिवानुग्रहतः शम्भोः रूपध्यानमवाप ह ॥३३॥
इत्थं सद्गुरुमाश्रित्य सा प्राप्तशिवसन्मतिः। दध्यौ मुहुर्मुहुः शम्भोश्चिदानन्दमयं वपुः ॥३४॥
स्नात्वा तीर्थजले नित्यं जटावल्कलधारिणी। भस्मोद्धूलितसर्वाङ्गी रुद्राक्षकृतभूषणा ॥३५॥
शिवनामजपासक्ता वाग्यता मितभोजना। गुरूपदिष्टमार्गेण सा शिवं समतोषयत् ॥३६॥
एवं तस्याश्चंचुलायाः कुर्वंत्या ध्यानमुत्तमम्। बहुकालो व्यतीयाय शंभोस्तत्रैव शौनक ॥३७॥
अथ कालेन पूर्णेन भक्तित्रिकसमन्विता। समुत्ससर्ज देहं स्वमनायासेन चंचुला ॥३८॥
विमानं द्रुतमायांतं प्रेषितं त्रिपुरारिणा। दिव्यं स्वगणसंयुक्तं नानाशोभासमन्वितम् ३९॥
अथ तत्र समारूढा महेशानुचरैर्वरैः। नीता शिवपुरीं सद्यो ध्वस्तसर्वमला च सा ॥४०॥
दिव्यरूपधरा दिव्या दिव्यावयवशालिनी। चन्द्रार्द्धशेखरा गौरी विलसद्दिव्यभूषणा ॥४१॥
गत्वा तत्र महादेवं सा ददर्श त्रिलोचनम्। विष्णुब्रह्मादिभिर्देवैः सेव्यमानं सनातनम् ॥४२॥
गणेशभृङ्गिनन्दीशवीरभद्रेश्वरादिभिः। उपास्यमानं सद्भक्त्या कोटिसूर्य्यसमप्रभम् ॥४३॥
नीलग्रीवं पञ्चवक्त्रं त्र्यम्बकं चन्द्रशेखरम्। वामाङ्गे बिभ्रतं गौरीं विद्युत्पुञ्जसमप्रभाम् ॥४४॥
कर्पूरगौरं गौरीशं सर्वालंकारधारिणम्। सितभस्मलसद्देहं सितवस्त्रं महोज्ज्वलम् ॥४५॥
दृष्ट्वैवं शंकरं नारी सा मुमोदातिचंचुला। सुसंभ्रमान्महाप्रीता प्रणनाम पुनः पुनः ॥४६॥
बद्धाञ्जलिः सा मुदा प्रेम्णा सन्तुष्टा च विनीतका। आनन्दाश्रुजलैर्युक्ता रोमहर्षसमन्विता ॥४७॥
अथ सा वै करुणया पार्वत्या शंकरेण च। समानीतोपकण्ठं हि सुदृष्टया च विलोकिता ॥४८॥
पार्वत्या सा कृता प्रीत्या स्वसखी दिव्यरूपिणी। दिव्यसौख्यान्विता तत्र चंचुला बिन्दुगप्रिया ॥
तस्मिँल्लोके परानंदघनज्योतिषि शाश्वते। लब्ध्वा निवासमचलं लेभे सुखमनाहतम् ॥५०॥

इति श्रीस्कान्दे शिवपुराणमाहात्म्ये चंचुलासद्गतिवर्णनं नाम चतुर्थोऽध्यायः ॥४॥

## अथ पञ्चमोऽध्यायः

### ( बिन्दुगसद्गतिः )

**शौनक उवाच**

सूत सूत महाभाग धन्यस्त्वं शिवसक्तधीः। श्रावितेयं कथास्माकमद्भुता भक्तिवर्द्धिनी ॥ १ ॥
गत्वा किं चकार चंचुला प्राप्तसद्गतिः। तत्त्वं वद विशेषेण तत्पतेश्च महामते ॥ २ ॥

**सूत उवाच**

कदाचिदुमां देवीमुपगम्य प्रणम्य च। सुतुष्टाव करौ बद्ध्वा परमानन्दसंप्लुता ॥ ३ ॥

## चंचुलोवाच

गिरिजे स्कन्दमातस्त्वं सेविता सर्वदा नरैः। सर्वसौख्यप्रदे शम्भुप्रिये ब्रह्मस्वरूपिणि ॥
विष्णुब्रह्मादिभिःसेव्या सगुणा निर्गुणापि च। त्वमाद्या प्रकृतिःसूक्ष्मा सच्चिदानन्दरूपिणी ॥
सृष्टिस्थितिलयकरी त्रिगुणा त्रिसुरालया। ब्रह्मविष्णुमहेशानां सुप्रतिष्ठाकरा परा ॥

## सूत उवाच

इति स्तुत्वा महेशीं तां चंचुला प्राप्तसद्गतिः। विरराम नतस्कन्धा प्रेमपूर्णाश्रुलोचना ॥
ततः सा करुणाविष्टा पार्वती शंकरप्रिया। तामुवाच महाप्रीत्या चंचुलां भक्तवत्सला ॥

## पार्वत्युवाच

चंचुले सखि सुप्रीतानया स्तुत्यास्मि सुन्दरि। किं याचसे वरं ब्रूहि नादेयं विद्यते तव ॥

## सूत उवाच

इत्युक्ता सा गिरिजया चंचुला सुप्रणम्य ताम्। पर्यपृच्छत सुप्रीत्या साञ्जलिर्नतमस्तका ॥

## चंचुलोवाच

मम भर्ताधुना क्वास्ते नैव जानामि तद्गतिम्। तेन युक्ता यथाहं वै भवामि गिरिजेऽनघे ॥
तथैव कुरु कल्याणि कृपया दीनवत्सले।
महादेवि महेशानि भर्ता मे वृषलीपति। मत्तः पूर्वं मृतः पापी न जाने कां गतिं गतः ॥

## सूत उवाच

इत्याकर्ण्य वचस्तस्याश्चंचुलाया हि पार्वती। प्रत्युवाच सुसंप्रीत्या गिरिजा नयवत्सला ॥

## गिरिजोवाच

सुते भर्ता बिन्दुगाह्वो महापापी दुराशयः। वेश्याभोगी महामूढो मृत्वा स नरकं गतः ॥
भुक्त्वा नरकदुःखानि विविधान्यमिताः समाः। पापशेषेण पापात्मा विन्ध्ये जातः पिशाचः ॥
इदानीं स पिशाचोऽस्ति नानाक्लेशसमन्वितः। तत्रैव वातभुग्दुष्टः सर्वकष्टवहः सदा ॥

## सूत उवाच

इति गौर्य्या वचः श्रुत्वा चंचुला सा शुभव्रता। पतिदुःखेन महता दुःखिताऽऽसीत्तदा किल ॥
समाधाय ततश्चित्तं सुप्रणम्य महेश्वरीम्। पुनः पप्रच्छ सा नारी हृदयेन विदूयता ॥

## चंचुलोवाच

महेश्वरि महादेवि कृपां कुरु ममोपरि। समुद्धर पतिं मेऽद्य दुष्टकर्मकरं खलम् ॥
केनोपायेन मे भर्ता पापात्मा स कुबुद्धिमान्। सद्गतिं प्राप्नुयाद्देवि तद्वदाशु नमोऽस्तु ते ॥

### सूत उवाच

त्याकर्ण्य वचस्तस्याः पार्वती भक्तवत्सला। प्रत्युवाच प्रसन्नात्मा चंचुलां स्वसखीं च ताम् २१॥

### पार्वत्युवाच

णुयाद्यदि ते भर्ता पुण्यां शिवकथां पराम्। निस्तीर्य दुर्गतिं सर्वां सद्गतिं प्राप्नुयादिति ॥२२॥
ति गौर्य्या वचः श्रुत्वाऽमृताक्षरमथादरात्। कृताञ्जलिर्नतस्कन्धा प्रणनाम पुनः पुनः ॥२३॥
त्कथाश्रवणं भर्तुः सर्वपापविशुद्धये। सद्गतिप्राप्तये चैव प्रार्थयामास तां तदा ॥२४॥

### सूत उवाच

या मुहुर्मुहुर्नार्या प्रार्थ्यमाना शिवप्रिया। गौरी कृपान्वितासीत्सा महेशी भक्तवत्सला ॥२५॥
थ तुंबुरुमाहूय शिवसत्कीर्तिगायकम्। प्रीत्या गन्धर्वराजं हि गिरिकन्येदमब्रवीत् ॥२६॥

### गिरिजोवाच

तुंबुरो शिवप्रीत मम मानसकारक। सहानया विन्ध्यशैलं भद्रं ते गच्छ सत्वरम् ॥२७॥
ास्ते तत्र महाघोरः पिशाचोऽतिभयंकरः। तद्वृत्तं शृणु सुप्रीत्याऽऽदितः सर्वं ब्रवीमि ते ॥२८॥
राभवे पिशाचः स बिन्दुगाह्वोऽभवद्द्विजः। अस्या नार्याः पतिर्दुष्टो मत्सख्या वृषलीपतिः २९॥
ानसंध्याक्रियाहीनोऽशौचः क्रोधविमूढधीः। दुर्भक्षो सज्जनद्वेषी दुष्परिग्रहकारकः ॥३०॥
सकः शस्त्रधारी च सव्यहस्तेन भोजनी। दीनानां पीडकः क्रूरः परवेश्मप्रदीपकः ॥३१॥
ाण्डलाभिरतो नित्यं वेश्याभोगी महाखलः। स्वपत्नीत्यागकृत्पापी दुष्टसंगरतस्तदा ॥३२॥
न वेश्याकुसंगेन सुकृतं नाशितं महत्। वित्तलोभेन महिषी निर्भया जारिणी कृता ॥३३॥
ामृत्योः स दुराचारी कालेन निधनं गतः। ययौ यमपुरं घोरंभोगस्थानं हि पापिनाम् ॥३४॥
त्र भुक्त्वा स दुष्टात्मा नरकानि बहूनि च। इदानीं स पिशाचोऽस्ति विंध्येऽद्रौ पापभुक्खलः
स्याग्रे परमां पुण्यां सर्वपापविनाशिनीम्। दिव्यां शिवपुराणस्य कथाङ्कथय यत्नतः ॥३६॥
र्तं शिवपुराणस्य कथाश्रवणतः परात्। सर्वपापविशुद्धात्मा हास्यति प्रेततां च सः ॥३७॥
क्तं च दुर्गतेस्तं वै बिन्दुगं त्वं पिशाचकम्। मदाज्ञया विमानेन समानय शिवान्तिकम् ॥३८॥

### सूत उवाच

त्यादिष्टो महेशान्या गन्धर्वेन्द्रश्च तुंबुरुः। मुमुदेऽतीव मनसि भाग्यं निजमवर्णयत् ॥३९॥
ारुह्य सुविमानं स सत्या तत्प्रियया सह। ययौ विंध्याचले सोऽरं यत्रास्ते नारदप्रियः ॥४०॥
त्रापश्यत्पिशाचं तं महाकायं महाहनुम्। प्रहसन्तं रुदन्तं च वल्गंतं विकटाकृतिम् ॥४१॥
लाजग्राह तं पाशैः पिशाचं चातिभीकरम्। तुम्बुरुश्शिवसत्कीर्तिगायकश्च महाबली ॥४२॥
थो शिवपुराणस्य वाचनार्थं स तुम्बुरुः। निश्चित्य रचनां चक्रे महोत्सवसमन्विताम् ॥४३॥

पिशाचं तारितुं देव्याः शासनात्तुम्बुरुर्गतः। विंध्यं शिवपुराणं स ह्यद्रिं श्रावयितुं परम्॥
इति कोलाहलो जातः सर्वलोकेषु वै महान्। तत्र तच्छ्रवणार्थाय ययुर्देवर्षयो द्रुतम्॥
समाजस्तत्र परमोऽद्भुतश्चासीच्छुभावहः। तेषां शिवपुराणस्यागतानां श्रोतुमादरात्॥
पिशाचमथ तं पाशैर्बद्ध्वा समुपवेश्य च। तुंबुरुर्वल्लकीहस्तो जगौ गौरीपतेः कथाम्॥
आरभ्य संहितामाद्यां सप्तमीसंहितावधि। स्पष्टं शिवपुराणं हि समाहात्म्यं समान्वदत्॥
श्रुत्वा शिवपुराणं तु सप्तसंहितमादरात्। बभूवुः सुकृतार्थास्ते सर्वे श्रोतार एव हि॥
स पिशाचो महापुण्यं श्रुत्वा शिवपुराणकम्। विधूय कलुषं सर्वं जहौ पैशाचिकं वपुः॥
दिव्यरूपो बभूवाशु गौरवर्णः सितांशुकः। सर्वालंकारदीप्ताङ्गस्त्रिनेत्रश्चन्द्रशेखरः॥
दिव्यं दिव्यवपुर्भूत्वा तया स निजकान्तया। जगौ स्वयमपि श्रीमांश्चरितं पार्वतीपतेः॥
तद्वधूमिति संदृष्ट्वा सर्वे देवर्षयश्च ते। बभूवुर्विस्मिताश्चित्ते परमानन्दसंयुताः॥
सुकृतार्था महेशस्य श्रुत्वा चरितमद्भुतम्। स्वं स्वं धाम ययुः प्रीत्या शंसन्तः शांकरं य
बिन्दुगः सोऽपि दिव्यात्मा सुविमानस्थितःसुखी। स्वकान्तापार्श्वगः श्रीमाञ्छुशुभेऽतीव ख
अथ गायन्महेशस्य सुगुणान्सुमनोहरान्। स तुंबुरुर्जगामाशु सकान्तः शाङ्करं पदम्॥
सुसत्कृतो महेशेन पार्वत्या च स बिन्दुगः। स्वगणश्च कृतः प्रीत्या साऽभवद्गिरिजासखी॥
तस्मिँल्लोके परानन्दे घनज्योतिषि शाश्वते। लब्ध्वा निवासमचलं लभते परमं सुखम्॥
इत्येतत्कथितं पुण्यमितिहासमघापहम्। शिवाशिवपरानन्दं निर्मलं भक्तिवर्द्धनम्॥
य इदं शृणुयाद्भक्त्या कीर्तयेद्वा समाहितः। स भुक्त्वा विपुलान्भोगानन्ते मुक्तिमवाप्नुयात्॥

इति श्रीस्कान्दे शिवपुराणमाहात्म्ये बिन्दुगसद्गतिवर्णनं नाम पंचमोऽध्यायः॥ ५॥

## अथ षष्ठोऽध्यायः

### ( शिवपुराणश्रवणविधिः )

### शौनक उवाच

सूत सूत महाप्राज्ञ व्यासशिष्य नमोऽस्तु ते। धन्यस्त्वं शैववर्योऽसि वर्णनीयमहद्गुणः॥
श्रीमच्छिवपुराणस्य श्रवणस्य विधिं वद। येन सर्वं लभेच्छ्रोता सम्पूर्णं फलमुत्तमम्॥

### सूत उवाच

अथ ते संप्रवक्ष्यामि संपूर्णफलहेतवे। विधिं शिवपुराणस्य शौनक श्रवणे मुने॥
दैवज्ञं च समाहूय सन्तोष्य च जनान्वितः। मुहूर्तं शोधयेच्छुद्धं निर्विघ्नेन समाप्तये॥

वार्ता प्रेष्या प्रयत्नेन देशे देशे च सा शुभा ।
भविष्यति कथा शैवी आगन्तव्यं शुभार्थिभिः ॥ ५ ॥

रे हरिकथाः केचिद्दूरे शंकरकीर्तनाः। स्त्रियः शूद्रादयो ये च बोधस्तेषां भवेद्यतः ॥ ६ ॥
शे देशे शांभवा ये कीर्तनश्रवणोत्सुकाः। तेषामानयनं कार्यं तत्प्रकारार्थमादरात् ॥ ७ ॥
विष्यति समाजोऽत्र साधूनां परमोत्सवः। पारायणे पुराणस्य शैवस्य परमाद्भुतः ॥ ८ ॥
मच्छिवपुराणाह्वरसपानाय चादरात्। आयांत्वरं भवन्तश्च कृपया प्रेमतत्पराः ॥ ९ ॥
वकाशो यदि प्रेम्णागन्तव्यं दिनमेककम्। सर्वथाऽऽगमनं कार्यं दुर्लभा च क्षणस्थितिः ॥१०॥
मामाह्वानमेवं हि कार्यं सविनयं मुदा। आगतानां च तेषां हि सर्वथा कार्य्य आदरः ॥११॥
वालये च तीर्थे वा वने वापि गृहेऽथवा। कार्यं शिवपुराणस्य श्रवणस्थलमुत्तमम् ॥१२॥
र्यं संशोधनं भूमेर्लेपनं धातुमण्डनम्। विचित्रा रचना दिव्या महोत्सवपुरःसरम् ॥१३॥
होपस्करमुद्धृत्य निखिलं तदयोग्यकम्। एकान्ते गृहकोणे चादृश्ये यत्नान्निवेशयेत् ॥१४॥

कर्तव्यो मण्डपोऽत्युच्चैः कदलीस्तंभमण्डितः ।
फलपुष्पादिभिः सम्यग्विष्वग्वैतानराजितः ॥१५॥

तुर्दिक्षु ध्वजारोपः सपताकः सुशोभनः। सुभक्तिः सर्वथा कार्या सर्वानन्दविधायिनी ॥१६॥
कल्प्यमासनं दिव्यं शंकरस्य परात्मनः। वक्तुश्चापि तथा दिव्यमासनं सुखसाधनम् ॥१७॥
तॄणां कल्पनीयानि सुस्थलानि यथार्हतः। अन्येषां च स्थलान्येव साधारणतया मुने ॥१८॥

विवाहे यादृशं चित्तं तादृशं कार्यमेव हि ।
अन्या चिन्ता विनिर्वार्य्या सर्वा शौनक लौकिकी ॥१९॥

दङ्मुखो भवेद्वक्ता श्रोता प्राग्वदनस्तथा। व्युत्क्रमः पादयोर्ज्ञेयो विरोधो नास्ति कश्चन ॥२०॥
थवा पूर्वदिग्ज्ञेया पूज्यपूजकमध्यतः। अथवा संमुखं वक्तुः श्रोतॄणामासनं स्मृतम् ॥२१॥
ासनसमारूढो यदा पौराणिको द्विजः। असमाप्तौ प्रसंगस्य नमस्कुर्यान्न कस्यचित् ॥२२॥
लो युवाथ वृद्धो वा दरिद्रो वापि दुर्बलः। पुराणज्ञः सदा वंद्यः पूज्यश्च सुकृतार्थिभिः ॥२३॥

नीचबुद्धिं न कुर्वीत पुराणज्ञे कदाचन ।
यस्य वक्त्रोद्गता वाणी कामधेनुः शरीरिणाम् ॥२४॥

गुरुवत्सन्ति बहवो जन्मतो गुणतश्च वै ।
परो गुरुः पुराणज्ञस्तेषां मध्ये विशेषतः ॥२५॥

भवकोटिसहस्रेषु भूत्वा भूत्वाऽवसीदताम् ।
यो ददाति परां मुक्तिं कोऽन्यस्तस्मात्परो गुरुः ॥२६॥

पुराणज्ञः शुचिर्दक्षः शान्तो विजितमत्सरः ।
साधुः कारुण्यवान्वाग्मी वदेत्पुण्यकथामिमाम् ॥२७॥
आसूर्योदयमारभ्य सार्द्धद्विप्रहरान्तकम् ।
कथा शिवपुराणस्य वाच्या सम्यक् सुधीमता ॥२८॥
ये धूर्ता ये च दुर्वृत्ता ये चान्ये विजिगीषवः । तेषां कुटिलवृत्तीनामग्रे नैव वदेत्कथाम् ॥
न दुर्जनसमाकीर्णे न तु दस्युसमावृते । देशे न धूर्तसदने वदेत्पुण्यकथामिमाम् ॥
कथाविरामः कर्त्तव्यो मध्याह्ने हि मुहूर्त्तकम् । मलमूत्रोत्सर्जनार्थं तत्कथाकीर्तनान्नरैः ॥
वक्त्रा क्षौरं हि संकार्यं दिनादर्वाग्व्रताप्तये । कार्यं संक्षेपतो नित्यकर्म सर्वं प्रयत्नतः ॥
वक्तुः पार्श्वे सहायार्थमन्यः स्थाप्यस्तथाविधः ।
पण्डितः संशयच्छेत्ता लोकबोधनतत्परः ॥३३॥
कथाविघ्नविनाशार्थं गणनाथं प्रपूजयेत् ।
कथाधीशं शिवं भक्त्या पुस्तकं च विशेषतः ॥३४॥
कथां शिवपुराणस्य शृणुयादादरात्सुधीः ।
श्रोता सुविधिना शुद्धः शुद्धचित्तः प्रसन्नधीः ॥३५॥
अनेककर्मविभ्रान्तः कामादिषड्विकारवान् ।
स्त्रैणः पाखण्डवादी च वक्ता श्रोता न पुण्यभाक् ॥३६॥
लोकचिन्तां धनागारपुत्रचिंतां व्युदस्य च । कथाचित्तः शुद्धमतिः स लभेत्फलमुत्तमम् ॥
श्रद्धाभक्तिसमायुक्ता नान्यकार्येषु लालसः ।
वाग्यताः शुचयोऽव्यग्राः श्रोतारः पुण्यभागिनः ॥३८॥
अभक्ता ये कथां पुण्यां शृण्वंतीमां नराधमाः । तेषां श्रवणजं नास्ति फलं दुःखं भवे भवे ॥
असम्पूज्य पुराणं ये यथाशक्त्या ह्युपायनैः ।
शृण्वन्तीमां कथां मूढाः स्युर्दरिद्रा न पावनाः ॥४०॥
कथायां कथ्यमानायां गच्छन्त्यन्यत्र ये नराः । भोगान्तरे प्रणश्यन्ति तेषां दारादिसम्पदः ॥
सोष्णीषमस्तका ये च शृण्वन्तीमां कथां नराः । तत्पुत्राश्च प्रजायन्ते पापिनः कुलदूषकाः ॥
ताम्बूलं भक्षयन्तो ये शृण्वन्तीमां कथां नराः । स्वविष्ठां खादयन्त्येतान्नरके यमकिंकराः ॥
ये च तुङ्गासनारूढाः शृण्वन्तीमां कथां नराः । भुक्त्वा ते नरकान्सर्वांस्ततः काका भवन्ति हि ॥
ये वीराद्यासनारूढाः शृण्वन्तीमां कथां शुभाम् ।
भुक्त्वा ते नरकान्सर्वान्विषवृक्षा भवन्ति वै ॥४५॥

असम्प्रणम्य वक्तारं कथां श्रृण्वन्ति ये नराः। भुक्त्वा ते नरकान्सर्वान्भवंत्यर्जुनपादपाः ॥४६॥
अनातुराः शयाना ये श्रृण्वंतीमां कथां नराः। भुक्त्वा ते नरकान्सर्वान्भवन्त्यजगरादयः ॥४७॥
वक्तुः समासनारूढा ये श्रृण्वन्ति कथामिमाम्। गुरुतल्पसमं पापं प्राप्यते नारकैः सदा ॥४८॥

ये निन्दन्ति च वक्तारं कथां चेमां सुपावनीम् ।
भवन्ति शुनका भुक्त्वा दुःखं जन्मशतं हि ते ॥४९॥

कथायां वर्तमानायां दुर्वादं ये वदंति हि। भुक्त्वा ते नरकान्घोरान्भवंति गर्दभास्ततः ॥५०॥
कदाचिन्नापि श्रृण्वन्ति कथामेतां सुपावनीम्। भुक्त्वा ते नरकान्घोरान्भवंति वनसूकराः ॥५१॥

कथायां कीर्त्यमानायां विघ्नं कुर्वंति ये खलाः ।
कोट्यब्दं नरकान्भुक्त्वा भवंति ग्रामसूकराः ॥५२॥
एवं विचार्य शुद्धात्मा श्रोता वक्तृसुभक्तिमान् ।
कथाश्रवणहेतोर्हि भवेत्प्रीत्योद्यतः सुधीः ॥५३॥

कथाविघ्नविनाशार्थं गणेशं पूजयेत्पुरा। नित्यं संपाद्य संक्षेपात्प्रायश्चित्तं समाचरेत् ॥५४॥
नवग्रहाँश्च सम्पूज्य सर्वतोभद्रदैवतम्। शिवपूजोक्तविधिना पुस्तकं तत्समर्चयेत् ॥५५॥
पूजनांते महाभक्त्या करौ बद्ध्वा विनीतकः। साक्षाच्छिवस्वरूपस्य पुस्तकस्य स्तुतिं चरेत्॥५६॥
श्रीमच्छिवपुराणाख्यः प्रत्यक्षस्त्वं महेश्वरः। श्रवणार्थं स्वीकृतोऽसि सन्तुष्टो भव वै मयि ॥५७॥
मनोरथो मदीयोऽयं कर्तव्यः सफलस्त्वया। निर्विघ्नेन सुसम्पूर्णं कथाश्रवणमस्तु मे ॥५८॥
भवाब्धिमग्नं दीनं मां समुद्धर भवार्णवात्। कर्मग्राहगृहीताङ्गं दासोऽहं तव शंकर ॥५९॥

एवं शिवपुराणं हि साक्षाच्छिवस्वरूपकम् ।
स्तुत्वा दीनवचः प्रोच्य वक्तुः पूजां समारभेत् ॥६०॥

शिवपूजोक्तविधिना वक्तारं च समर्चयेत्। सपुष्पवस्त्रभूषाभिर्धूपदीपादिनाऽर्चयेत् ॥६१॥
तदग्रे शुद्धचित्तेन कर्तव्यो नियमस्तदा। आसमाप्ति यथाशक्त्या धारणीयः सुयत्नतः ॥६२॥
व्यासरूप प्रबोधाग्र्य शिवशास्त्रविशारद। एतत्कथाप्रकाशेन मदज्ञानं विनाशय ॥६३॥
वरणं पञ्चविप्राणां कार्यं वैकस्य भक्तितः। शिवपञ्चार्णमन्त्रस्य जपः कार्य्यश्च तैः सदा ॥६४॥

इत्युक्तस्ते मुने भक्त्या कथाश्रवणसद्विधिः ।
श्रोतॄणां चैव भक्तानां किमन्यच्छ्रोतुमिच्छसि ॥६५॥

इति श्रीस्कान्दे शिवपुराणमाहात्म्ये श्रवणविधिवर्णनं नाम षष्ठोऽध्यायः ॥६॥

# अथ सप्तमोऽध्यायः

## ( शिवपुराणश्रवणव्रतिनां विधिनिषेधवक्तृपूजनवर्णनम् )

### शौनक उवाच

सूत सूत महाप्राज्ञ धन्यस्त्वं शैवपुङ्गव। श्रावितेयं कथाऽस्माकमद्भुता च शुभावहा॥
पुंसां शिवपुराणस्य श्रवणव्रतिनां मुने। सर्वलोकहितार्थाय दयया नियमं वद॥

### सूत उवाच

नियमं शृणु सद्भक्त्या पुंसां तेषां च शौनक। नियमात्सत्कथां श्रुत्वा निर्विघ्नफलमुत्तमम्॥
पुंसां दीक्षाविहीनानां नाधिकारः कथाश्रवे। श्रोतुकामैरतो वक्तुर्दीक्षा ग्राह्या च तैर्मुने॥
ब्रह्मचर्यमधःसुप्तिः पत्रावल्यां च भोजनम्। कथासमाप्तौ भुक्तिं च कुर्यान्नित्यं कथाव्रती॥
आसमाप्तपुराणं हि समुपोष्य सुशक्तिमान्। शृणुयाद्भक्तितः शुद्धः पुराणं शैवमुत्तमम्॥
घृतपानं पयःपानं कृत्वा वा शृणुयात्सुखम्। फलाहारेण वा श्राव्यमेकभुक्तं न वाहितत्॥
एकवारं हविष्यान्नं भुंज्यादेतत्कथाव्रती। सुखसाध्यं यथा स्यात्तच्छ्रवणं कार्यमेव च॥
भोजनं सुकरं मन्ये कथासु श्रवणप्रदम्। नोपवासो वरश्चेत्स्यात्कथाश्रवणविघ्नकृत्॥
गरिष्ठं द्विदलं दग्धं निष्पावांश्च मसूरिकाम्। भावदुष्टं पर्युषितं जग्ध्वा नित्यं कथाव्रती॥
वार्ताकं च कलिंदं च पिचण्डं मूलकं तथा। कूष्माण्डं नालिकेरं च मूलं जग्ध्वा कथाव्रती॥

पलाण्डुं लशुनं हिंगुं गृंजनं मादकं हि तत्।
वस्तून्यामिषसंज्ञानि वर्जयेद्यः कथाव्रती ॥१२॥
कामादिषड्विकारं च द्विजानां च विनिन्दनम्।
पतिव्रतासतां निन्दां वर्जयेद्यः कथाव्रती ॥१३॥

रजस्वलां न पश्येच्च पतितान्न वदेत्कथाम्। द्विजद्विषो वेदवर्ज्यान्न वदेद्यः कथाव्रती॥
सत्यं शौचं दयां मौनमार्जवं विनयं तथा। औदार्यं मनसश्चैव कुर्यान्नित्यं कथाव्रती॥

निष्कामश्च सकामश्च नियमाच्छृणुयात्कथाम्।
सकामः काममाप्नोति निष्कामो मोक्षमाप्नुयात् ॥१६॥
दरिद्रश्च क्षयी रोगी पापी निर्भाग्य एव च।
अनपत्योऽपि पुरुषः शृणुयात्सत्कथामिमाम् ॥१७॥
काकवन्ध्यादयः सप्तविधा अपि खलस्त्रियः।
स्रवद्गर्भा च या नारी ताभ्यां श्राव्या कथा परा ॥१८॥

सर्वत्र श्रवणं कार्यं स्त्रीभिः पुंभिश्च यत्नतः। एतच्छिवपुराणस्य विधिना च कथां मुने ॥१९॥
एतच्छिवपुराणस्य पारायणदिनानि वै। अत्युत्तमानि बोध्यानि कोटियज्ञसमानि च ॥२०॥
एतेषु विधिना दत्तं यदल्पमपि वस्तु हि। दिवसेषु वरिष्ठेषु तदक्षय्यफलं लभेत् ॥२१॥
एवं कृत्वा व्रतविधिं श्रुत्वेमां परमां कथाम्। परानन्तयुतः श्रीमानुद्यापनमथाचरेत् ॥२२॥
एतदुद्यापनविधिश्चतुर्दश्याः समो मतः। कार्यस्तद्वद्धनाढ्यैश्च तदुक्तफलकांक्षिभिः ॥२३॥

अकिंचनेषु भक्तेषु प्रायो नोद्यापनग्रहः।
श्रवणेनैव पूतास्ते निष्कामाः शाम्भवा मताः ॥२४॥
एवं शिवपुराणस्य पारायणमखोत्सवे।
समाप्ते श्रोतृभिर्भक्त्या पूजा कार्या प्रयत्नतः ॥२५॥

शिवपूजनवत्सम्यक्पुस्तकस्य पुरो मुने। पूजा कार्या सुविधिना वक्तुश्च तदनन्तरम् ॥२६॥
पुस्तकाच्छादनार्थं हि नवीनं चासनं शुभम्। समर्चयेद्दृढं दिव्यं बन्धनार्थं च सूत्रकम् ॥२७॥
पुराणार्थं प्रयच्छन्ति ये सूत्रं वसनं नवम्। योगिनो ज्ञानसम्पन्नास्ते भवंति भवे भवे ॥२८॥
वक्त्रे दद्यान्महार्हाणि वस्तूनि विविधानि च। वस्त्रभूषणपात्राणि द्रव्यं बहु विशेषतः ॥२९॥
आसनार्थं प्रयच्छंति पुराणस्य च ये नराः। कम्बलाजिनवासांसि मंचं फलकमेव च ॥३०॥

स्वर्गलोकं समासाद्य भुक्त्वा भोगान्यथेप्सितान्।
स्थित्वा ब्रह्मपदे कल्पं यान्ति शैवपदं ततः ॥३१॥

एवं कृत्वा विधानेन पुस्तकस्य प्रपूजनम्। वक्तुश्च भुवि शार्दूल महोत्सवपुरःसरम् ॥३२॥
सहायार्थं स्थापितस्य पण्डितस्य प्रपूजनम्। कुर्यात्तदनुसारेण किंचिदूनं धनादिभिः ॥३३॥
समागतेभ्यो विप्रेभ्यो दद्यादन्नं धनादिकम्। महोत्सवः प्रकर्तव्यो गीतैर्वाद्यैश्च नर्तनैः ॥३४॥

विरक्तश्च भवेच्छ्रोता परेऽहनि विशेषतः।
गीता वाच्या शिवेनोक्ता रामचन्द्राय या मुने ॥३५॥

गृहस्थश्चेद्भवेच्छ्रोता कर्तव्यस्तेन धीमता। होमः शुद्धेन हविषा कर्मणस्तस्य शान्तये ॥३६॥
रुद्रसंहितया होमः प्रतिश्लोकेन वा मुने। गायत्र्यास्तन्मयत्वाच्च पुराणस्यास्य तत्त्वतः ॥३७॥

अथवा मूलमंत्रेण पंचवर्णेन शैवतः।
होमाशक्तो बुधो होम्यं हविर्दद्याद्द्विजाय तत् ॥३८॥
दोषयोः प्रशमार्थं च न्यूनताधिकताख्ययोः।
पठेच्च शृणुयाद्भक्त्या शिवनामसहस्रकम् ॥३९॥

तेन स्यात्सफलं सर्वं सुफलं नात्र संशयः ।
यतो नास्त्यधिकं त्वस्मात्त्रैलोक्ये वस्तु किंचन ॥४०॥
एकादशमितान्विप्रान्भोजयेन्मधुपायसैः ।दद्यात्तेभ्यो दक्षिणां च व्रतपूर्णत्वसिद्धये ॥४१॥
शक्तौ पलत्रयमितस्वर्णेन सुन्दरं मुने। सिंहं विधाय तत्रास्य पुराणस्य शुभाक्षरम् ॥४२॥
लेखितं लिखितं वापि संस्थाप्य विधिना पुमान् ।
सम्पूज्य वाहनाद्यैश्च ह्युपचारैः सदक्षिणम् ॥४३॥
वस्त्रभूषणगंधाद्यैः पूजिताय यतात्मने। आचार्य्याय सुधीर्दद्याच्छिवसन्तोषहेतवे ॥४४॥
तेन दानप्रभावेण पुराणस्यास्य शौनक। संप्राप्यानुग्रहं शैवं मुक्तःस्याद्भवबन्धनात् ॥४५॥
एवं कृते विधाने च श्रीमच्छिवपुराणकम्। संपूर्णफलदं स्याद्वै भुक्तिमुक्तिप्रदायकम् ॥४६॥
इति ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि। श्रीमच्छिवपुराणस्य माहात्म्यं सर्वकामदम् ॥४७॥
श्रीमच्छिवपुराणं तु पुराणतिलकं स्मृतम्। महच्छिवप्रियं रम्यं भवरोगनिवारणम् ॥४८॥
ये जन्मभाजः खलु जीवलोके ये वै सदा ध्यानरताः शिवस्य ।
वाणी गुणान्स्तौति कथां शृणोति श्रोत्रद्वयं ते भवमुत्तरन्ति ॥४९॥
सकलगुणविभेदैर्नित्यमस्पष्टरूपं जगति च बहिरन्तर्भासमानं महिम्ना ।
मनसि च बहिरन्तर्वाङ्मनोवृत्तिरूपं परमशिवमनन्तानन्दसान्द्रं प्रपद्ये ॥५०॥

इति श्रीस्कान्दे महापुराणे सनत्कुमारसंहितायां श्रीशिवपुराणश्रवणव्रतिनां विधिनिषेधपुस्तकवक्तृपूजनवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

## समाप्तमिदं श्रीशिवपुराणमाहात्म्यम् ।



ॐ नमः शिवाय:

# श्रीशिवमहापुराणम्

## तत्रादौ प्रथमा विद्येश्वरसंहिता

### प्रथमोऽध्यायः

( मुनिप्रश्नः )

आद्यन्तमंगलमजातसमानभावमार्यं तमीशमजरामरमात्मदेवम् ।
पंचाननं प्रबलपंचविनोदशीलं संभावये मनसि शंकरमम्बिकेशम् ॥ १ ॥

व्यास उवाच

धर्मक्षेत्रे महाक्षेत्रे गंगाकालिन्दिसंगमे। प्रयागे परमे पुण्ये ब्रह्मलोकस्य वर्त्मनि ॥१॥
मुनयः शंसितात्मनः सत्यव्रतपरायणाः। महौजसो महाभागा महासत्रं वितेनिरे ॥२॥
तत्र सत्रं समाकर्ण्य व्यासशिष्यो महामुनिः। आजगाम मुनीन्द्रष्टुं सूतः पौराणिकोत्तमः ॥३॥
तं दृष्ट्वा सूतमायांतं हर्षिता मुनयस्तदा। चेतसा सुप्रसन्नेन पूजां चक्रुर्यथाविधि ॥४॥
ततो विनयसंयुक्ताः प्रोचुः सांजलयश्च ते। सुप्रसन्ना महात्मानः स्तुतिं कृत्वा यथाविधि ॥५॥
रोमहर्षण सर्वज्ञ भवान्वै भाग्यगौरवात्। पुराणविद्यामखिलां व्यासात्प्रत्यर्थमीयिवान् ॥६॥
तस्मादाश्चर्य्यभूतानां कथानां त्वं हि भाजनम्। रत्नानामुरुसाराणां रत्नाकार इवार्णवः ॥७॥
यच्च भूतं च भव्यं च यच्चान्यद्वस्तु वर्तते। न त्वयाऽविदितं किंचित्त्रिषु लोकेषु विद्यते ॥८॥
त्वं मद्दिष्टवशादस्य दर्शनार्थमिहागतः। कुर्वन्किमपि नःश्रेयो न वृथा गंतुमर्हसि ॥९॥
तत्त्वं श्रुतं स्म नः सर्वं पूर्वमेव शुभाशुभम्। न तृप्तिमधिगच्छामः श्रवणेच्छा मुहुर्मुहुः ॥१०॥
इदानीमेकमेवास्ति श्रोतव्यं सूत सन्मते। तद्रहस्यमपि ब्रूहि यदि तेऽनुग्रहो भवेत् ॥११॥
प्राप्ते कलियुगे घोरे नराः पुण्यविवर्जिताः। दुराचाररताः सर्वे सत्यवार्तापराङ्मुखाः ॥१२॥
परापवादनिरताः परद्रव्याभिलाषिणः। परस्त्रीसक्तमनसः परहिंसापरायणाः ॥१३॥

देहात्मदृष्टयो मूढा नास्तिकाः पशुबुद्धयः। मातृपितृकृतद्वेषाः स्त्रीदेवाः कामकिंकराः ॥१४
विप्रा लोभग्रहग्रस्ता वेदविक्रयजीविनः। धनार्जनार्थमभ्यस्तविद्या मदविमोहिताः ॥१५
त्यक्तस्वजातिकर्माणः प्रायशः परवंचकाः। त्रिकालसंध्यया हीना ब्रह्मबोधविवर्जिताः ॥१६
अदयाः पंडितंमन्याः स्वाचारव्रतलोपकाः। कृष्युद्यमरताः क्रूरस्वभावा मलिनाशयाः ॥१७
क्षत्रियाश्च तथा सर्वे स्वधर्मत्यागशीलिनः। असत्संगाः पापरता व्यभिचारपरायणाः ॥१८
अशूरा अरणप्रीताः पलायनपरायणाः। कुचौरवृत्तयः शूद्राः कामकिंकरचेतसः ॥१९
शस्त्रास्त्रविद्यया हीना धेनुविप्रावनोज्झिताः। शरण्यावनहीनाश्च कामिन्यूतिमृगाः सदा ॥२०
प्रजापालनसद्धर्मविहीना भोगतत्पराः। प्रजासंहारका दुष्टा जीवहिंसाकरा मुदा ॥२१
वैश्याः संस्कारहीनास्ते स्वधर्मत्यागशीलिनः। कुपथाः स्वार्जनरतास्तुलाकर्मकुवृत्तयः ॥२२
गुरुदेवद्विजातीनां भक्तिहीनाः कुबुद्धयः। अभोजितद्विजाः प्रायः कृपणा बद्धमुष्टयः ॥२३
कामिनीजारभावेषु सुरता मलिनाशयाः। लोभमोहविचेतस्काः पूर्तादिषु वृषोज्झिताः ॥२४
तद्वच्छूद्राश्च ये केचिद्ब्राह्मणाचारतत्पराः। उज्ज्वलाकृतयो मूढाः स्वधर्मत्यागशीलिनः ॥२५
कर्तारस्तपसां भूयो द्विजतेजोपहारकाः। शिश्वल्पमृत्युकाराश्च मंत्रोच्चारपरायणाः ॥२६
शालग्रामशिलादीनां पूजका होमतत्पराः। प्रतिकूलविचाराश्च कुटिला द्विजदूषकाः ॥२७
धनवंतः कुकर्माणो विद्यावन्तो विवादिनः। आख्यानोपासनाधर्मवक्तारो धर्मलोपकाः ॥२८
सुभूपाकृतयो दंभाः सुदातारो महामदाः। विप्रादीन्सेवकान्मत्वा मन्यमाना निजं प्रभुम् २९
स्वधर्मरहिता मूढाः संकराः क्रूरबुद्धयः। महाभिमानिनो नित्यं चतुर्वर्णविलोपकाः ॥३०
सुकुलीनान्निजान्मत्वा चतुर्वर्णैर्विवर्तनाः। सर्ववर्णभ्रष्टकरा मूढाः सत्कर्मकारिणः ॥३१
स्त्रियश्च प्रायशो भ्रष्टा भर्त्रवज्ञानकारिकाः। श्वशुरद्रोहकारिण्यो निर्भया मलिनासनाः ॥३२
कुहावभावनिरताः कुशीला स्मरविह्वलाः। जारसंगरता नित्यं स्वस्वामिविमुखास्तथा ॥३३
तनया मातृपित्रोश्च भक्तिहीना दुराशयाः। अविद्यापाठका नित्यं रोगग्रसितदेहकाः ॥३४
एतेषां नष्टबुद्धीनां स्वधर्मत्यागशीलिनाम्। परलोकेऽपीह लोके कथं सूत गतिर्भवेत् ॥३५
इति चिंताकुलं चित्तं जायते सततं हि नः। परोपकारसदृशो नास्ति धर्मोऽपरः खलु ॥३६
लघूपायेन येनैषां भवेत्सद्योऽघनाशनम्। सर्वसिद्धान्तवित्त्वं हि कृपया तद्वदाधुना ॥३७

## व्यास उवाच

इत्याकर्ण्य वचस्तेषां मुनीनां भावितात्मनाम्। मनसा शंकरं स्मृत्वा सूतः प्रोवाच तान्मुनीन् ३८

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां मुनिप्रश्नवर्णनं नाम प्रथमोऽध्यायः ॥१

# अथ द्वितीयोऽध्यायः

## ( मुनिप्रश्ननानामुत्तराणि )

### सूत उवाच

साधु पृष्टं साधवो वस्त्रैलोक्यहितकारकम्। गुरुं स्मृत्वा भवत्स्नेहाद्वक्ष्ये तच्छृणुतादरात् ॥१॥
वेदांतसारसर्वस्वं पुराणं चैवमुत्तमम। सर्वाघौघोद्धारकरं परत्र परमार्थदम् ॥२॥
कलिकल्मषविध्वंसि यस्मिञ्छिवयशः परम्। विजृम्भते सदा विप्राश्चतुर्वर्गफलप्रदम् ॥३॥
तस्याध्ययनमात्रेण पुराणस्य द्विजोत्तमाः। सर्वोत्तमस्य शैवस्य ते यास्यंति सुसद्गतिम् ॥४॥
तावद्विजृम्भते पापं ब्रह्महत्यापुरःसरम्। यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥५॥
तावत्कलिमहोत्पाताः संचरिष्यंति निर्भयाः। यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥६॥
तावत्सर्वाणि शास्त्राणि विवदंते परस्परम्। यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥७॥
तावत्स्वरूपं दुर्बोधं शिवस्य महतामपि। यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥८॥
तावद्यमभटाः क्रूराः संचरिष्यंति निर्भयाः। यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥९॥
तावत्सर्वपुराणानि प्रगर्जंति महीतले। यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥१०॥
तावत्सर्वाणि तीर्थानि विवदंते महीतले। यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥११॥
तावत्सर्वे मुदा मंत्रा विवदंते महीतले। यावच्छिवपुराणं हि नोदेष्यति महीतले ॥१२॥
तावत्सर्वाणि क्षेत्राणि विवदंते महीतले। यावच्छिवपुराणं हि नोदेष्यति महीतले ॥१३॥
तावत्सर्वाणि पीठानि विवदंते महीतले। यावच्छिवपुराणं हि नोदेष्यति महीतले ॥१४॥
तावत्सर्वाणि दानानि विवदंते महीतले। यावच्छिवपुराणं हि नोदेष्यति महीतले ॥१५॥
तावत्सर्वे च ते देवा विवदंते महीतले। यावच्छिवपुराणं हि नोदेष्यति महीतले ॥१६॥
तावत्सर्वे च सिद्धान्ता विवदंते महीतले। यावच्छिवपुराणं हि नोदेष्यति महीतले ॥१७॥
अस्य शैवपुराणस्य कीर्तनश्रवणाद्द्विजाः। फलं वक्तुं न शक्नोमि कार्त्स्न्येन मुनिसत्तमाः ॥
तथापि तस्य माहात्म्यं वक्ष्ये किंचित्तु वोऽनघाः। चित्तमाधाय शृणुत व्यासेनोक्तं पुरा मम ॥१९॥
एतच्छिवपुराणं हि श्लोकं श्लोकार्द्धमेव च। यः पठेद्भक्तिसंयुक्तः स पापान्मुच्यतेक्षणात् ॥२०॥
एतच्छिवपुराणं हि यः प्रत्यहमतंद्रितः। यथाशक्ति पठेद्भक्त्या स जीवन्मुक्त उच्यते ॥२१॥
एतच्छिवपुराणं हि यो भक्त्यार्चयते सदा। दिने दिनेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम् ॥२२॥
एतच्छिवपुराणं यः साधारणपदेच्छया। अन्यतः शृणुयात्सोऽपि मत्तो मुच्येत पातकात् ॥२३॥
एतच्छिवपुराणं यो नमस्कुर्याददूरतः। सर्वदेवार्चनफलं स प्राप्नोति न संशयः ॥२४॥
एतच्छिवपुराणं वै लिखित्वा पुस्तकं स्वयम्। यो दद्याच्छिवभक्तेभ्यस्तस्य पुण्यफलं शृणु ॥२५॥

अधीतेषु च शास्त्रेषु वेदेषु व्याकृतेषु च। यत्फलं दुर्लभं लोके तत्फलं तस्य संभवेत् ॥२६॥
एतच्छिवपुराणं हि चतुर्दश्यामुपोषितः। शिवभक्तसभायां यो व्याकरोति स उत्तमः ॥२७॥
प्रत्यक्षरं तु गायत्रीपुरश्चर्य्याफलं लभेत्। इह भुक्त्वाखिलान्कामानंते निर्वाणतां व्रजेत् ॥२८॥
उपोषितश्चतुर्दश्यां रात्रौ जागरणान्वितः। यः पठेच्छृणुयाद्वापि तस्य पुण्यं वदाम्यहम् ॥२९॥
कुरुक्षेत्रादिनिखिलपुण्यतीर्थेष्वनेकशः। आत्मतुल्यधनं सूर्यग्रहणे सर्वतोमुखे ॥३०॥
विप्रेभ्यो व्यासमुख्येभ्यो दत्त्वा यत्फलमश्नुते। तत्फलं संभवेत्तस्य सत्यं सत्यं न संशयः ॥३१॥
एतच्छिवपुराणं हि गायते योऽप्यहर्निशम्। आज्ञां तस्य प्रतीक्षेरन्देवा इन्द्रपुरोगमाः ॥३२॥
एतच्छिवपुराणं यः पठञ्छृण्वन्हि नित्यशः। यद्यत्करोति सत्कर्म तत्कोटिगुणितं भवेत् ॥३३॥
समाहितः पठेद्यस्तु तत्र श्रीरुद्रसंहिताम्। स ब्रह्मघ्नोऽपि पूतात्मा त्रिभिरेव दिनैर्भवेत् ॥३४॥
तां रुद्रसंहितां यस्तु भैरवप्रतिमांतिके। त्रिः पठेत्प्रत्यहं मौनी स कामानखिलाँल्लभेत् ॥३५॥
तां रुद्रसंहितां यस्तु संपठेद्वटबिल्वयोः। प्रदक्षिणां प्रकुर्वाणो ब्रह्महत्या निवर्तते ॥३६॥
कैलाससंहिता तत्र ततोऽपि परमा स्मृता। ब्रह्मस्वरूपिणी साक्षात्प्रणवार्थप्रकाशिका ॥३७॥
कैलाशसंहितायास्तु माहात्म्यं वेत्ति शंकरः। कृत्स्नं तदर्द्धं व्यासश्च तदर्द्धं वेद्म्यहं द्विजाः ॥३८॥
तत्र किंचित्प्रवक्ष्यामि कृत्स्नं वक्तुं न शक्यते। यज्ज्ञात्वा तत्क्षणाल्लोकश्चित्तशुद्धिमवाप्नुयात्
न नाशयति यत्पापं सा रौद्री संहिता द्विजाः। तन्न पश्याम्यहं लोके मार्गमाणोऽपि सर्वदा ॥४०॥
शिवेनोपनिषत्सिंधुमन्थनोत्पादितां मुदा। कुमारायार्पितां तां वै सुधां पीत्वामरो भवेत् ॥४१॥
ब्रह्महत्यादिपापानां निष्कृतिं कर्तुमुद्यतः। मासमात्रं संहितां तां पठित्वा मुच्यते ततः ॥४२॥
दुष्प्रतिग्रहदुर्भोज्यदुरालापादिसंभवम्। पापं सकृत्कीर्तनेन संहिता सा विनाशयेत् ॥४३॥
शिवालये बिल्ववने संहितां तां पठेत्तु यः। स यत्फलमवाप्नोति तद्वाचोऽपि न गोचरे ॥४४॥
संहितां तां पठन्भक्त्या यः श्राद्धे भोजयेद्द्विजान्। तस्य ये पितरः सर्वे यांति शंभोः परं पदम् ॥४५॥
चतुर्दश्यां निराहारो यः पठेत्संहितां च ताम्। बिल्वमूले शिवः साक्षात्स देवैश्च प्रपूज्यते ॥४६॥
अप्यन्याः संहितास्तत्र सर्वकामफलप्रदाः। उभे विशिष्टे विज्ञेये लीलाविज्ञानपूरिते ॥४७॥
तदिदं शैवमाख्यातं पुराणं वेदसंम्मितम्। निर्मितं तच्छिवेनैव प्रथमं ब्रह्मसंमितम् ॥४८॥
विघ्नेशं च तथा रौद्रं वैनायकमथौमिकम्। मात्रं रुद्रैकादशकं कैलासं शतरुद्रकम् ॥४९॥
कोटिरुद्रसहस्राद्यं कोटिरुद्रं तथैव च। वायवीयं धर्मसंज्ञं पुराणमिति भेदतः ॥५०॥
संहिता द्वादशमिता महापुण्यतरा मताः। तासां संख्यां ब्रुवे विप्राः शृणुतादरतोऽखिलम्
विघ्नेशं दशसाहस्रं रुद्रं वैनायकं तथा। औमं मातृपुराणाख्यं प्रत्येकाष्टसहस्रकम् ॥५२॥
त्रयोदशसहस्रं हि रुद्रैकादशकं द्विजाः। षट्सहस्रं च कैलासं शतरुद्रं तदर्द्धकम् ॥५३॥

कोटिरुद्रं त्रिगुणितमेकादशसहस्रकम्। सहस्रकोटिरुद्राख्यमुदितं ग्रन्थसंख्यया ॥५४॥
वायवीयं खाब्धिशतं धर्मं रविसहस्रकम्। तदेवं लक्षसंख्याकं शैवसंख्याविभेदतः ॥५५॥
व्यासेन तत्तु संक्षिप्तं चतुर्विंशत्सहस्रकम्। शैवं तत्र चतुर्थं वै पुराणं सप्तसंहितम् ॥५६॥
शिवे संकल्पितं पूर्वं पुराणं ग्रन्थसंख्यया। शतकोटिप्रमाणं हि पुरा सृष्टौ सुविस्तृतम् ॥५७॥
व्यस्तेऽष्टादशधा चैव पुराणे द्वापरादिषु। चतुर्लक्षेण संक्षिप्ते कृते द्वैपायनादिभिः ॥५८॥
प्रोक्तं शिवपुराणं हि चतुर्विंशत्सहस्रकम्। श्लोकानां संख्यया सप्तसंहितं ब्रह्मसंमितम् ॥५९॥
विद्येश्वराख्या तत्राद्या रौद्री ज्ञेया द्वितीयिका। तृतीया शतरुद्राख्या कोटिरुद्रा चतुर्थिका ॥६०॥
पंचमी चैवमौम्याख्या षष्ठी कैलाससंज्ञिका। सप्तमी वायवीयाख्या सप्तैवं संहिता मताः ॥६१॥
ससप्तसंहितं दिव्यं पुराणं शिवसंज्ञकम्। वरीवर्ति ब्रह्मतुल्यं सर्वोपरि गतिप्रदम् ॥६२॥
एतच्छिवपुराणं हि सप्तसंहितमादरात्। परिपूर्णं पठेद्यस्तु स जीवन्मुक्त उच्यते ॥६३॥
श्रुतिस्मृतिपुराणेतिहासागमशतानि च। एतच्छिवपुराणस्य नार्हंत्यल्पां कलामपि ॥६४॥

शैवं पुराणममलं शिवकीर्तितं तद्व्यासेन शैवप्रवणेन च संगृहीतम्।
संक्षेपतः सकलजीवगुणोपकारं तापत्रयघ्नमतुलं शिवदं सतां हि ॥६५॥
विकैतवो धर्म इह प्रगीतो वेदान्तविज्ञानमयः प्रधानः।
अमत्सरांतर्बुधवेद्यवस्तुसत्संक्लृप्तमंत्रौघत्रिवर्गयुक्तम् ॥६६॥
शैवं पुराणतिलकं खलु सत्पुराणं वेदांतवेदविलसत्परवस्तुगीतम्।
यो वै पठेच्च शृणुयात्परमादरेण शंभुप्रियः स हि लभेत्परमां गतिं वै ॥६७॥
इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां तृतीयोऽध्यायः ॥२॥

## अथ तृतीयोऽध्यायः

### ( साध्यसाधनविचारः )

#### व्यास उवाच

इत्याकर्ण्य वचः सौतं प्रोचुस्ते परमर्षयः। वेदान्तसारसर्वस्वं पुराणं श्रावयाद्भुतम् ॥१॥
इति श्रुत्वा मुनीनां स वचनं सुप्रहर्षितः। संस्मरञ्छंकरं सूतः प्रोवाच मुनिसत्तमान् ॥२॥

#### सूत उवाच

शृण्वंतु ऋषयः सर्वे स्मृत्वा शिवमनामयम्। पुराणप्रवणं शैवं पुराणं वेदसारजम् ॥३॥
यत्र गीतं त्रिकं प्रीत्या भक्तिज्ञानविरागकम् ॥४॥
वेदांतवेद्यं तद्वस्तु विशेषेण प्रवर्णितम् ॥५॥

### सूत उवाच

शृण्वंतु ऋषयः सर्वे पुराणं वेदसारजम्। पुरा कालेन महता कल्पेऽतीते पुनः पुनः॥
अस्मिन्नुपस्थिते कल्पे प्रवृत्ते सृष्टिकर्मणि। मुनीनां षट्कुलीनानां ब्रुवतामितरेतरम्॥
इदं परमिदं नेति विवादः सुमहानभूत्। तेऽभिजग्मुर्विधातारं ब्रह्माणं प्रष्टुमव्ययम्॥
वाग्भिर्विनयगर्भाभिः सर्वैः प्रांजलयोऽब्रुवन्। त्वं हि सर्वजगद्धाता सर्वकारणकारणम्॥
कः पुमान्सर्वतत्त्वेभ्यः पुराणः परतः परः।

### ब्रह्मोवाच

यतो वाचो निवर्तंते अप्राप्य मनसा सह ॥१०॥
यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेंद्रपूर्वकम्। सहभूतेंद्रियैः सर्वैः प्रथमं संप्रसूयते ॥१
एष देवो महादेवः सर्वज्ञो जगदीश्वरः। अयं तु परया भक्त्या दृश्यते नान्यथा क्वचित्
रुद्रो हरिर्हरश्चैव तथाऽन्ये च सुरेश्वराः। भक्त्या परमया तस्य नित्यं दर्शनकांक्षिणः॥१
बहुनाऽत्र किमुक्तेन शिवे भक्त्या विमुच्यते।
प्रसादाद्देवताभक्तिः प्रसादो भक्तिसंभवः। यथेहांकुरतो बीजं बीजतो वा यथांकुरः॥१
तस्मादीशप्रसादार्थं यूयं गत्वा भुवं द्विजाः। दीर्घसत्रं समाकुध्वं यूयं वर्षसहस्रकम्॥१
अमुष्यैवाध्वरेशस्य शिवस्यैव प्रसादतः। वेदोक्तविद्यासारं तु जायते साध्यसाधनम्॥१

### मुनय ऊचुः

अथ किं परमं साध्यं किं वा तत्साधनं परम्। साधकः कीदृशस्तत्र तदिदं ब्रूहि तत्त्वतः॥१

### ब्रह्मोवाच

साध्यं शिवपदप्राप्तिः साधनं तस्य सेवनम्। साधकस्तत्प्रसादाद्यो नित्यादिफलनिस्पृहः॥१
कर्म कृत्वा तु वेदोक्तं तदर्पितमहाफलम्। परमेशपदप्राप्तिः सालोक्यादिक्रमात्ततः॥१
तत्तद्भक्त्यनुसारेण सर्वेषां परमं फलम्। तत्साधनं बहुविधं साक्षादीशेन बोधितम्॥२
संक्षिप्य तत्र वः सारं साधनं प्रब्रवीम्यहम्।
श्रोत्रेण श्रवणं तस्य वचसा कीर्तनं तथा ॥२१॥
मनसा मननं तस्य महासाधनमुच्यते। श्रोतव्यः कीर्तितव्यश्च मंतव्यश्च महेश्वरः॥२
इति श्रुतिः प्रमाणं नः साधनेनामुना परम्। साध्यं व्रजत सर्वार्थसाधनैकपरायणाः॥२
प्रत्यक्षं चक्षुषा दृष्ट्वा तत्र लोकः प्रवर्तते। अप्रत्यक्षं हि सर्वत्र ज्ञात्वा श्रोत्रेण चेष्टते॥२
तस्माच्छ्रवणमेवादौ श्रुत्वा गुरुमुखाद्बुधः। ततः संसाधयेदन्यत्कीर्तनं मननं सुधीः॥२

क्रमान्मननपर्यंते साधनेऽस्मिन्सुसाधिते। शिवयोगो भवेत्तेन सालोक्यादिक्रमाच्छनैः ॥२६॥
सर्वांगव्याधयः पश्चात्सर्वानंदश्च लीयते। अभ्यासात्क्लेशमेतद्वै पश्चादाद्यंतमङ्गलम् ॥२७॥
इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां साध्यसाधनखंडे तृतीयोऽध्यायः ॥३॥

# अथ चतुर्थोऽध्यायः

## ( श्रवण-कीर्तन-मननानां श्रेष्ठत्वम् )

### मुनयः ऊचुः

मननं कीदृशं ब्रह्मञ्छ्रवणं चापि कीदृशम्। कीर्तनं वा कथं तस्य कीर्तयैतद्यथायथम् ॥१॥

### ब्रह्मोवाच

पूजाजपेशगुणरूपविलासनाम्नां युक्तिप्रियेण मनसा परिशोधनं यत्।
तत्संततं मननमीश्वरदृष्टिलभ्यं सर्वेषु साधनवरेष्वपि मुख्यमुख्यम् ॥२॥
गीतात्मना श्रुतिपदेन च भाषया वा शंभुप्रतापगुणरूपविलासनाम्नाम्।
वाचा स्फुटं तु रसवत्स्तवनं यदस्य तत्कीर्तनं भवति साधनमत्र मध्यम्॥३॥
येनापि केन करणेन च शब्दपुञ्जं यत्र क्वचिच्छिवपरं श्रवणेंद्रियेण।
स्त्रीकेलिवद्दृढतरं प्रणिधीयते यत्तद्वै बुधाः श्रवणमत्र जगत्प्रसिद्धम् ॥४॥
सत्संगमेन भवति श्रवणं पुरस्तात्संकीर्तनं पशुपतेरथ तद्दृढं स्यात्।
सर्वोत्तमं भवति तन्मननं तदंते सर्वं हि संभवति शंकरदृष्टिपाते ॥५॥

### सूत उवाच

अस्मिन्साधनमाहात्म्ये पुरावृत्तं मुनीश्वराः। युष्मदर्थं प्रवक्ष्यामि शृणुध्वमवधानतः ॥६॥
पुरा मम गुरुर्व्यासः पराशरमुनेः सुतः। तपश्चचार संभ्रांतः सरस्वत्यास्तटे शुभे ॥७॥
गत्वा यदृच्छया तत्र विमानेनार्करोचिषा। सनत्कुमारो भगवान्ददर्श मम देशिकम् ॥८॥
ध्यानारूढः प्रबुद्धोऽसौ ददर्श तमजात्मजम्। प्रणिपत्याह संभ्रांतः परं कौतूहलं मुनिः ॥९॥
दत्त्वार्घ्यमस्मै प्रददौ देवयोग्यं च विष्टरम्। प्रसन्नः प्राह तं प्रह्वं प्रभुर्गंभीरया गिरा ॥१०॥

### सनत्कुमार उवाच

सत्यं वस्तु मुने दध्याः साक्षात्करणगोचरः। स शिवोऽथासहायोऽत्र तपश्चरसि किंकृते ॥११॥
इत्युक्तः कुमारेण प्रोवाच स्वाशयं मुनिः। धर्मार्थकाममोक्षाश्च वेदमार्गे कृतादराः ॥१२॥
बहुधा स्थापिता लोके मया त्वत्कृपया तथा। एवं भूतस्य मेऽप्येवं गुरुभूतस्य सर्वतः ॥१३॥
मुक्तिसाधनकं ज्ञानं नोदेति परमाद्भुतम्। तपश्चरामि मुक्त्यर्थं न जाने तत्र कारणम् ॥१४॥

इत्थं कुमारो भगवान्व्यासेन मुनिनार्थितः। समर्थः प्राह विप्रेंद्रा निश्चयं मुक्तिकारणम्॥
श्रवणं कीर्तनं शंभोर्मननं च महत्तरम्। त्रयं साधनमुक्तं च विद्यते वेदसंमतम्॥
पुराऽहमथ संभ्रांतो ह्यन्यसाधनसंभ्रमः। अचले मंदरे शैले तपश्चरणमाचरम्॥
शिवाज्ञया ततः प्राप्तो भगवान्नंदिकेश्वरः। स मे दयालुर्भगवान्सर्वसाक्षी गणेश्वरः॥
उवाच मह्यं सस्नेहं मुक्तिसाधनमुत्तमम्। श्रवणं कीर्तनं शंभोर्मननं वेदसंमतम्॥
त्रिकं च साधनं मुक्तौ शिवेन मम भाषितम्। श्रवणादित्रिकं ब्रह्मन्कुरुष्वेति मुहुर्मुहुः॥
एवमुक्त्वा ततो व्यासं सानुगो विधिनंदनः। जगाम स्वविमानेन पदं परमशोभनम्॥
एवमुक्तं समासेन पूर्ववृत्तांतमुत्तमम्।

ऋषय ऊचुः

श्रवणादित्रयं सूत मुक्त्युपायस्त्वयेरितः ॥२२॥
श्रवणादित्रिकेऽशक्तः किं कृत्वा मुच्यते जनः। अयत्नेनैव मुक्तिः स्यात्कर्मणा केन हेतुना॥

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां साध्यसाधनखण्डे चतुर्थोऽध्यायः॥

## अथ पञ्चमोऽध्यायः

### ( शिवलिंगमहिमा )

सूत उवाच

श्रवणादित्रिकेऽशक्तो लिंगं बेरं च शांकरम्। संस्थाप्य नित्यमभ्यर्च्य तरेत्संसारसागरम्॥
अपि द्रव्यं वहेदेव यथाबलमवंचयन्। अर्पयेल्लिंगबेरार्थमर्चयेदपि संततम्॥
मंडपं गोपुरं तीर्थं मठं क्षेत्रं तथोत्सवम्। वस्त्रं गंधं च माल्यं च धूपं दीपं च भक्तितः॥
विविधान्नं च नैवेद्यमपूपव्यंजनैर्युतम्। छत्रं ध्वजं च व्यजनं चामरं चापि सांगकम्॥
राजोपचारवत्सर्वं धारये लिंगबेरयोः। प्रदक्षिणां नमस्कारं यथाशक्ति जपं तथा॥
आवाहनादिसर्गान्तं नित्यं कुर्यात्सुभक्तितः। इत्थमभ्यर्चयन्देवं लिंगे बेरे च शांकरे॥
सिद्धिमेति शिवप्रीत्या हित्वापि श्रवणादिकम्। लिंगबेरार्चनामात्रान्मुक्ताः पूर्वे महाजनाः॥

मुनय ऊचुः

बेरमात्रे तु सर्वत्र पूज्यंते देवतागणाः। लिंगे बेरे च सर्वत्र कथं संपूज्यते शिवः॥

सूत उवाच

अहो मुनीश्वराः पुण्यं प्रश्नमेतन्महाद्भुतम्। अत्र वक्ता महादेवो नान्योऽस्ति पुरुषः क्वचित्॥
शिवेनोक्तं प्रवक्ष्यामि क्रमाद्गुरुमुखाच्छ्रुतम्। शिवैको ब्रह्मरूपत्वान्निष्कलः परिकीर्तितः॥

…पित्वात्सकलस्तद्वत्तस्मात्सकलनिष्कलः ।निष्कलत्वान्निराकारं लिंगं तस्य समागतम् ॥११॥
…कलत्वात्तथा वेरं साकारं तस्य संगतम्।सकलाकलरूपत्वाद्ब्रह्मशब्दाभिधः परः ॥१२॥
…पि लिंगे च वेरे च नित्यमभ्यर्च्यते जनैः।अब्रह्मत्वात्तदन्येषां निष्कलत्वं नहि क्वचित् ॥१३॥
…स्मात्ते निष्कले लिंगे नाराध्यंते सुरेश्वराः।अब्रह्मत्वाच्च जीवत्वात्तथाऽन्ये देवतागणाः ॥१४॥
…र्णी सकलमात्रत्वादर्च्यंते वेरमात्रके।जीवत्वं शंकरान्येषा ब्रह्मत्वं शंकरस्य च ॥१५॥
…दांतसारसंसिद्धं प्रणवार्थे प्रकाशनात्।एवमेव पुरा पृष्टो मंदरे नंदिकेश्वरः ॥१६॥
सनत्कुमारमुनिना ब्रह्मपुत्रेण धीमता ।

## सनत्कुमार उवाच

शिवान्यदेववंश्यानां सर्वेषामपि सर्वतः ॥ १७ ॥
…रमात्रं च पूजार्थं श्रुतं दृष्टं च भूरिशः।शिवमात्रस्य पूजायां लिंगं वेरं च दृश्यते ॥१८॥
अतस्तद्ब्रूहि कल्याण तत्त्वं मे साधुबोधनम् ।

## नंदिकेश्वर उवाच

अनुत्तरमिमं प्रश्नं रहस्यं ब्रह्मलक्षणम् ॥ १९ ॥
…थयामि शिवेनोक्तं भक्तियुक्तस्य तेऽनघ।शिवस्य ब्रह्मरूपत्वान्निष्कलत्वाच्च निष्कलम् ॥२०॥
…गं तस्यैव पूजायां सर्ववेदेषु संमतम्।तस्यैव सकलत्वाच्च तथा सकलनिष्कलम् ॥२१॥
…कलं च तथा वेरं पूजायां लोकसंमतम्।शिवान्येषां च जीवत्वात्सकलत्वाच्च सर्वतः ॥२२॥
…रमात्रं च पूजायां संमतं वेदनिर्णये।स्वाविर्भावे च देवानां सकलं रूपमेव हि ॥२३॥
शिवस्य लिंगं वेरं च दर्शने दृश्यते खलु ।

## सनत्कुमार उवाच

उक्तं त्वया महाभाग लिंगवेरप्रचारणम् ॥ २४ ॥
…वस्य च तदन्येषां विभज्य परमार्थतः।तस्मात्तदेव परमं लिंगवेरादिसंभवम् ॥२५॥
श्रोतुमिच्छामि योगींद्र लिंगाविर्भावलक्षणम् ।

## नंदिकेश्वर उवाच

शृणु वत्स भवत्प्रीत्या वक्ष्यामि परमार्थतः ॥२६॥
…ा कल्पे महाकाले प्रपन्ने लोकविश्रुते।अयुध्यतां महात्मानौ ब्रह्मविष्णू परस्परम् ॥२७॥
…र्मानं निराकर्तुं तन्मध्ये परमेश्वरः।निष्कलस्तंभरूपेण स्वरूपं समदर्शयत् ॥२८॥
…ः स्वलिंगचिह्नत्वात्स्तंभतो निष्कलं शिवः।स्वलिंगं दर्शयामास जगतां हितकाम्यया ॥२९॥
…ाप्रभृति लोकेषु निष्कलं लिंगमैश्वरम्।सकलं च तथा वेरं शिवस्यैव प्रकल्पितम् ॥३०॥

शिवान्येषां तु देवानां बेरमात्रं प्रकल्पितम् ।
तत्तद्बेरं तु देवानां तत्तद्भोगप्रदं शुभम्।शिवस्य लिंगबेरत्वं भोगमोक्षप्रदं शुभम्
इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां पंचमोऽध्यायः ॥ ५ ॥

## अथ षष्ठोऽध्यायः

(परस्परमीश्वरत्वाभिमानिनोविष्णुब्रह्मणोर्युद्धे क्षिप्तपाशुपतास्त्र-भीतानाममराणां कैलासयात्रा)

### नंदिकेश्वर उवाच

पुरा कदाचिद्योगींद्र विष्णुर्विषधरासनः।सुष्वाप परया भूत्या स्वानुगैरपि संवृतः
यदृच्छयाऽऽगतस्तत्र ब्रह्मा ब्रह्मविदां वरः।अपृच्छत्पुंडरीकाक्षं शयानं सर्वसुंदरम्
कस्त्वं पुरुषवच्छेषे दृष्ट्वा मामपि दृप्तवत्।उत्तिष्ठ वत्स मां पश्य तव नाथमिहागतम्
आगतं गुरुमाराध्यं दृष्ट्वा यो दृप्तवच्चरेत्।द्रोहिणस्तस्य मूढस्य प्रायश्चित्तं विधीयते
इति श्रुत्वा वचः क्रुद्धो बहिः शांतवदाचरन्।स्वस्ति ते स्वागतं वत्स तिष्ठ पीठमितो विश
किमु ते व्यग्रवद्वक्त्रं विभाति विषमेक्षणम् ।

### ब्रह्मोवाच

वत्स विष्णो महामानमागतं कालवेगतः ॥ ६ ॥
पितामहश्च जगतः पाता च तव वत्सक।

### विष्णुरुवाच

मत्स्थं जगदिदं वत्स मनुषे त्वं हि चोरवत् ॥ ७ ॥
मन्नाभिकमलाज्जातः पुत्रस्त्वं भाषसे वृथा।

### नंदिकेश्वर उवाच

एवं हि विवदतोस्तत्र मुग्धयोरजयोस्तदा ॥ ८ ॥
अहमेव वरो न त्वमहं प्रभुरहं प्रभुः।परस्परं हंतुकामौ चक्रतुः समरोद्यमम्
युयुधातेऽमरौ वीरौ हंसपक्षींद्रवाहनौ।वैरंच्या वैष्णवाश्चैवं मिथो युयुधिरे तदा
तावद्विमानगतयः सर्वा वै देवजातयः।दिदृक्षवः समाजग्मुः समरं तं महाद्भुतम्
क्षिपंतः पुष्पवर्षाणि पश्यंतः स्वैरमम्बरे।सुपर्णवाहनस्तत्र क्रुद्धो वै ब्रह्मवक्षसि
मुमोच बाणानसहानस्त्रांश्च विविधान्बहून्।मुमोचाथ विधिः क्रुद्धो विष्णोरुरसि दुःसहान्
बाणाननलसंकाशानस्त्रांश्च बहुशस्तदा।तदाश्चर्यमिति स्पष्टं तयोः समरगोचरम्

ीक्ष्य दैवतगणाः शशंसुर्भृशमाकुलाः। ततो विष्णुः सुसंक्रुद्धः श्वसन्व्यसनकर्शितः ॥१५॥
हेश्वरास्त्रं मतिमान्संदधे ब्रह्मणोपरि। ततो ब्रह्मा भृशं क्रुद्धः कंपयन्विश्वमेव हि ॥१६॥
स्त्रं पाशुपतं घोरं संदधे विष्णुवक्षसि। ततस्तदुत्थितं व्योम्नि तपनायुतसन्निभम् ॥१७॥
स्त्रमुखमत्युग्रं च्चण्डवातभयङ्करम्। अस्त्रद्वयमिदं तत्र ब्रह्मविष्ण्वोर्भयंकरम् ॥१८॥
इत्थं बभूव समरं ब्रह्मविष्ण्वोः परस्परम्।
ो देवगणाः सर्वे विषण्णा भृशमाकुलाः। ऊचुः परस्परं तात राजक्षोभे यथा द्विजाः ॥१९॥
ष्टिः स्थितिश्च संहारस्तिरोभावोऽप्यनुग्रहः। यस्मात्प्रवर्तते तस्मै ब्रह्मणे च त्रिशूलिने ॥२०॥
अशक्यमन्यैर्यदनुग्रहं विना तृणक्षयोऽप्यत्र यदृच्छया क्वचित् ॥२१॥
ं देवा भयं कृत्वा विचिन्वंतः शिवक्षयम्। जग्मुः कैलासशिखरं यत्रास्ते चंद्रशेखरः ॥२२॥
वममरा दृष्ट्वाः पदं तत्पारमेश्वरम्। प्रणेमुः प्रणवाकारं प्रविष्टास्तत्र सद्मनि ॥२३॥
पि तत्र सभामध्ये मंडपे मणिविष्टरे। विराजमानमुमया ददृशुर्देवपुंगवम् ॥२४॥
ोत्तरेतरपदं तदर्पितकरांबुजम्। स्वगणैः सर्वतो जुष्टं सर्वलक्षणलक्षितम् ॥२५॥
्यमानं विशेषज्ञैः स्त्रीजनैस्तीव्रभावनैः। शंस्यमानं सदा वेदैरनुगृह्णंतमीश्वरम् ॥२६॥
वमीशममराः संतोषसलिलेक्षणाः। दंडवद्दूरतो वत्स नमश्चक्रुर्महागणाः ॥२७॥
तानवेक्ष्य पतिर्देवान्समीपे चाह्वयद्गणैः।
संह्लादयन्देवान्देवो देवशिखामणिः। अवोचदथ गंभीरं वचनं मधुमंगलम् ॥२८॥

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां षष्ठोऽध्यायः ॥ ६ ॥

## अथ सप्तमोऽध्यायः

### ( समरे शम्भोरनलस्तम्भाविष्कारः )

ईश्वर उवाच

ाकाः स्वस्ति वः कच्चिद्वर्तते मम शासनात्। जगच्च देवतावंशः स्वस्वकर्मणि किं न वा ॥ १ ॥
ाव विदितं युद्धं ब्रह्मविष्ण्वोर्मया सुराः। भवतामभितापेन पौनरुक्तेन भाषितम् ॥ २ ॥
सस्मितया माध्व्या कुमारपरिभाषया। समतोषयदम्बायाः स पतिस्तत्सुरव्रजम् ॥ ३ ॥
युद्धांगणं गंतुं हरिधात्रोरधीश्वरः। आज्ञापयद्गणेशानां शतं तत्रैव संसदि ॥ ४ ॥
वाद्यं बहुविधं प्रयाणाय परेशितुः। गणेश्वराश्च संनद्धा नानावाहनभूषणाः ॥ ५ ॥
प्रणवाकारमाद्यंतं पंचमंडलमंडितम् ।
रोह रथं भद्रमंबिकापतिरीश्वरः। ससूनुगणमिंद्राद्याः सर्वेऽप्यनुययुः सुराः ॥ ६ ॥

चित्रध्वजव्यजनचामरपुष्पवर्षसंगीतनृत्यनिवहैरपि वाद्यवर्गैः ।
संमानितः पशुपतिः परया च देव्या साकं तयोः समरभूमिमगात्ससैन्यः ॥ ७॥
समीक्ष्य तु तयोर्युद्धं निगूढोऽभ्रं समास्थितः। समाप्तवाद्यनिर्घोषः शांतोरुगणनिःस्वनः।
अथ ब्रह्माच्युतौ वीरौ हंतुकामौ परस्परम्। माहेश्वरेण चास्त्रेण तथा पाशुपतेन च।
अस्त्रज्वालैरथो दग्धं ब्रह्मविष्णवोर्जगत्त्रयम्। ईशोऽपि तं निरीक्ष्याथ ह्यकालप्रलयं भृशम्
महानलस्तंभविभीषणाकृतिर्बभूव तन्मध्यतले स निष्कलः ॥११॥

ते अस्त्रे चापि सज्वाले लोकसंहरणक्षमे। निपेततुः क्षणेनैव ह्याविर्भूते महानले
दृष्ट्वा तदद्भुतं चित्रमस्त्रशांतिकरं शुभम्। किमेतदद्भुताकारमित्यूचुश्च परस्परम्
अतींद्रियमिदं स्तंभमग्निरूपं किमुत्थितम्। अस्योर्ध्वमपि चाधश्च आवयोर्लक्ष्यमेव हि
इति व्यवस्थितौ वीरौ मिलितौ वीरमानिनौ। तत्परौ तत्परीक्षार्थं प्रतस्थातेऽथ सत्वरम्
आवयोर्मिश्रयोस्तत्र कार्यमेकं न संभवेत्। इत्युक्त्वा सूकरतनुर्विष्णुस्तस्यादिमीयिवान्
तथा ब्रह्मा हंसतनुस्तदंतं वीक्षितुं ययौ। भित्त्वा पातालनिलयं गत्वा दूरतरं हरिः
नापश्यत्तस्य संस्थानं स्तंभस्यानलवर्चसः। श्रांतः स सूकरहरिः प्राप पूर्वं रणांगणम्
अथ गच्छंस्तु व्योम्ना च विधिस्तात पिता तव। ददर्श केतकीपुष्पं किंचिद्विच्युतमद्भुतम्
अतिसौरभ्यमम्लानं बहुवर्षच्युतं तथा। अन्वीक्ष्य च तयोः कृत्यं भगवान्परमेश्वरः
परिहासं तु कृतवान्कंपनाच्चलितं शिरः। तस्मात्तावनुगृह्णातुं च्युतं केतकमुत्तमम्
किं त्वं पतसि पुष्पेश पुष्पराट् केन वै धृतः। आदिमस्याप्रमेयस्य स्तंभमध्याच्च्युतिश्चिरम्
न संपश्यामि तस्मात्त्वं जह्याशामन्तदर्शने। अस्यांतस्य च सेवार्थं हंसमूर्तिरिहागतः
इतः परं सखे मेऽद्य त्वया कर्तव्यमीप्सितम्। मया सह त्वया वाच्यमेतद्विष्णोश्च सन्निधौ
स्तंभांतो वीक्षितो धात्रा तत्र साक्ष्यहमच्युत।
इत्युक्त्वा केतकं तत्र प्रणनाम पुनः पुनः। असत्यमपि शस्तं स्यादापदीत्यनुशासनम्
समीक्ष्य तत्राच्युतमायतश्रमं प्रनष्टहर्षं तु ननर्त हर्षात् ।
उवाच चैनं परमार्थमच्युतं षंढात्तवादः स विधिस्ततोऽच्युतम् ॥२६॥
स्तंभाग्रमेतत्समुदीक्षितं हरे तत्रैव साक्षी ननु केतकं त्विदम्।
ततोऽवदत्तत्र हि केतकं मृषा तथेति तद्धातृवचस्तदंतिके।
हरिश्च तत्सत्यमितीव चिंतयंश्चकार तस्मै विधये नमः स्वयम् ॥२७॥
षोडशैरुपचारैश्च पूजयामास तं विधिम् ॥२८॥

विधिं प्रहर्तुं शठमग्निलिंगतः स ईश्वरस्तत्र बभूव साकृतिः।
समुत्थितः स्वामिविलोकनात्पुनः प्रकंपपाणिः परिगृह्य तत्पदम् ॥२९॥
आद्यंतहीनवपुषि त्वयि मोहबुद्ध्या भूयान्विमर्श इह नावति कामनोत्थः।
स त्वं प्रसीद करुणाकर कश्मलं नौ मृष्टं क्षमस्व विहितं भवतैव केल्या ॥३०॥

ईश्वर उवाच

वत्स प्रसन्नोऽस्मि हरे यतस्त्वमीशत्वमिच्छन्नपि सत्यवाक्यम्।
ब्रूयास्ततस्ते भविता जनेषु साम्यं मया सत्कृतिरप्यलप्सि ॥३१॥
इतः परं ते पृथगात्मनश्च क्षेत्रप्रतिष्ठोत्सवपूजनं च ॥३२॥
इति देवः पुरा प्रीतः सत्येन हरये परम्। ददौ स्वसाम्यमत्यर्थं देवसंघे च पश्यति ॥३३॥
इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां सप्तमोऽध्यायः ॥ ७ ॥

## अथ अष्टमोऽध्यायः

### ( ब्रह्मोपरि शिवस्यानुग्रहः )

नंदिकेश्वर उवाच

ससर्जाथ महादेवः पुरुषं कंचिदद्भुतम्। भैरवाख्यं भ्रुवोर्मध्याद्ब्रह्मदर्पजिघांसया ॥ १ ॥
स वै तदा तत्र पतिं प्रणम्य शिवमंगणे। किं कार्यं करवाण्यत्र शीघ्रमाज्ञापय प्रभो ॥ २ ॥
वत्स योऽयं विधिः साक्षाज्जगतामाद्यदैवतम्। नूनमर्चय खड्गं स्वं तिग्मेन जवसा परम् ॥ ३ ॥
स वै गृहीत्वैककरेण, केशं तत्पंचमं दृप्तमसत्यभाषिणम्।
छित्त्वा शिरो ह्यस्य निहंतुमुद्यतः प्रकंपयन्खड्गमतिस्फुटं करैः ॥ ४ ॥
पिता तवोत्सृष्टविभूषणांबरस्रगुत्तरीयामलकेशसंहतिः।
प्रवातरंभेव लतेव चंचलः पपात वै भैरवपादपंकजे ॥ ५ ॥
तावद्विधिं तात दिदृक्षुरच्युतः कृपालुरस्मत्प्रतिपादपल्लवम्।
निषिच्य बाष्पैरवदत्कृतांजलिर्यथा शिशुः स्वं पितरं कलाक्षरम् ॥ ६ ॥

अच्युत उवाच

त्वया प्रयत्नेन पुरा हि दत्तं यदस्य पंचाननमीश चिह्नम्।
तस्मात्क्षमस्वाद्यमनुग्रहार्हं कुरु प्रसादं विधये ह्यमुष्मै ॥ ७ ॥
इत्यर्थितोऽच्युतेनेशस्तुष्टः सुरगणांगणे। निवर्तयामास तदा भैरवं ब्रह्मदंडतः ॥ ८ ॥
अथाह देवः कितवं विधिं विगतकंधरम्। ब्रह्मंस्त्वमर्हणाकांक्षी शठेशत्वं समास्थितः ॥ ९ ॥

नातस्ते सत्कृतिर्लोके भूयात्स्थानोत्सवादिकम् ।

ब्रह्मोवाच

स्वामिन्प्रसीदाद्य महाविभूते मन्ये वरं मे शिरसः प्रमोक्षम् ॥१०॥

नमस्तुभ्यं भगवते बंधवे विश्वयोनये। सहिष्णवे च दोषाणां शंभवे शैलधन्वने।

ईश्वर उवाच

अराजभयमेतद्वै जगत्सर्वं नशिष्यति। ततस्त्वं जहि दंडार्हं वह लोकधुरं शिशो।
वरं ददामि ते तत्र गृहाण दुर्लभं परम्। वैतानिकेषु गृह्येषु यज्ञेषु च भवान्गुरुः।
निष्फलस्त्वदृते यज्ञः सांगश्च सहदक्षिणः। अथाह देवः कितवं केतकं कूटसाक्षिणम्।
रे रे केतक दुष्टस्त्वं शठ दूरमितो व्रज। ममापि प्रेम ते पुष्पे माभूत्पूजास्वितः परम्।
इत्युक्ते तत्र देवेन केतकं देवजातयः। सर्वा निवारयामासुस्तत्पार्श्वादन्यतस्तदा।

केतक उवाच

नमस्ते नाथ मे जन्म निष्फलं भवदाज्ञया। सफलं क्रियतां तात क्षम्यतां मम किल्बिषम्।
ज्ञानाज्ञानकृतं पापं नाशयत्येव ते स्मृतिः। तादृशे त्वयि दृष्टे मे मिथ्यादोषः कुतो भवेत्।
तथा स्तुतस्तु भगवान्केतकेन सभास्थले। न मे त्वद्धारणं योग्यं सत्यवागहमीश्वरः।
मदीयास्त्वां धरिष्यंति जन्म ते सफलं ततः। त्वं वै वितानव्याजेन ममोपरि भविष्यसि।
इत्यनुगृह्य भगवान्केतकं विधिमाधवौ। विरराज सभामध्ये सर्वदेवैरभिष्टुतः।

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायामष्टमोऽध्यायः ॥ ८ ॥

## अथ नवमोऽध्यायः

### ( शिवस्यात्मनो महेश्वराभिधानम् )

नंदिकेश्वर उवाच

तत्रांतरे तौ च नाथं प्रणम्य विधिमाधवौ। बद्धांजलिपुटौ तूष्णीं तस्थतुर्दक्षवामगौ।
तत्र संस्थाप्य तौ देवं सकुटुंबं वरासने। पूजयामासतुः पूज्यं पुण्यैः पुरुषवस्तुभिः।
पौरुषं प्राकृतं वस्तु ज्ञेयं दीर्घाल्पकालिकम्। हारनूपुरकेयूरकिरीटमणिकुंडलैः
यज्ञसूत्रोत्तरीयस्रक्क्षौममाल्यांगुलीयकैः । पुष्पताम्बूलकर्पूरचंदनागुरुलेपनैः
धूपदीपसितच्छत्रव्यंजनध्वजचामरैः । अन्यैर्दिव्योपहारैश्च वाङ्मनोतीतवैभवैः
पतियोग्यैः पशुलभ्यैस्तौ समार्चयतां पतिम्। यद्यच्छ्रेष्ठतमं वस्तु पतियोग्यं हितध्वज
तद्वस्त्वखिलमीशोऽपि पारंपर्यचिकीर्षया। सभ्यानां प्रददौ हृष्टः पृथक्तत्र यथाक्रमम्।

कोलाहलो महानासीत्तत्र तद्वस्तु गृह्यताम्। तत्रैव ब्रह्मविष्णुभ्यां चार्चितः शंकरः पुरा ॥ ८ ॥
प्रसन्नः प्राह तौ नम्रौ सस्मितं भक्तिवर्धनः ।

ईश्वर उवाच

तुष्टोऽहमद्य वां वत्सौ पूजयाऽस्मिन्महादिने ॥ ९ ॥
दिनमेतत्ततः पुण्यं भविष्यति महत्तरम्। शिवरात्रिरिति ख्याता तिथिरेषा मम प्रिया ॥१०॥
एतत्काले तु यः कुर्यात्पूजां मल्लिंगवेरयोः। कुर्यात्स जगतः कृत्यं स्थितिसर्गादिकं पुमान् ॥११॥
शिवरात्रावहोरात्रं निराहारो जितेंद्रियः। अर्चयेद्वा यथान्यायं यथाबलमवंचकः ॥१२॥
यत्फलं मम पूजायां वर्षमेकं निरंतरम्। तत्फलं लभते सद्यः शिवरात्रौ मदर्चनात् ॥१३॥
मद्धर्मवृद्धिकालोऽयं चंद्रकाल इवांबुधेः। प्रतिष्ठाद्युत्सवो यत्र मामको मंगलायनः ॥१४॥
यत्पुनः स्तंभरूपेण स्वाविरासमहं पुरा। स कालो मार्गशीर्षे तु स्यादार्द्रार्क्षमर्भकौ ॥१५॥
आर्द्रायां मार्गशीर्षे तु यः पश्येन्मामुमासखम्। मद्बेरमपि वा लिंगं स गुहादपि मे प्रियः ॥१६॥
अलं दर्शनमात्रेण फलं तस्मिन्दिने शुभे। अभ्यर्चनं चेदधिकं फलं वाचामगोचरम् ॥१७॥
णरंगतलेऽमुष्मिन्यदहं लिंगवर्ष्मणा। जृम्भितो लिंगवत्तस्माल्लिंगस्थानमिदं भवेत् ॥१८॥
अनाद्यंतमिदं स्तंभमणुमात्रं भविष्यति। दर्शनार्थं हि जगतां पूजनार्थं हि पुत्रकौ ॥१९॥
भोगावहमिदं लिंगं भुक्तिमुक्त्येकसाधनम्। दर्शनस्पर्शनध्यानाज्जंतूनां जन्ममोचनम् ॥२०॥
अनलाचलसंकाशं यदिदं लिंगमुत्थितम्। अरुणाचलमित्येव तदिदं ख्यातिमेष्यति ॥२१॥
अत्र तीर्थं च बहुधा भविष्यति महत्तरम्। मुक्तिरप्यत्र जंतूनां वासेन मरणेन च ॥२२॥
थोत्सवादिकल्याणं जनावासं तु सर्वतः। अत्र दत्तं हुतं जप्तं सर्वं कोटिगुणं भवेत् ॥२३॥
त्क्षेत्रादपि सर्वस्मात्क्षेत्रमेतन्महत्तरम्। अत्र संस्मृतिमात्रेण मुक्तिर्भवति देहिनाम् ॥२४॥
स्मान्महत्तरमिदं क्षेत्रमत्यंतशोभनम्। सर्वकल्याणसंपूर्णं सर्वमुक्तिकरं शुभम् ॥२५॥
र्चयित्वाऽत्र मामेव लिंगे लिंगिनमीश्वरम्। सालोक्यं चैव सामीप्यं सारूप्यं सार्ष्टिरेव च ॥२६॥
युज्यमिति पंचैते क्रियादीनां फलं मतम्। सर्वेऽपि यूयं सकलं प्राप्स्यथाशु मनोरथम् ॥२७॥

नंदिकेश्वर उवाच

त्यनुगृह्य भगवान्विनीतौ विधिमाधवौ। यत्पूर्वं प्रहतं युद्धे तयोः सैन्यं परस्परम् ॥२८॥
दुत्थापयदत्यर्थं स्वशक्त्याऽमृतधारया। तयोर्मौढ्यं च वैरं च व्यपनेतुमुवाच तौ ॥२९॥
कलं निष्कलं चेति स्वरूपद्वयमस्ति मे। नान्यस्य कस्यचित्तस्मादन्यः सर्वोऽप्यनीश्वरः ॥३०॥
रस्तात्स्तंभरूपेण पश्चाद्रूपेण चार्भकौ। ब्रह्मत्वं निष्कलं प्रोक्तमीशत्वं सकलं तथा ॥३१॥
यं ममैव संसिद्धं न मदन्यस्य कस्यचित्। तस्मादीशत्वमन्येषां युवयोरपि न क्वचित् ॥३२॥

तदज्ञानेन वां वृत्तमीशमानं महाद्भुतम्। तन्निराकर्तुमत्रैवमुत्थितोऽहं रणक्षितौ।
त्यजतं मानमात्मीयं मयीशं कुरुतं मतिम्। मत्प्रसादेन लोकेषु सर्वोऽप्यर्थः प्रकाशते।
गुरूक्तिर्व्यंजकं तत्र प्रमाणं वा पुनः पुनः। ब्रह्मतत्त्वमिदं गूढं भवत्प्रीत्या भणाम्यहम्।
अहमेव परं ब्रह्म मत्स्वरूपं कलाकलम्। ब्रह्मत्वादीश्वरश्चाहं कृत्यं मेऽनुग्रहादिकम्।
बृहत्त्वाद्बृंहणत्वाच्च ब्रह्माहं ब्रह्मकेशवौ। समत्वाद्व्यापकत्वाच्च तथैवात्माहमर्भकौ।
अनात्मानः परे सर्वे जीवा एव न संशयः। अनुग्रहाद्यं सर्गांतं जगत्कृत्यं च पंचकम्।
ईशत्वादेव मे नित्यं न मदन्यस्य कस्यचित्। आदौ ब्रह्मत्वबुद्ध्यर्थं निष्कलं लिंगमुत्थितम्।
तस्मादज्ञातमीशत्वं व्यक्तं द्योतयितुं हि वाम्। सकलोऽहमतो जातः साक्षादीशस्तु तत्क्षणे।
सकलत्वमतो ज्ञेयमीशत्वं मयि सत्वरम्। यदिदं निष्कलं स्तंभं मम ब्रह्मत्वबोधकम्।
लिंगलक्षणयुक्तत्वान्मम लिंगं भवेदिदम्। तदिदं नित्यमभ्यर्च्यं युवाभ्यामत्र पुत्रकौ।
मदात्मकमिदं नित्यं मम सान्निध्यकारणम्। महत्पूज्यमिदं नित्यमभेदाल्लिंगलिंगिनोः।
यत्र प्रतिष्ठितं येन मदीयं लिंगमीदृशम्। तत्र प्रतिष्ठितः सोऽहमप्रतिष्ठोऽपि वत्सकौ।
मत्साम्यमेकलिंगस्य स्थापने फलमीरितम्। द्वितीये स्थापिते लिंगे मदैक्यं फलमेव हि।
लिंगं प्राधान्यतः स्थाप्यं तथा वेरं तु गौणकम्। लिंगाभावेन तत्क्षेत्रं सवेरमपि सर्वतः।

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः

( ब्रह्मविष्णुभ्यां पंचकृत्यमोंकारमंत्रं चोपदिश्य शिवस्यान्तर्धानम् )

ब्रह्मविष्णू ऊचतुः

सर्गादिपंचकृत्यस्य लक्षणं ब्रूहि नौ प्रभो।

शिव उवाच

मत्कृत्यबोधनं गुह्यं कृपया प्रब्रवीमि वाम् ॥१॥

सृष्टिः स्थितिश्च संहारस्तिरोभावोऽप्यनुग्रहः। पंचैव मे जगत्कृत्यं नित्यसिद्धमजाच्युतौ।
सर्गः संसारसंरंभस्तत्प्रतिष्ठा स्थितिर्मता। संहारो मर्दनं तस्य तिरोभावस्तदुत्क्रमः।
तन्मोक्षोऽनुग्रहस्तन्मे कृत्यमेवं हि पंचकम्। कृत्यमेतद्वहत्यन्यस्तूष्णीं गोपुरबिंबवत्।
सर्गादि यच्चतुःकृत्यं संसारपरिजृम्भणनम्। पंचमं मुक्तिहेतुर्वै नित्यं मयि च सुस्थिरम्।
तदिदं पंचभूतेषु दृश्यते मामकैर्जनैः। सृष्टिर्भूमौ स्थितिस्तोये संहारः पावके तथा।
तिरोभावोऽनिले तद्वदनुग्रह इहांबरे। सृज्यते धरया सर्वमद्भिः सर्वं प्रवर्द्धते।

अर्द्यते तेजसा सर्वं वायुना चापनीयते। व्योम्नाऽनुगृह्यते सर्वं ज्ञेयमेवं हि सूरिभिः ॥८॥
पंचकृत्यमिदं वोढुं समास्ति मुखपंचकम्। चतुर्दिक्षु चतुर्वक्त्रं तन्मध्ये पंचमं मुखम् ॥९॥
युवाभ्यां तपसा लब्धमेतत्कृत्यद्वयं सुतौ। सृष्टिस्थित्यभिधं भाग्यं मत्तः प्रीतादतिप्रियम् १०॥
तथा रुद्रमहेशाभ्यामन्यत्कृत्यद्वयं परम्। अनुग्रहाख्यं केनापि लब्धुं नैव हि शक्यते ॥११॥
तत्सर्वं पौर्विकं कर्म युवाभ्यां कालविस्मृतम्। न तद्रुद्र महेशाभ्यां विस्मृतं कर्म तादृशम् ॥१२॥
रूपे वेषे च कृत्ये च वाहने चासने तथा। आयुधादौ च मत्साम्यमस्माभिस्तत्कृते कृतम् ॥
मद्ध्यानविरहाद्वत्सौ मौढ्यं वामेवमागतम्। मज्ज्ञाने सति मैवं स्यान्मानं रूपं महेशवत्॥१४॥
तस्मान्मज्ज्ञानसिद्ध्यर्थं मंत्रमोंकारनामकम्। इतः परं प्रजपतं मामकं मानभंजनम् ॥१५॥
उपादिशं निजं मंत्रमोंकारमुरुमंगलम्। ॐकारो मन्मुखाज्जज्ञे प्रथमं मत्प्रबोधकः ॥१६॥
वाचकोऽयमहं वाच्यो मंत्रोऽयं हि मदात्मकः। तदनुस्मरणं नित्यं ममानुस्मरणं भवेत् ॥१७॥
अकार उत्तरात्पूर्वमुकारः पश्चिमाननात्। मकारो दक्षिणमुखाद्बिंदुः प्राङ्मुखतस्तथा ॥१८॥
नादो मध्यमुखादेवं पंचधाऽसौ विजृम्भितः। एकीभूतः पुनस्तद्वदोमित्येकाक्षरोऽभवत् ॥१९॥
नामरूपात्मकं सर्वं वेद भूतकुलद्वयम्। व्याप्तमेतेन मंत्रेण शिवशक्त्योश्च बोधकः ॥२०॥
अस्मात्पंचाक्षरं जज्ञे बोधकं सकलस्य तत्। अकारादिक्रमेणैव नकारादि यथाक्रमम् ॥२१॥
अस्मात्पंचाक्षराज्जाता मातृकाः पंचभेदतः। तस्माच्छिरश्चतुर्वक्त्रात्त्रिपाद्गायत्रिरेव हि ॥२२॥
वेदः सर्वस्ततो जज्ञे ततो वै मंत्रकोटयः। तत्तन्मंत्रेण तत्सिद्धिः सर्वसिद्धिरितो भवेत् ॥२३॥
अनेन मंत्रकंदेन भोगो मोक्षश्च सिद्ध्यति। सकला मंत्रराजानः साक्षाद्भोगप्रदाः शुभाः ॥२४॥

## नंदिकेश्वर उवाच

पुनस्तयोस्तत्र तिरः पटं गुरुः प्रकल्प्य मंत्रं च समादिशत्परम्।
निधाय तच्छीर्ष्णि करांबुजं शनैरुदङ्मुखं संस्थितयोः सहांबिकः ॥२५॥
त्रिरुच्चार्याग्रहीन्मंत्रं यंत्रतंत्रोक्तिपूर्वकम्। शिष्यौ च तौ दक्षिणायामात्मानं च समार्पयत् ॥२६॥
प्रबद्धहस्तौ किल तौ तदंतिके तमूचतुर्देववरं जगद्गुरुम् ॥ २७ ॥

## ब्रह्माऽच्युतावूचतुः

नमो निष्कलरूपाय नमो निष्कलतेजसे। नमः सकलनाथाय नमस्ते सकलात्मने ॥२८॥
नमः प्रणववाच्याय नमः प्रणवलिंगिने। नमः सृष्ट्यादिकर्त्रे च नमः पंचमुखाय ते ॥२९॥
पंचब्रह्मस्वरूपाय पंचकृत्याय ते नमः। आत्मने ब्रह्मणे तुभ्यमनंतगुणशक्तये ॥३०॥
सकलाकलरूपाय शंभवे गुरवे नमः। इति स्तुत्वा गुरुं पद्यैर्ब्रह्मविष्णू च नेमतुः ॥३१॥

ईश्वर उवाच

वत्सकौ सर्वतत्त्वं च कथितं दर्शितं च वाम्। जपतं प्रणवं मंत्रं देवीदिष्टं मदात्मकम्॥
ज्ञानं च सुस्थिरं भाग्यं सर्वं भवति शाश्वतम्। आर्द्रायां च चतुर्दश्यां तज्जाप्यं त्वक्षयं भवे
सूर्यगत्या महार्द्रायामेकं कोटिगुणं भवेत्। मृगशीर्षांतिमो भागः पुनर्वस्वादिमस्तथा॥
आर्द्रासमं सदा ज्ञेयं पूजाहोमादितर्पणे। दर्शनं तु प्रभाते च प्रातःसंगवकालयोः॥
चतुर्दशी तथा ग्राह्या निशीथव्यापिनी भवेत्। प्रदोषव्यापिनी चैव परयुक्ता प्रशस्यते॥
लिंगं वेरं च मे तुल्यं यजतां लिंगमुत्तमम्। तस्माल्लिंगं परं पूज्यं वेरादपि मुमुक्षुभिः॥
लिंगमोंकारमंत्रेण वेरं पंचाक्षरेण तु। स्वयमेव हि सद्द्रव्यैः प्रतिष्ठाप्यं परैरपि॥
पूजयेदुपचारैश्च मत्पदं सुलभं भवेत्। इति शास्य तथा शिष्यौ तत्रैवांतर्हितः शिवः॥

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां दशमोऽध्यायः ॥१०॥

## अथ एकादशोऽध्यायः

### ( शिवलिंगपूजनदानप्रकाराः )

ऋषय ऊचुः

कथं लिंगं प्रतिष्ठाप्यं कथं वा तस्य लक्षणम्। कथं वा तत्समभ्यर्च्यं देशे काले च केन हि॥

सूत उवाच

युष्मदर्थं प्रवक्ष्यामि बुद्ध्यतामवधानतः। अनुकूले शुभे काले पुण्ये तीर्थे तटे तथा॥
यथेष्टं लिंगमारोप्यं यत्र स्यान्नित्यमर्चनम्। पार्थिवेन तथाप्येनं तैजसेन यथारुचि॥
कल्पलक्षणसंयुक्तं लिंगं पूजाफलं लभेत्। सर्वलक्षणसंयुक्तं सद्यः पूजाफलप्रदम्॥
चरे विशिष्यते सूक्ष्मं स्थावरे स्थूलमेव हि। सलक्षणं सपीठं च स्थापयेच्छिवनिर्मितम्॥
मंडलं चतुरस्रं वा त्रिकोणमथवा तथा। खट्वांगवन्मध्यसूक्ष्मं लिंगपीठं महाफलम्॥
प्रथमं मृच्छिलादिभ्यो लिंगं लोहादिभिः कृतम्। येन लिंगं तेन पीठं स्थावरे हि विशिष्यते॥
लिंगं पीठं चरे त्वेकं लिंगं बाणकृतं विना। लिंगप्रमाणं कर्तॄणां द्वादशांगुलमुत्तमम्॥
न्यूनं चेत्फलमल्पं स्यादधिकं नैव दुष्यते। कर्तुरेकांगुलन्यूनं चरेऽपि च तथैव हि॥
आदौ विमानं शिल्पेन कार्यं देवगणैर्युतम्। तत्र गर्भगृहे रम्ये दृढे दर्पणसंनिभे॥
भूषिते नवरत्नैश्च दिग्द्वारे च प्रधानके। नीलं रक्तं च वैडूर्यं श्यामं मारकतं तथा॥
मुक्ताप्रवालगोमेदवज्राणि नवरत्नकम्। मध्ये लिंगं महद्द्रव्यं निःक्षिपेत्सहवैदिके॥
संपूज्य लिंगं सद्याद्यैः पंचस्थाने यथाक्रमम्। अग्नौ च हुत्वा बहुधा हविषा सकुलं च मां

अभ्यर्च्य गुरुमाचार्यमर्थैः कामैश्च बांधवम्। दद्यादैश्वर्यमर्थिभ्यो जडमप्यजड तथा ॥१४॥
स्थावरं जंगमं जीवं सर्वं संतोष्य यत्नतः। सुवर्णपूरिते श्वभ्रं नवरत्नैश्च पूरिते ॥१५॥
सद्यादि ब्रह्म चोच्चार्य ध्यात्वा देवं परं शुभम्। उदीर्य च महामंत्रमोंकारं नादघोषितम् ॥१६॥
लिंगं तत्र प्रतिष्ठाप्य लिंगं पीठेन योजयेत्। लिंगं सपीठं निक्षिप्य नित्यलेपेन बंधयेत् ॥१७॥
एवं वेरं च संस्थाप्यं तत्रैव परमं शुभम्। पंचाक्षरेण वेरं तु उत्सवार्थं बहिस्तथा ॥१८॥
वेरं गुरुभ्यो गृह्णीयात्साधुभिः पूजितं तु वा। एवं लिंगे च वेरे च पूजा शिवपदप्रदा ॥१९॥
पुनश्च द्विविधं प्रोक्तं स्थावरं जंगमं तथा। स्थावरं लिंगमित्याहुस्तरुगुल्मादिकं तथा ॥२०॥
जंगमं लिंगमित्याहुः कृमिकीटादिकं तथा। स्थावरस्य च शुश्रूषा जंगमस्य च तर्पणम् ॥२१॥
तत्तत्सुखानुरागेण शिवपूजां विदुर्बुधाः। पीठमंबामयं सर्वं शिवलिंगं च चिन्मयम् ॥२२॥
यथा देवीमुमामंके धृत्वा तिष्ठति शंकरः। तथा लिंगमिदं पीठं धृत्वा तिष्ठति संततम् ॥२३॥
एवं स्थाप्य महालिंगं पूजयेदुपचारकैः। नित्यपूजा यथाशक्ति ध्वजादिकरणं तथा ॥२४॥
इति संस्थापयेल्लिंगं साक्षाच्छिवपदप्रदम्। अथवा चरलिंगे तु षोडशैरुपचारकैः ॥२५॥
पूजयेच्च यथान्यायं क्रमाच्छिवपदप्रदम्। आवाहनं चासनं च अर्घ्यं पाद्यं तथैव च ॥२६॥
तदंगाचमनं चैव स्नानमभ्यंगपूर्वकम्। वस्त्रं गंधं तथा पुष्पं धूपदीपनिवेदनम् ॥२७॥
नीराजनं च तांबूलं नमस्कारो विसर्जनम्। अथवाऽर्घ्यादिकं कृत्वा नैवेद्यांतं यथाविधि ॥२८॥
अथाभिषेकं नैवेद्यं नमस्कारं च तर्पणम्। यथाशक्ति सदा कुर्यात्क्रमाच्छिवपदप्रदम् ॥२९॥
अथवा मानुषे लिंगेऽप्यार्षे दैवे स्वयंभुवि। स्थापितेऽपूर्वके लिंगे सोपचारं यथा तथा ॥३०॥
पूजोपकरणे दत्ते यत्किंचित्फलमश्नुते। प्रदक्षिणानमस्कारैः क्रमाच्छिवपदप्रदम् ॥३१॥
लिंगदर्शनमात्रं वा नियमेन शिवप्रदम्। मृत्पिष्टगोशकृत्पुष्पैः करवीरेण वा फलैः ॥३२॥
गुडेन नवनीतेन भस्मनाऽन्नैर्यथारुचि। लिंगं यत्नेन कृत्वाऽन्ते यजेत्तदनुसारतः ॥३३॥
अंगुष्ठादावपि तथा पूजामिच्छन्ति केचन। लिंगकर्मणि सर्वत्र निषेधोऽस्ति न कर्हिचित् ॥३४॥
सर्वत्र फलदाता हि प्रयासानुगुणं शिवः। अथवा लिंगदानं वा लिंगमूल्यमथापि वा ॥३५॥
श्रद्धया शिवभक्ताय दत्तं शिवपदप्रदम्। अथवा प्रणवं नित्यं जपेद्दशसहस्रकम् ॥३६॥
संध्ययोश्च सहस्रं वा ज्ञेयं शिवपदप्रदम्। जपकाले मकारांतं मनःशुद्धिकरं भवेत् ॥३७॥
समाधौ मानसं प्रोक्तमुपांशु सार्वकालिकम्। समानप्रणवं चेदं बिंदुनादयुतं विदुः ॥३८॥
अथ पंचाक्षरं नित्यं जपेदयुतमादरात्। संध्ययोश्च सहस्रं वा ज्ञेयं शिवपदप्रदम् ॥३९॥
प्रणवेनादिसंयुक्तं ब्राह्मणानां विशिष्यते। दीक्षायुक्तं गुरोर्ग्राह्यं मंत्रं ह्यथ फलाप्तये ॥४०॥
कुंभस्नानं मंत्रदीक्षा मातृकान्यासमेव च। ब्राह्मणः सत्यपूतात्मा गुरुर्ज्ञानी विशिष्यते ॥४१॥

द्विजानां च नमःपूर्वमन्येषां च नमोऽन्तकम्। स्त्रीणां च क्वचिदिच्छंति नमोंतं च यथाविधि॥
विप्रस्त्रीणां नमःपूर्वमिदमिच्छंति केचन। पंचकोटिजपं कृत्वा सदाशिवसमो भवेत्॥
एकद्वित्रिचतुःकोट्या ब्रह्मादीनां पदं व्रजेत्। जपेदक्षरलक्षं वा अक्षराणां पृथक्पृथक्॥
अथवाऽक्षरलक्षं वा ज्ञेयं शिवपदप्रदम्। सहस्रं तु सहस्राणां सहस्रेण दिनेन हि॥
जपेन्मंत्रादिष्टसिद्धिर्नित्यं ब्राह्मणभोजनात्। अष्टोत्तरसहस्रं वै गायत्रीं प्रातरेव हि॥
ब्राह्मणस्तु जपेन्नित्यं क्रमाच्छिवपदप्रदाम्। वेदमंत्रांश्च सूक्तानि जपेन्नियममास्थितः॥
एकं दशार्णमंत्रं च शतोनं च तदूर्ध्वकम्। अयुतं च सहस्रं च शतमेकं विना भवेत्॥
वेदपारायणं चैव ज्ञेयं शिवपदप्रदम्। अन्यान्बहुतरान्मंत्राञ्जपेदक्षरलक्षतः॥
एकाक्षरांस्तथा मंत्राञ्जपेदक्षरकोटितः। ततः परं जपेच्चैव सहस्रं भक्तिपूर्वकम्॥
एवं कुर्याद्यथाशक्ति क्रमाच्छिवपदं लभेत्। नित्यं रुचिकरं त्वेकं मंत्रमामरणांतिकम्॥
सहस्रमोमिति जपेत्सर्वाभीष्टं शिवाज्ञया। पुष्पारामादिकं वापि तथा संमार्जनादिकम्॥
शिवाय शिवकार्यार्थं कृत्वा शिवपदं लभेत्। शिवक्षेत्रे तथा वासं नित्यं कुर्याच्च भक्तितः॥
जडानामजडानां च सर्वेषां भुक्तिमुक्तिदम्। तस्माद्वासं शिवक्षेत्रे कुर्यादामरणं बुधः॥
लिंगाद्धस्तशतं पुण्यं क्षेत्रे मानुषके विदुः। सहस्रारत्निमात्रं तु पुण्यं क्षेत्रे तथार्षके॥
दैवलिंगे तथा ज्ञेयं सहस्रारत्निमानतः। धनुःप्रमाणसाहस्रं पुण्यं क्षेत्रे स्वयंभुवि॥
पुण्यक्षेत्रे स्थिता वापी कूपाद्यं पुष्कराणि च। शिवगंगेति विज्ञेयं शिवस्य वचनं यथा॥
तत्र स्नात्वा तथा दत्त्वा जपित्वा हि शिवं व्रजेत्। शिवक्षेत्रं समाश्रित्य वसेदामरणं तथा॥
दाहं दशाहं मास्यं वा सपिंडीकरणं तु वा। आब्दिकं वा शिवक्षेत्रे क्षेत्रे पिंडमथापि वा॥
सर्वपापविनिर्मुक्तः सद्यः शिवपदं लभेत्। अथवा सप्तरात्रं वा वसेद्वा पंचरात्रकम्॥
त्रिरात्रमेकरात्रं वा क्रमाच्छिवपदं लभेत्। स्ववर्णानुगुणं लोके स्वाचारात्प्राप्नुते नरः॥
वर्णोद्धारेण भक्त्या च तत्फलातिशयं नरः। सर्वं कृतं कामनया सद्यः फलमवाप्नुयात्॥
सर्वं कृतमकामेन साक्षाच्छिवपदप्रदम्। प्रातर्मध्याह्नसायाह्नमहस्त्रिष्वेकतः क्रमात्॥
प्रातर्विधिकरं ज्ञेयं मध्याह्नं कामिकं तथा। सायाह्नं शांतिकं ज्ञेयं रात्रावपि तथैव हि॥
कालो निशीथो वै प्रोक्तो मध्ययामद्वयं निशि। शिवपूजा विशेषेण तत्कालेऽभीष्टसिद्धिदा॥
एवं ज्ञात्वा नरः कुर्वन्यथोक्तफलभाग्भवेत्। कलौ युगे विशेषेण फलसिद्धिस्तु कर्मणा॥
उक्तेन केनचिद्वापि ह्यधिकारविभेदतः। सद्वृत्तिः पापभीरुश्चेत्तत्तत्फलमवाप्नुयात्॥

ऋषय ऊचुः

अथ क्षेत्राणि पुण्यानि समासात्कथयस्व नः। सर्वाः स्त्रियश्च पुरुषा यान्याश्रित्य पदं लभेत्॥
सूत योगिवरश्रेष्ठ शिवक्षेत्रागमांस्तथा।

सूत उवाच

शृणुत श्रद्धया सर्वक्षेत्राणि च तदागमान् ॥६६॥

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायामेकादशोऽध्यायः ॥११॥

## अथ द्वादशोऽध्यायः

### ( शिवक्षेत्रवर्णनम् )

सूत उवाच

शृणुध्वमृषयः प्राज्ञाः शिवक्षेत्रं विमुक्तिदम्। तदागमांस्ततो वक्ष्ये लोकरक्षार्थमेव हि ॥ १ ॥
पंचाशत्कोटिविस्तीर्णा सशैलवनकानना। शिवाज्ञया हि पृथिवी लोकं धृत्वा च तिष्ठति ॥ २ ॥
तत्र तत्र शिवक्षेत्रं तत्र तत्र निवासिनाम्। मोक्षार्थं कृपया देवः क्षेत्रं कल्पितवान्प्रभुः ॥ ३ ॥
परिग्रहादृषीणां च देवानां च परिग्रहात्। स्वयंभूतान्यथान्यानि लोकरक्षार्थमेव हि ॥ ४ ॥
तीर्थे क्षेत्रे सदा कार्यं स्नानदानजपादिकम्। अन्यथा रोगदारिद्र्यमूकत्वाद्याप्नुयान्नरः ॥ ५ ॥
अथास्मिन्भारते वर्षे प्राप्नोति मरणं नरः। स्वयंभूस्थानवासेन पुनर्मानुष्यमाप्नुयात् ॥ ६ ॥
क्षेत्रे पापस्य करणं दृढं भवति भूसुराः। पुण्यक्षेत्रे निवासे हि पापमण्वपि नाचरेत् ॥ ७ ॥
येन केनाप्युपायेन पुण्यक्षेत्रे वसेन्नरः। सिंधोः शतनदीतीरे संति क्षेत्राण्यनेकशः ॥ ८ ॥
सरस्वती नदी पुण्या प्रोक्ता षष्टिमुखा तथा। तत्तत्तीरे वसेत्प्राज्ञः क्रमाद्ब्रह्मपदं लभेत् ॥ ९ ॥
हैमवद्गिरिजा गंगा पुण्या शतमुखा नदी। तत्तीरे चैव काश्यादिपुण्यक्षेत्राण्यनेकशः ॥१०॥
तत्र तीरं प्रशस्तं हि मृगे मृगबृहस्पतो। शोणभद्रो दशमुखः पुण्योऽभीष्टफलप्रदः ॥११॥
तत्र स्नानोपवासेन पदं वैनायकं लभेत्। चतुर्विंशमुखा पुण्या नर्मदा च महानदी ॥१२॥
तस्यां स्नानेन वासेन पदं वैष्णवमाप्नुयात्। तमसा द्वादशमुखा रेवा दशमुखा नदी ॥१३॥
गोदावरी महापुण्या ब्रह्मगोवधनाशिना। एकविंशमुखा प्रोक्ता रुद्रलोकप्रदायिनी ॥१४॥
कृष्णावेणी पुण्यनदी सर्वपापक्षयावहा। साष्टादशमुखा प्रोक्ता विष्णुलोकप्रदायिनी ॥१५॥
तुंगभद्रा दशमुखा ब्रह्मलोकप्रदायिनी। सुवर्णमुखरी पुण्या प्रोक्ता नवमुखा तथा ॥१६॥
तत्रैव सुप्रजायंते ब्रह्मलोकच्युतास्तथा। सरस्वती च पंपा च कन्या श्वेतनदी शुभा ॥१७॥
एतासां तीरवासेन इन्द्रलोकमवाप्नुयात्। सह्याद्रिजा महापुण्या कावेरीति महानदी ॥१८॥
सप्तविंशमुखा प्रोक्ता सर्वाभीष्टप्रदायिनी। तत्तीराः स्वर्गदाश्चैव ब्रह्मविष्णुपदप्रदाः ॥१९॥

शिवलोकप्रदाः शैवास्तथाऽभीष्टफलप्रदाः। नैमिषे बदरे स्नायान्मेषगे च गुरौ रवौ॥
ब्रह्मलोकप्रदं विद्यात्ततः पूजादिकं तथा। सिंधुनद्यां तथा स्नानं सिंहे कर्कटगे रवौ॥
केदारोदकपानं च स्नानं च ज्ञानदं विदुः। गोदावर्यां सिंहमासे स्नायात्सिंहबृहस्पतौ॥
शिवलोकप्रदमिति शिवेनोक्तं तथा पुरा। यमुनाशोणयोः स्नायाद्गुरौ कन्यागते रवौ॥
धर्मलोके दंतिलोके महाभोगप्रदं विदुः। कावेर्यां च तथा स्नायात्तुलागे तु रवौ गुरौ॥
विष्णोर्वचनमाहात्म्यात्सर्वाभीष्टप्रदं विदुः। वृश्चिके मासि संप्राप्ते तथार्के गुरुवृश्चिके॥
नर्मदायां नदीस्नानाद्विष्णुलोकमवाप्नुयात्। सुवर्णमुखरीस्नानं चापगे च गुरौ रवौ॥
शिवलोकप्रदमिति ब्रह्मणो वचनं यथा। मृगमासि तथा स्नायाज्जाह्नव्यां मृगगे गुरौ॥
शिवलोकप्रदमिति ब्रह्मणो वचनं यथा।
ब्रह्मविष्ण्वोः पदे भुक्त्वा तदंते ज्ञानमाप्नुयात् ॥२८॥
गंगायां माघमासे तु तथा कुंभगते रवौ। श्राद्धं वा पिंडदानं वा तिलोदकमथापि वा॥
वंशद्वयपितॄणां च कुलकोट्युद्धरं विदुः। कृष्णावेण्यां प्रशंसंति मीनगे च गुरौ रवौ॥
तत्तत्तीर्थे च तन्मासि स्नानमिंद्रपदप्रदम्। गंगां वा सह्यजां वापि समाश्रित्य वसेद्बुधः॥
तत्कालकृतपापस्य क्षयो भवति निश्चितम्। रुद्रलोकप्रदान्येव संति क्षेत्राण्यनेकशः॥
ताम्रपर्णी वेगवती ब्रह्मलोकफलप्रदे। तयोस्तीरे हि संत्येव क्षेत्राणि स्वर्गदानि च॥
संति क्षेत्राणि तन्मध्ये पुण्यदानि च भूरिशः। तत्र तत्र वसन्प्राज्ञस्तादृशं च फलं लभेत्॥
सदाचारेण सद्वृत्त्या सदा भावनयापि च। वसेद्दयालुः प्राज्ञो वै नान्यथा तत्फलं लभेत्॥
पुण्यक्षेत्रे कृतं पुण्यं बहुधा ऋद्धिमृच्छति। पुण्यक्षेत्रे कृतं पापं महदण्वपि जायते॥
तत्कालं जीवनार्थश्चेत्पुण्येन क्षयमेष्यति। पुण्यमैश्वर्यदं प्राहुः कायिकं वाचिकं तथा॥
मानसं च तथा पापं तादृशं नाशयेद्द्विजाः। मानसं वज्रलेपं तु कल्पकल्पानुगं तथा॥
ध्यानादेव हि तन्नश्येन्नान्यथा नाशमृच्छति। वाचिकं जापजालेन कायिकं कायशोषणात्॥
दानाद्धनकृतं नश्यन्नान्यथा कल्पकोटिभिः। क्वचित्पापेन पुण्यं च वृद्धिपूर्वेण नश्यति॥
बीजांशश्चैव वृद्ध्यंशो भोगांशः पुण्यपापयोः। ज्ञाननाश्यो हि बीजांशो वृद्धिरुक्तप्रकारतः॥
भोगांशो भोगनाश्यस्तु नान्यथा पुण्यकोटिभिः। बीजप्ररोहे नष्टे तु शेषो भोगाय कल्पते॥
देवानां पूजया चैव ब्रह्मणानां च दानतः।
तपोधिक्याच्च कालेन भोगः सह्यो भवेन्नृणाम्। तस्मात्पापमकृत्वैव वस्तव्यं सुखमिच्छता॥

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां द्वादशोऽध्यायः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः

### ( सदाचारवर्णनम् )

ऋषय ऊचुः

सदाचारं श्रावयाशु येन लोकाञ्जयेद्बुधः। धर्माधर्ममयान्ब्रूहि स्वर्गनारकदांस्तथा ॥ १ ॥

सूत उवाच

सदाचारयुतो विद्वान्ब्राह्मणो नाम नामतः। वेदाचारयुतो विप्रो ह्येतैरेकैकवान्द्विजः ॥ २ ॥
अल्पाचारोऽल्पवेदश्च क्षत्रियो राजसेवकः। किंचिदाचारवान्वैश्यः कृषिवाणिज्यकृत्तथा ॥ ३ ॥
शूद्रब्राह्मण इत्युक्तः स्वयमेव हि कर्षकः। असूयालुः परद्रोही चंडालद्विज उच्यते ॥ ४ ॥
पृथिवीपालको राजा इतरे क्षत्रिया मताः। धान्यादिक्रयवान्वैश्य इतरो वणिगुच्यते ॥ ५ ॥
ब्रह्मक्षत्रियवैश्यानां शुश्रूषुः शूद्र उच्यते। कर्षको वृषलो ज्ञेय इतरे चैव दस्यवः ॥ ६ ॥
सर्वो ह्युषः प्राङ्मुखश्च चिन्तयेद्देवपूर्वकान्। धर्मानर्थांश्च तत्क्लेशानायं च व्ययमेव च ॥ ७ ॥
आयुर्द्वेषश्च मरणं पापं भाग्यं तथैव च। व्याधिः पुष्टिस्तथा शक्तिः प्रातरुत्थानदिक्फलम् ॥ ८ ॥
निशांत्ययामोषा ज्ञेया यामार्धं संधिरुच्यते। तत्काले तु समुत्थाय विण्मूत्रे विसृजेद्द्विजः ॥ ९ ॥
गृहाद्दूरं ततो गत्वा बाह्यतः प्रावृतस्तथा। उदङ्मुखः समाविश्य प्रतिबंधेऽन्यदिङ्मुखः १० ॥
जलाग्निब्राह्मणादीनां देवानां नाभिमुख्यतः। लिंगं पिधाय वामेन मुखमन्येन पाणिना ॥ ११ ॥
मलमुत्सृज्य चोत्थाय न पश्येच्चैव तन्मलम्। उद्धृतेन जलेनैव शौचं कुर्याज्जलाद्बहिः ॥ १२ ॥
अथवा देवपित्रर्षितीर्थावतरणं विना। सप्त वा पंच वा तिस्रो गुदं संशोधयेन्मृदा ॥ १३ ॥
लिंगे कर्कोटमात्रं तु गुदे प्रसृतिरिष्यते। तत उत्थाय पद्धस्तशौचं गण्डूषमष्टकम् ॥ १४ ॥
येन केन च पात्रेण काष्ठेन च जलाद्बहिः। कार्यं संत्यज्य तर्ज्जनीं दंतधावनमीरितम् ॥ १५ ॥
जलदेवान्नमस्कृत्य मंत्रेण स्नानमाचरेत्। अशक्तः कंठदघ्नं वा कटिदघ्नमथापि वा ॥ १६ ॥
आजानुजलमासिच्य मंत्रस्नानं समाचरेत्। देवादींस्तर्पयेद्विद्वांस्तत्र तीर्थजलेन च ॥ १७ ॥
धौतवस्त्रं समादाय पंचकच्छेन धारयेत्। उत्तरीयं च किंचैव धार्यं सर्वेषु कर्मसु ॥ १८ ॥
नद्यादितीर्थस्नाने तु स्नानवस्त्रं न शोधयेत्। वापीकूपगृहादौ तु स्नानादूर्ध्वं नयेद्बुधः ॥ १९ ॥
शिलादार्वादिके वापि जले वापि स्थलेऽपि वा। संशोध्य पीडयेद्वस्त्रं पितॄणां तृप्तये द्विजः ॥ २० ॥
जाबालकोक्तमंत्रेण भस्मना च त्रिपुंड्रकम्। अन्यथा चेज्जले पातस्ततो नरकमृच्छति ॥ २१ ॥
आपोहिष्ठेति शिरसि प्रोक्षयेत्पापशांतये। यस्येति मंत्रं पादे तु संधिप्रोक्षणमुच्यते ॥ २२ ॥
पादे मूर्ध्नि हृदि चैव मूर्ध्नि हृत्पाद एव च। हृत्पादमूर्ध्नि संप्रोक्ष्य मंत्रस्नानं विदुर्बुधाः ॥ २३ ॥

ईषत्स्पर्शे च दौःस्वास्थ्ये राजराष्ट्रभयेऽपि च। अगत्या गतिकाले च मंत्रस्नानं समाचरेत्॥
प्रातः सूर्यानुवाकेन सायमग्न्यनुवाकतः। अपः पीत्वा तथा मध्ये पुनः प्रोक्षणमाचरेत्॥
गायत्र्या जपमंत्रांते त्रिरूर्ध्वं प्राग्विनिक्षिपेत्। मंत्रेण सह चैकं वै मध्येऽर्घ्यं तु रवेर्द्विजा॥
अथ जाते च सायाह्ने भुवि पश्चिमदिङ्मुखः। उद्धृत्य दद्यात्प्रातस्तु मध्याह्नेऽङ्गुलिभिस्तथा॥
अंगुलीनां च रंध्रेण लंबं पश्येद्दिवाकरम्। आत्मप्रदक्षिणं कृत्वा शुद्धाचमनमाचरेत्॥
सायं मुहूर्तादर्वाक्तु कृता संध्या वृथा भवेत्। अकालात्काल इत्युक्तो दिनेऽतीते यथाक्रमम्॥
दिवाऽतीते च गायत्रीं शतं नित्यं क्रमाज्जपेत्। आदशाहात्परातीतं गायत्रीं लक्षमभ्यसेत्॥
मासातीते तु नित्ये हि पुनश्चोपनयं चरेत्। ईशो गौरी गुहो विष्णुर्ब्रह्मा चंद्रश्च वै यमः॥
एवंरूपांश्च वै देवांस्तर्पयेदर्थसिद्धये। ब्रह्मार्पणं ततः कृत्वा शुद्धाचमनमाचरेत्॥
तीर्थदक्षिणतः शस्ते मठे मंत्रालये बुधः। तत्र देवालये वापि गृहे वा नियतस्थले॥
सर्वान्देवान्नमस्कृत्य स्थिरबुद्धिः स्थिरासनः। प्रणवं पूर्वमभ्यस्य गायत्रीमभ्यसेत्ततः॥
जीवब्रह्मैक्यविषयं बुद्ध्वा प्रणवमभ्यसेत्। त्रैलोक्यसृष्टिकर्तारं स्थितिकर्तारमच्युतम्॥
संहर्तारं तथा रुद्रं स्वप्रकाशमुपास्महे। ज्ञानकर्मेंद्रियाणां च मनोवृत्तीर्धियस्तथा॥
भोगमोक्षप्रदे धर्मे ज्ञाने च प्रेरयेत्सदा। इत्थमर्थधिया ध्यायन्ब्रह्म प्राप्नोति निश्चयम्॥
केवलं वा जपेन्नित्यं ब्राह्मण्यस्य च पूर्तये। सहस्रमभ्यसेन्नित्यं प्रातर्ब्राह्मणपुंगवः॥
अन्येषां च यथाशक्ति मध्याह्ने च शतं जपेत्। सायं द्विदशकं ज्ञेयं शिखाष्टकसमन्वितम्॥
मूलाधारं समारभ्य द्वादशांशस्थितांस्तथा। विद्येशब्रह्मविष्ण्वीशजीवात्मपरमेश्वरान्॥
ब्रह्मबुद्ध्या तदैक्यं च सोहंभावनया जपेत्। तानेव ब्रह्मरंध्रादौ कायाद्बाह्ये च भावयेत्॥
महत्तत्त्वं समारभ्य शरीरं तु सहस्रकम्। एकैकस्माज्जपादेकमतिक्रम्य शनैः शनैः॥
परस्मिन्योजयेज्जीवं जपतत्त्वमुदाहृतम्। शतद्विदशकं देहं शिखाष्टकसमन्वितम्॥
मंत्राणां जप एवं हि जपमादिक्रमाद्विदुः। सहस्रं ब्रह्मदं विद्याच्छतमैंद्रं पदं विदुः॥
इतरत्त्वात्मरक्षार्थं ब्रह्मयोनिषु जायते। दिवाकरमुपस्थाय नित्यमित्थं समाचरेत्॥
लक्षद्वादशयुक्तस्तु पूर्णब्राह्मण ईरितः। गायत्र्या लक्षहीनं तु वेदकार्ये न योजयेत्॥
आसप्ततेस्तु नियमं पश्चात्प्रव्राजनं चरेत्। प्रातर्द्वादशसाहस्रं प्रव्राजी प्रणवं जपेत्॥
दिने दिने त्वतिक्रांते नित्यमेवं क्रमाज्जपेत्। मासादौ क्रमशोऽतीते सार्धलक्षजपेन हि॥
अत उर्ध्वमतिक्रांते पुनः प्रैषं समाचरेत्। एवं कृत्वा दोषशांतिरन्यथा रौरवं व्रजेत्॥
धर्मार्थयोस्ततो यत्नं कुर्यात्कामी न चेतरः। ब्राह्मणो मुक्तिकामः स्याद्ब्रह्मज्ञानं सदाऽभ्यसेत्॥
धर्मादर्थोऽर्थतो भोगो भोगाद्वैराग्यसंभवः। धर्मार्जितार्थभोगेन वैराग्यमुपजायते॥

परीतार्थभोगेन राग एव प्रजायते। धर्मश्च द्विविधः प्रोक्तो द्रव्यदेहद्वयेन च ॥५२॥
व्यमिज्यादिरूपं स्यात्तीर्थस्नानादि दैहिकम्। धर्मेण धनमाप्नोति तपसा दिव्यरूपता ॥५३॥
ष्कामः शुद्धिमाप्नोति शुद्ध्या ज्ञानं न संशयः। कृतादौ हि तपः श्लाघ्यं द्रव्यधर्मः कलौ युगे ॥
ते ध्यानाज्ज्ञानसिद्धिस्त्रेतायां तपसा तथा। द्वापरे यजनाज्ज्ञानं प्रतिमापूजया कलौ ॥५५॥
दृशं पुण्यपापं वा तादृशं फलमेव हि। द्रव्यदेहांगभेदेन न्यूनवृद्धिक्षयादिकम् ॥५६॥
धर्मो हिंसिकारूपो धर्मस्तु सुखरूपकः। अधर्माद्दुःखमाप्नोति धर्माद्वै सुखमेधते ॥५७॥
द्याद्दुर्वृत्तितो दुःखं सुखं विद्यात्सुवृत्तितः। धर्मार्जनमतः कुर्याद्भोगमोक्षप्रसिद्धये ॥५८॥
कुटुम्बस्य विप्रस्य चतुर्जनयुतस्य च। शतवर्षस्य वृत्तिं तु दद्यात्तद्ब्रह्मलोकदम् ॥५९॥
द्रायणसहस्रं तु ब्रह्मलोकप्रदं विदुः। सहस्रस्य कुटुंबस्य प्रतिष्ठां क्षत्रियश्चरेत् ॥६०॥
न्द्रलोकप्रदं विद्यादयुतं ब्रह्मलोकदम्। यां देवतां पुरस्कृत्य दानमाचरते नरः ॥६१॥
तल्लोकमवाप्नोति इति वेदविदो विदुः। अर्थहीनः सदा कुर्यात्तपसामर्जनं तथा ॥६२॥
र्थाच्च तपसा प्राप्यं सुखमक्षय्यमश्नुते। अर्थार्जनमथो वक्ष्ये न्यायतः सुसमाहितः ॥६३॥
तात्प्रतिग्रहाच्चैव याजनाच्च विशुद्धतः। अदैन्यादनतिक्लेशाद्ब्राह्मणो धनमर्जयेत् ॥६४॥
त्रियो बाहुवीर्येण कृषिगोरक्षणाद्विशः। न्यायार्जितस्य वित्तस्य दानात्सिद्धिं समश्नुते ॥६५॥
नसिद्ध्या मोक्षसिद्धिः सर्वेषां गुर्वनुग्रहात्। मोक्षात्स्वरूपसिद्धिः स्यात्परानंदं समश्नुते ॥६६॥
संगात्सर्वमेतद्वै नराणां जायते द्विजाः। धनधान्यादिकं सर्वं देयं वै गृहमेधिना ॥६७॥
त्काले वस्तुजातं फलं वा धान्यमेव च। तत्तत्सर्वं ब्राह्मणेभ्यो देयं वै हितमिच्छता ॥६८॥
ं चैव सदा देयमन्नं क्षुद्व्याधिशांतये। क्षेत्रं धान्यं तथाऽऽमान्नमन्नमेव चतुर्विधम् ॥६९॥
वत्कालं यदन्नं वै भुक्त्वा श्रवणमेधते। तावत्कृतस्य पुण्यस्य त्वर्धं दातुर्न संशयः ॥७०॥
ता हि गृहीतस्य दानाद्वै तपसा तथा। पापसंशोधनं कुर्यादन्यथा रौरवं व्रजेत् ॥७१॥
त्मवित्तं त्रिधा कुर्याद्धर्मवृद्ध्यात्मभोगतः। नित्यं नैमित्तिकं काम्यं कर्म कुर्यात्तु धर्मतः ॥७२॥
तस्य वर्धनं कुर्याद्वृद्ध्यंशेन हि साधकः। हितेन मितमेध्येन भोगं भोगांशतश्चरेत् ॥७३॥
र्जिते दशांशं हि देयं पापस्य शुद्धये। क्षेत्रेण कुर्याद्धर्मादि अन्यथा रौरवं व्रजेत् ॥७४॥
वा पापबुद्धिः स्यात्क्षयं वा सत्यमेष्यति। वृद्धिवाणिज्यके देयं षडंशं च विचक्षणैः ॥७५॥
प्रतिग्रहे देयं चतुर्थांशं द्विजोत्तमैः। अकस्मादुत्थितेऽर्थे हि देयमर्धं द्विजोत्तमैः ॥७६॥
त्प्रतिग्रहे सर्वं दुर्दानं सागरे क्षिपेत्। आहूय दानं कर्तव्यमात्मभोगसमृद्धये ॥७७॥
सर्वं सदा देयमात्मशक्त्यनुसारतः। जन्मान्तरे ऋणी हि स्याददत्ते पृष्टवस्तुनि ॥७८॥
ं च तथा दोषं न प्रशंसेद्विचक्षणः। विद्वेषेण तथा ब्रह्मञ्छ्रुतं दृष्टं च नो वदेत् ॥७९॥

न वदेत्सर्वजंतूनां हृदि रोषकरं बुधः। संध्यययोरग्निकार्यं च कुर्यादैश्वर्यसिद्धये
अशक्तस्त्वेककाले वा सूर्याग्नी च यथाविधि। तंडुलं धान्यमाज्यं वा फलं कंदं हविस्तथा
स्थालीपाकं तथा कुर्याद्यथाकालं यथाविधि। प्रधानहोममात्रं वा हव्याभावे समाचरेत्
नित्यसंधानमित्युक्तं तमजस्रं विदुर्बुधाः। अथवा जपमात्रं वा सूर्यवंदनमेव च
एवमात्मार्थिनः कुर्युरर्थार्थी च यथाविधि। ब्रह्मयज्ञरता नित्यं देवपूजारतास्तथा
अग्निपूजापरा नित्यं गुरुपूजारतास्तथा। ब्राह्मणानां तृप्तिकराः सर्वे स्वर्गस्य भागिनः

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां त्रयोदशोऽध्यायः ॥१३॥

## अथ चतुर्दशोऽध्यायः

### (अग्नियज्ञादिवर्णनम्)

**ऋषय ऊचुः**

अग्नियज्ञं देवयज्ञं ब्रह्मयज्ञं तथैव च। गुरुपूजां ब्रह्मतृप्तिं क्रमेण ब्रूहि नः प्रभो।

**सूत उवाच**

अग्नौ जुहोति यद्द्रव्यमग्नियज्ञः स उच्यते। ब्रह्मचर्याश्रमस्थानां समिदाधानमेव हि।
समिदग्नौ व्रताद्यं च विशेषयजनादिकम्। प्रथमाश्रमिणामेवं यावदौपासनं द्विजाः
आत्मन्यारोपिताग्नीनां वनिनां यतिनां द्विजाः। हितं च मितमेध्यान्नं स्वकाले भोजनं हुतिः
औपासनाग्निसंधानं समारभ्य सुरक्षितम्। कुंडे वाप्यथ भाण्डे वा तदजस्रं समीरितम्
अग्निमात्मन्यरण्यां वा राजदैववशाद्ध्रुवम्। अग्नित्यागभयादुक्तं समारोपितमुच्यते
संपत्करी तथा ज्ञेया सायमग्न्याहुतिर्द्विजाः। आयुष्करीति विज्ञेया प्रातः सूर्याहुतिस्तथा
अग्नियज्ञो ह्ययं प्रोक्तो दिवा सूर्यनिवेशनात्। इंद्रादीन्सकलान्देवानुदिश्याग्नौ जुहोति यत्
देवयज्ञं हि तं विद्यात्स्थालीपाकादिकान्क्रतून्। चौलादिकं तथा ज्ञेयं लौकिकाग्नौ प्रतिष्ठितम्
ब्रह्मयज्ञं द्विजः कुर्याद्देवानां तृप्तये सकृत्। ब्रह्मयज्ञ इति प्रोक्तो वेदस्याध्ययनं भवेत्
नित्यानंतरमासोऽयं ततस्तु न विधीयते। अनग्नौ देवयजनं शृणुत श्रद्धयाऽऽदरात्
आदिसृष्टौ महादेवः सर्वज्ञः करुणाकरः। सर्वलोकोपकारार्थं वारान्कल्पितवान्प्रभुः
संसारवैद्यः सर्वज्ञः सर्वभेषजभेषजम्। आदावारोग्यदं वारं स्ववारं कृतवान्प्रभुः
संपत्करं स्वमायाया वारं च कृतवांस्ततः। जनने दुर्गतिक्रांते कुमारस्य ततः परम्
आलस्यदुरितक्रांत्यै वारं कल्पितवान्प्रभुः। रक्षकस्य तथा विष्णोर्लोकानां हितकाम्यया

ष्ट्यर्थं चैव रक्षार्थं वारं कल्पितवान्प्रभुः। आयुष्करं ततो वारमायुषां कर्तुरेव हि ॥१६॥
लोक्यसृष्टिकर्त्तुर्हि ब्रह्मणः परमेष्ठिनः। जगदायुष्यसिद्ध्यर्थं वारं कल्पितवान्प्रभुः ॥१७॥
ादौ त्रैलोक्यवृद्ध्यर्थं पुण्यपापे प्रकल्पिते। तयोः कर्त्रोस्ततो वारमिंद्रस्य च यमस्य च ॥१८॥
ागप्रदं मृत्युहरं लोकानां च प्रकल्पितम्। आदित्यादीन्स्वस्वरूपान्सुखदुःखस्य सूचकान् १९
रेशान्कल्पयित्वादौ ज्योतिश्चक्रप्रतिष्ठितान्। स्वस्ववारे तु तेषां तु पूजा स्वस्वफलप्रदा ॥२०॥
ारोग्यं संपदश्चैव व्याधीनां शांतिरेव च। पुष्टिरायुस्तथा भोगो मृतेर्हानिर्यथाक्रमम् ॥२१॥
रक्रमफलं प्राहुर्देवप्रीतिपुरःसरम्। अन्येषामपि देवानां पूजायाः फलदः शिवः ॥२२॥
ानां प्रीतये पूजा पंचधैव प्रकल्पिता। तत्तन्मंत्रजपो होमो दानं चैव तपस्तथा ॥२३॥
ंडिले प्रतिमायां च ह्यग्नौ ब्राह्मणविग्रहे। समाराधनमित्येवं षोडशैरुपचारकैः ॥२४॥
त्तरोत्तरवैशिष्ट्यात्पूर्वाभावे तथोत्तरम्। नेत्रयोः शिरसो रोगे तथा कुष्ठस्य शांतये ॥२५॥
ादित्यं पूजयित्वा तु ब्राह्मणान्भोजयेत्ततः। दिनं मासं तथा वर्षं वर्षत्रयमथापि वा ॥२६॥
रब्धं प्रबलं चेत्स्यान्नश्येद्रोगजरादिकम्। जपाद्यमिष्टदेवस्य वारादीनां फलं विदुः ॥२७॥
पशांतिर्विशेषेण ह्यादिवारो निवेदयेत्। आदित्यस्यैव देवानां ब्राह्मणानां विशिष्टदम् २८॥
मवारे च लक्ष्म्यादीन्संपदर्थं यजेद्बुधः। आज्यान्नेन तथा विप्रान्सपत्नीकांश्च भोजयेत् ॥
ल्यादीन्भौमवारे तु यजेद्रोगप्रशांतये। माषमुद्गाढकान्नेन ब्राह्मणांश्चैव भोजयेत् ॥३०॥
म्यवारे तथा विष्णुं दध्यन्नेन यजेद्बुधः। पुत्रमित्रकलत्रादिपुष्टिर्भवति सर्वदा ॥३१॥
युष्कामो गुरुवारे देवानां पुष्टिसिद्धये। उपवीतेन वस्त्रेण क्षीराज्येन यजेद्बुधः ॥३२॥
गार्थं भृगुवारे तु यजेद्देवान्समाहितः। षड्रसोपेतमन्नं च दद्याद्ब्राह्मणतृप्तये ॥३३॥
णां च तृप्त्यै तद्वद्देयं वस्त्रादिकं शुभम्। अपमृत्युहरे मंदे रुद्रादींश्च यजेद्बुधः ॥३४॥
लहोमेन दानेन तिलान्नेन च भोजयेत्। इत्थं यजंश्च विबुधानारोग्यादिफलं लभेत् ॥३५॥
ानां नित्ययजने विशेषयजनेऽपि च। स्नाने दाने जपे होमे ब्राह्मणानां च तर्पणे ॥३६॥
थिनक्षत्रयोगे च तत्तद्देवप्रपूजने। आदिवारादिवारेषु सर्वज्ञो जगदीश्वरः ॥३७॥
रूपेण सर्वेषामारोग्यादिफलप्रदः। देशकालानुसारेण तथा पात्रानुसारतः ॥३८॥
ं श्रद्धानुसारेण तथा लोकानुसारतः। तारतम्यक्रमाद्देवस्त्वारोग्यादीन्प्रयच्छति ॥३९॥
ादावशुभांते च जन्मर्क्षेषु गृहे गृही। आरोग्यादिसमृद्ध्यर्थमादित्यादीन्ग्रहान्यजेत् ४०॥
माद्वै देवयजनं सर्वाभीष्टफलप्रदम्। समंत्रकं ब्राह्मणानामन्येषां चैव तांत्रिकम् ॥४१॥
ाशक्त्यनुरूपेण कर्तव्यं सर्वदा नरैः। सप्तस्वपि च वारेषु नरैः शुभफलेप्सुभिः ॥४२॥
रद्रास्तपसा देवान्यजेदाढ्यो धनेन हि। पुनश्चैवंविधं धर्मं कुरुते श्रद्धया सह ॥४३॥

पुनश्च भोगान्विविधान्भुक्त्वा भूमौ प्रजायते। छायां जलाशयं ब्रह्मप्रतिष्ठां धर्मसंचयम्
सर्वं च वित्तवान्कुर्यात्सदा भोगप्रसिद्धये। कालाच्च पुण्यपाकेन ज्ञानसिद्धिः प्रजायते
य इमं शृणुतेऽध्यायं पठते वा नरो द्विजाः। श्रवणस्योपकर्त्ता च देवयज्ञफलं लभेत्

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां चतुर्दशोऽध्यायः ॥१४॥

## अथ पञ्चदशोऽध्यायः

(देवयज्ञादिषु देशकालपात्रादिवर्णनम्)

ऋषय ऊचुः

देशादीन्क्रमशो ब्रूहि सूत सर्वार्थवित्तम।

सूत उवाच

शुद्धं गृहं समफलं देवयज्ञादिकर्मसु ॥१॥

ततो दशगुणं गोष्ठं जलतीरं ततो दश। ततो दशगुणं बिल्वतुलस्यश्वत्थमूलकम्
ततो देवालयं विद्यात्तीर्थतीरं ततो दश। ततो दशगुणं नद्यास्तीर्थनद्यास्ततो दश
तत्सगंगानदीतीर्थं तस्या दशगुणं भवेत्। गङ्गा गोदावरी चैव कावेरी ताम्रपर्णिका
सिंधुश्च सरयू रेवा सप्त गङ्गाः प्रकीर्तिताः। ततोऽब्धितीरे दश च पर्वताग्रे ततो दश
सर्वस्मादधिकं ज्ञेयं यत्र वा रोचते मनः। कृते पूर्णफलं ज्ञेयं यज्ञदानादिकं तथा
त्रेतायुगे त्रिपादं च द्वापरेऽर्धं सदा स्मृतम्। कलौ पादं तु विज्ञेयं तत्पादोनं ततोऽर्धे
शुद्धात्मनः शुद्धदिनं पुण्यं समफलं विदुः। तस्माद्दशगुणं ज्ञेयं रविसंक्रमणे बुधाः
विषुवे तद्दशगुणमयने तद्दश स्मृतम्। तद्दश मृगसंक्रांतौ तच्चंद्रग्रहणे दश
ततश्च सूर्यग्रहणे पूर्णं कालोत्तमे विदुः। जगद्रूपस्य सूर्यस्य विषयोगाच्च रोगदम्
अतस्तद्विषशांत्यर्थं स्नानदानजपांश्चरेत्। विषशांत्यर्थकालत्वात्स कालः पुण्यदः स्मृतः
जन्मर्क्षे च व्रतांते च सूर्यरागोपमं विदुः। महतां संगकालश्च कोट्यर्कग्रहणं विदुः
तपोनिष्ठा ज्ञाननिष्ठा योगिनो यतयस्तथा। पूजायाः पात्रमेते हि पापसंक्षयकारणम्
चतुर्विंशतिलक्षं वा गायत्र्या जपसंयुतः। ब्राह्मणस्तु भवेत्पात्रं संपूर्णफलभोगदम्
पतनात्त्रायत इति पात्रं शास्त्रे प्रयुज्यते। दातुश्च पातकात्त्राणात्पात्रमित्यभिधीयते
गयकं त्रायते पाताद्गायत्रीत्युच्यते हि सा। यथाऽर्थहीनो लोकेऽस्मिन्परस्यार्थं न यच्छति
अर्थवानिह यो लोके परस्यार्थं प्रयच्छति। स्वयं शुद्धो हि पूतात्मा नरान्संत्रातुमर्हति

गायत्रीजपशुद्धो हि शुद्धब्राह्मण उच्यते। तस्माद्दाने जपे होमे पूजायां सर्वकर्मणि ॥१८॥
दानं कर्तुं तथा त्रातुं पात्रत्वं ब्राह्मणोऽर्हति। अन्नस्य क्षुधितं पात्रं नारीनरमयात्मकम् ॥१९॥
ब्राह्मणं श्रेष्ठमाहूय यत्काले सुसमाहितम्। तदर्थं शब्दमर्थं वा सद्बोधकमभीष्टदम् ॥२०॥
इच्छावतः प्रदानं च संपूर्णफलदं विदुः। यत्प्रश्नानंतरं दत्तं तदर्धफलदं विदुः ॥२१॥
यत्सेवकाय दत्तं स्यात्तत्पादफलदं विदुः। जातिमात्रस्य विप्रस्य दीनवृत्तेर्द्विजर्षभाः ॥२२॥
दत्तमर्थं हि भोगाय भूर्लोके दशवार्षिकम्। वेदयुक्तस्य विप्रस्य स्वर्गे हि दशवार्षिकम् ॥२३॥
गायत्रीजपयुक्तस्य सत्यं हि दशवार्षिकम्। विष्णुभक्तस्य विप्रस्य दत्तं वैकुंठदं विदुः ॥२४॥
शिवभक्तस्य विप्रस्य दत्तं कैलासदं विदुः। तत्तल्लोकोपभोगार्थं सर्वेषां दानमिष्यते ॥२५॥
दशांगमन्नं विप्रस्य भानुवारे ददन्नरः। परजन्मनि चारोग्यं दशवर्षं समश्नुते ॥२६॥
बहुमानमथाह्वानमभ्यंगं पादसेवनम्। वासो गंधाद्यर्चनं च घृतापूपरसोत्तरम् ॥२७॥
षड्रसं व्यंजनं चैव तांबूलं दक्षिणोत्तरम्। गमश्चानुगमश्चैव स्वन्नदानं दशांगकम् ॥२८॥
दशांगमन्नं विप्रेभ्यो दशभ्यो वै ददन्नरः। अर्कवारे तथाऽऽरोग्यं शतवर्षं समश्नुते ॥२९॥
सोमवारादिवारेषु तत्तद्वारगुणे फलम्। अन्नदानस्य विज्ञेयं भूर्लोके परजन्मनि ॥३०॥
सप्तस्वपि च वारेषु दशभ्यश्च दशांगकम्। अन्नं दत्त्वा शतं वर्षमारोग्यादिकमश्नुते ॥३१॥
एवं शतेभ्यो विप्रेभ्यो भानुवारे ददन्नरः। सहस्रवर्षमारोग्यं शर्वलोके समश्नुते ॥३२॥
सहस्रेभ्यस्तथा दत्त्वाऽयुतवर्षं समश्नुते। एवं सोमादिवारेषु विज्ञेयं हि विपश्चिता ॥३३॥
भानुवारे सहस्राणां गायत्रीपूतचेतसाम्। अन्नं दत्त्वा सत्यलोके ह्यारोग्यादि समश्नुते ॥३४॥
अयुतानां तथा दत्त्वा विष्णुलोके समश्नुते। अन्नं दत्त्वा तु लक्षाणां रुद्रलोके समश्नुते ॥३५॥
बालानां ब्रह्मबुद्ध्या हि देयं विद्यार्थिभिर्नरैः। यूनां च विष्णुबुद्ध्या हि पुत्रकामार्थिभिर्नरैः ॥३६॥
वृद्धानां रुद्रबुद्ध्या हि देयं ज्ञानार्थिभिर्नरैः। बालस्त्री भारतीबुद्ध्या बुद्धिकामैर्नरोत्तमैः ॥३७॥
लक्ष्मीबुद्ध्या युवस्त्रीषु भोगकामैर्नरोत्तमैः। वृद्धासु पार्वतीबुद्ध्या देयमात्मार्थिभिर्जनैः ॥३८॥
शिलवृत्त्योंछवृत्त्या च गुरुदक्षिणयार्जितम। शुद्धद्रव्यमिति प्राहुस्तत्पूर्णफलदं विदुः ॥३९॥
शुक्लप्रतिग्रहाद्दत्तं मध्यमं द्रव्यमुच्यते। कृषिवाणिज्यकोपेतमधमं द्रव्यमुच्यते ॥४०॥
क्षत्रियाणां विशां चैव शौर्यवाणिज्यकार्जितम्। उत्तमं द्रव्यमित्याहुः शूद्राणां भृतकार्जितम् ॥
स्त्रीणां धर्मार्थिनां द्रव्यं पैतृकं भर्तृकं तथा। गवादीनां द्वादशानां चैत्रादिषु यथाक्रमम् ॥४२॥
संभूय वा पुण्यकाले दद्यादिष्टसमृद्धये। गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ॥४३॥
रौप्यं लवणकूष्मांडं कन्याद्वादशकं तथा। गोदानाद्दत्तगव्येन गोमयेनोपकारिणा ॥४४॥
धनधान्याद्याश्रितानां दुरितानां निवारणम्। जलस्नेहाद्याश्रितानां दुरितानां तु गोजलैः ॥४५॥

कायिकादित्रयाणां तु क्षीरदध्याज्यकैस्तथा। तथा तेषां च पुष्टिश्च विज्ञेया हि विपश्चिता।
भूदानं तु प्रतिष्ठार्थमिह चामुत्र च द्विजाः। तिलदानं बलार्थं हि सदा मृत्युजयं विदुः
हिरण्यं जाठराग्नेस्तु वृद्धिदं वीर्यदं तथा। आज्यं पुष्टिकरं विद्याद्वस्त्रमायुष्करं विदुः
धान्यमन्नसमृद्ध्यर्थं मधुराहारदं गुडम्। रौप्यं रेतोभिवृद्ध्यर्थं षड्रसार्थं तु लावणम्
सर्वं सर्वसमृद्ध्यर्थं कूष्मांडं पुष्टिदं विदुः। प्राप्तिदं सर्वभोगानामिह चामुत्र च द्विजाः
यावज्जीवनमुक्तं हि कन्यादानं तु भोगदम्। पनसाम्रकपित्थानां वृक्षाणां फलमेव च
कदल्याद्यौषधीनां च फलं गुल्मोद्भवं तथा। माषादीनां च मुद्गानां फलं शाकादिकं तथा
मरीचिसर्षपाद्यानां शाकोपकरणं तथा। यदृतौ यत्फलं सिद्धं तद्देयं हि विपश्चिता
श्रोत्रादींद्रियतृप्तिश्च सदा देया विपश्चिता। शब्दादिदशभोगार्थं दिगादीनां च तुष्टिदा
वेदशास्त्रं समादाय बुद्ध्वा गुरुमुखात्स्वयम्। कर्मणां फलमस्तीति बुद्धिरास्तिक्यमुच्यते
बंधुराजभयाद्बुद्धिः श्रद्धा सा च कनीयसी। सर्वाभावे दरिद्रस्तु वाचा वा कर्मणा यजेत्
वाचिकं यजनं विद्यान्मंत्रस्तोत्रजपादिकम्। तीर्थयात्रा व्रताद्यं हि कायिकं यजनं विदुः
येन केनाप्युपायेन ह्यल्पं वा यदि वा बहु। देवतार्पणबुद्ध्या च कृतं भोगाय कल्पते
तपश्चर्या च दानं च कर्तव्यमुभयं सदा। प्रतिश्रयं प्रदातव्यं। स्ववर्णगुणशोभितम्।
देवानां तृप्तयेऽत्यर्थं सर्वभोगप्रदं बुधैः।
इहामुत्रोत्तमं जन्म सदा भोगं लभेद्बुधः। ईश्वरार्पणबुद्ध्या हि कृत्वा मोक्षफलं लभेत्
य इमं पठतेऽध्यायं यः शृणोति सदा नरः। तस्य वै धर्मबुद्धिश्च ज्ञानसिद्धिः प्रजायते

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां पंचदशोऽध्यायः ॥१५॥

## अथ षोडशोऽध्यायः

### ( पार्थिवपूजनप्रकारास्तत्फलानि च )

ऋषय ऊचुः

पार्थिवप्रतिमापूजाविधानं ब्रूहि सत्तम। येन पूजाविधानेन सर्वाभीष्टमवाप्यते

सूत उवाच

सुसाधु पृष्टं युष्माभिः सदा सर्वार्थदायकम्। सद्यो दुःखस्य शमनं शृणुत प्रब्रवीमि वः
अपमृत्युहरं कालमृत्योश्चापि विनाशनम्। सद्यः कलत्रपुत्रादिधनधान्यप्रदं द्विजाः
अन्नादिभोज्यं वस्त्रादि सर्वमुत्पद्यते यतः। ततो मृदादिप्रतिमापूजाभीष्टप्रदा भुवि

पुरुषाणां च नारीणामधिकारोऽत्र निश्चितम्। नद्यां तडागे कूपे वा जलांतर्मृदमाहरेत् ॥ ५ ॥
संशोध्य गंधचूर्णेन पेषयित्वा सुमंडपे। हस्तेन प्रतिमां कुर्यात्क्षीरेण च सुसंस्कृताम् ॥ ६ ॥
अंगप्रत्यंगकोपेतामायुधैश्च समन्विताम्। पद्मासनस्थितां कृत्वा पूजयेदादरेण हि ॥ ७ ॥
विघ्नेशादित्यविष्णूनामंबायाश्च शिवस्य च। शिवस्य शिवलिंगं च सर्वदा पूजयेद्द्विजः ॥ ८ ॥
षोडशैरुपचारैश्च कुर्यात्तत्फलसिद्धये। पुष्पेण प्रोक्षणं कुर्यादभिषेकं समन्त्रकम् ॥ ९ ॥
शाल्यन्नेनैव नैवेद्यं सर्वं कुडवमानतः। गृहे तु कुडवं ज्ञेयं मानुषे प्रस्थमिष्यते ॥१०॥
दैवे प्रस्थत्रयं योग्यं स्वयंभोः प्रस्थपंचकम्। एवं पूर्णफलं विद्यादधिकं वै द्वयं त्रयम् ॥११॥
सहस्रपूजया सत्यं सत्यलोके लभेद्द्विजः। द्वादशांगुलमायामं द्विगुणं च ततोऽधिकम् ॥१२॥
प्रमाणमंगुलस्यैकं तदूर्ध्वं पंचकत्रयम्। अयोदारुकृतं पात्रं शिवमित्युच्यते बुधैः ॥१३॥
तदष्टभागः प्रस्थः स्यात्तच्चतुष्कुडवं मतम्। दशप्रस्थं शतप्रस्थं सहस्रप्रस्थमेव च ॥१४॥
जलतैलादिगंधानां यथायोग्यं च मानतः। मानुषार्षस्वयंभूनां महापूजेति कथ्यते ॥१५॥
अभिषेकादात्मशुद्धिर्गन्धात्पुण्यमवाप्यते। आयुस्तृप्तिश्च नैवेद्याद्धूपादर्थमवाप्यते ॥१६॥
दीपाज्ज्ञानमवाप्नोति तांबूलाद्भोगमाप्नुयात्। तस्मात्स्नानादिकं षट्कं प्रयत्नेन प्रसाधयेत् ॥
नमस्कारो जपश्चैव सर्वाभीष्टप्रदावुभौ। पूजांते च सदा कार्यौ भोगमोक्षार्थिभिर्नरैः ॥१८॥
संपूज्य मनसा पूर्वं कुर्यात्तत्तत्सदा नरः। देवानां पूजया चैव तत्तल्लोकमवाप्नुयात् ॥१९॥
देवांतरलोके च यथेष्टं भोग्यमाप्यते। तद्विशेषान्प्रवक्ष्यामि शृणुत श्रद्धया द्विजाः ॥२०॥
विघ्नेशपूजया सम्यग्भूर्लोकेऽभीष्टमाप्नुयात्। शुक्रवारे चतुर्थ्यां च सिते श्रावणभाद्रके ॥२१॥
भिषगृक्षे धनुर्मासे विघ्नेशं विधिवद्यजेत्। शतं पूजासहस्रं वा तत्सख्याकदिनैर्यजेत् ॥२२॥
देवाग्निश्रद्धया नित्यं पुत्रदं चेष्टदं नृणाम्। सर्वपापप्रशमनं तत्तद्दुरितनाशनम् ॥२३॥
वारपूजां शिवादीनामात्मशुद्धिप्रदां विदुः। तिथिनक्षत्रयोगानामाधारं सार्वकामिकम् ॥२४॥
यथा वृद्धिक्षयाभावात्पूर्णंब्रह्मात्मकं विदुः। उदयदुदयं वारो ब्रह्मप्रभृति कर्मणाम् ॥२५॥
तिथ्यादौ देवपूजा हि पूर्णभोगप्रदा नृणाम्। पूर्वभागः पितॄणां तु निशि युक्तः प्रशस्यते ॥२६॥
परभागस्तु देवानां दिवायुक्तः प्रशस्यते। उदयव्यापिनी ग्राह्या मध्याह्ने यदि सा तिथिः ॥२७॥
देवकार्ये तथा ग्राह्यास्तिथिनृक्षादिकाः शुभाः। सम्यग्विचार्य वारादीन्कुर्यात्पूजाजपादिकम् ॥
पूज्यते ह्यनेनेति वेदेष्वर्थस्य योजना। पूर्भोगफलसिद्धिश्च जायते तेन कर्मणा ॥२९॥
मनोभावांस्तथा ज्ञानमिष्टभोगार्थयोजनात्। पूजाशब्दार्थ एवं हि विश्रुतो लोकवेदयोः ॥३०॥
नित्यनैमित्तिकं कालात्सद्यः काम्ये स्वनुष्ठिते। नित्यं मासं च पक्षं च वर्षं चैव यथाक्रमम् ॥३१॥
तत्तत्कर्मफलप्राप्तिस्तादृक्पापक्षयः क्रमात्। महागणपतेः पूजा चतुर्थ्यां कृष्णपक्षके ॥३२॥

पक्षपापक्षयकरी पक्षभोगफलप्रदा। चैत्रे चतुर्थ्यां पूजा च कृता मासफलप्रदा।
वर्षभोगप्रदा ज्ञेया कृता वै सिंहभाद्रके। श्रावणादित्यवारे च सप्तम्यां हस्तभे दिने
माघशुक्ले च सप्तम्यामादित्ययजनं चरेत्। ज्येष्ठभाद्रकसौम्ये च द्वादश्यां श्रवणर्क्षके
द्वादश्यां विष्णुयजनमिष्टसंपत्करं विदुः। श्रावणे विष्णुयजनमिष्टारोग्यप्रदं भवेत्
गवादीन्द्वादशानर्थान्सांगान्दत्त्वा तु यत्फलम्। तत्फलं समवाप्नोति द्वादश्यां विष्णुतर्पणात्
द्वादश्यां द्वादशान्विप्रान्विष्णोर्द्वादशनामतः। षोडशैरुपचारैश्च यजेत्तत्प्रीतिमाप्नुयात्
एवं च सर्वदेवानां तत्तद्द्वादशनामकैः। द्वादशब्रह्मयजनं तत्तत्प्रीतिकरं भवेत्
कर्कटे सोमवारे च नवम्यां मृगशीर्षके। अम्बां यजेद्भूतिकामः सर्वभोगफलप्रदाम्
आश्वयुक्छुक्लनवमी सर्वाभीष्टफलप्रदा। आदिवारे चतुर्दश्यां कृष्णपक्षे विशेषतः
आर्द्रायां च महार्द्रायां शिवपूजा विशिष्यते। माघकृष्णचतुर्दश्यां सर्वाभीष्टफलप्रदा।
आयुष्करी मृत्युहरा सर्वसिद्धिकरी नृणाम्। ज्येष्ठमासे महार्द्रायां चतुर्दशीदिनेऽपि च।
मार्गशीर्षार्द्रकायां वा षोडशोपचारकैः। तत्तन्मूर्तिशिवं पूज्य तस्य वै पाददर्शनम्
शिवस्य यजनं ज्ञेयं भोगमोक्षप्रदं नृणाम्। वारादिदेवयजनं कार्तिके हि विशिष्यते
कार्तिके मासि संप्राप्ते सर्वान्देवान्यजेद्बुधः। दानेन तपसा होमैर्जपेन नियमेन च
षोडशैरुपचारैश्च प्रतिमा विप्रमंत्रकैः। ब्राह्मणानां भोजनेन निष्कामार्तिकरो भवेत्
कार्तिके देवयजनं सर्वभोगप्रदं भवेत्। व्याधीनां हरणं चैव भवेद्भूतग्रहक्षयः
कार्तिकादित्यवारेषु नृणामादित्यपूजनात्। तैलकार्पासदानात्तु भवेत्कुष्ठादिसंक्षयः
हरीतकीमरीचीनां वस्त्रक्षीरादिदानतः। ब्रह्मप्रतिष्ठया चैव क्षयरोगक्षयो भवेत्
दीपसर्पपदानाच्च अपस्मारक्षयो भवेत्। कृत्तिकासोमवारेषु शिवस्य यजनं नृणाम्
महादारिद्र्यशमनं सर्वसंपत्करं भवेत्। गृहक्षेत्रादिदानाच्च गृहोपकरणादिना
कृत्तिकाभौमवारेषु स्कंदस्य यजनान्नृणाम्। दीपघंटादिदानाद्वै वाक्सिद्धिरचिराद्भवेत्
कृत्तिकासौम्यवारेषु विष्णोर्वै यजनं नृणाम्। दध्योदनस्य दानं च सत्संतानकरं भवेत्
कृत्तिकागुरुवारेषु ब्रह्मणो यजनाद्धनैः। मधुस्वर्णाज्यदानेन भोगवृद्धिर्भवेन्नृणाम्
कृत्तिकाशुक्रवारेषु गजकोमेडयाजनात्। गंधपुष्पान्नदानेन भोग्यवृद्धिर्भवेन्नृणाम्
वंध्या सुपुत्रं लभते स्वर्णरौप्यादिदानतः। कृत्तिकाशनिवारेषु दिक्पालानां च वंदनम्
दिग्गजानां च नागानां सेतुपानां च पूजनम्। त्र्यंबकस्य च रुद्रस्य विष्णोः पापहरस्य च
ज्ञानदं ब्रह्मणश्चैव धन्वंतर्यश्विनोस्तथा। रोगापमृत्युहरणं तत्कालव्याधिशांतिदम्
लवणायसतैलानां माषादीनां च दानतः। त्रिकटुफलगंधानां जलादीनां च दानतः

वाणां कठिनानां च प्रस्थेन पलमानतः। स्वर्गप्राप्तिर्धनुर्मासे ह्युषःकाले च पूजनम् ॥६१॥
त्वादीनां च सर्वेषां क्रमाद्वै सर्वसिद्धये। शाल्यन्नस्य हविष्यस्य नैवेद्यं शस्तमुच्यते ॥६२॥
विधान्नस्य नैवेद्यं धनुर्मासे विशिष्यते। मार्गशीर्षेऽन्नदस्यैव सर्वमिष्टफलं भवेत् ॥६३॥
पक्षय चेष्टसिद्धिं चारोग्यं धर्ममेव च। सम्यग्वेदपरिज्ञानं सदनुष्ठानमेव च ॥६४॥
इहामुत्र महाभोगानन्ते योगं च शाश्वतम्। वेदांतज्ञानसिद्धिं च मार्गशीर्षान्नदो लभेत् ॥६५॥
र्गशीर्षे ह्युषःकाले दिनत्रयमथापि वा। यजेद्देवान्भोगकामो नाधनुर्मासिको भवेत् ॥६६॥
वत्संगवकालं तु धनुर्मासो विधीयते। धनुर्मासे निराहारो मासमात्रं जितेंद्रियः ॥६७॥
मध्याह्नं जपेद्विप्रो गायत्रीं वेदमातरम्। पंचाक्षरादिकान्मन्त्रान्श्वादानुसिकं जपेत् ॥६८॥
न लब्ध्वा च देहांते विप्रो मुक्तिमवाप्नुयात्। अन्येषां नरनाराणां त्रिःस्नानेन जपेन च ॥६९॥
पंचाक्षरस्यैव विशुद्धं ज्ञानमाप्यत। इष्टमन्त्रान्सदा जप्त्वा महापापक्षयं लभेत् ॥७०॥
र्मासे विशेषेण महानैवेद्यमाचरेत्। शालितंडुलभारेण मरीचप्रस्थकेन च ॥७१॥
नाद्द्वादशं सर्वं मध्वाज्यकुडवेन हि। द्रोणयुक्तेन मुद्गेन द्वादशव्यंजनेन च ॥७२॥
क्वैरपूपैश्च मोदकैः शालिकादिभिः। द्वादशैश्च दधिक्षीरैर्द्वादशप्रस्थकेन च ॥७३॥
केलफलादीनां तथा गणनया सह। द्वादशक्रमुकैर्युक्तं षट्त्रिंशत्पत्रकैर्युतम् ॥७४॥
खुरचूर्णेन पंचसौगंधिकैर्युतम्। तांबूलयुक्तं तु यदा महानैवेद्यलक्षणम् ॥७५॥
नैवेद्यमेतद्वै देवतार्पणपूर्वकम्। वर्णानुक्रमपूर्वेण तद्भक्तेभ्यः प्रदापयेत् ॥७६॥
चौदननैवेद्याद्भूमौ राष्ट्रपतिर्भवेत्। महानैवेद्यदानेन नरः स्वर्गमवाप्नुयात् ॥७७॥
नैवेद्यदानेन सहस्रेण द्विजर्षभाः। सत्यलोकं च तल्लोके पूर्णमायुरवाप्नुयात् ॥७८॥
राणां च त्रिंशत्या महानैवेद्यदानतः। तदूर्ध्वलोकमाप्यैव न पुनर्जन्मभाग्भवेत् ॥७९॥
राणां च षट्त्रिंशज्जन्मनैवेद्यमीरितम्। तावन्नैवेद्यदानं तु महापूर्णं तदुच्यते ॥८०॥
पूर्णस्य नैवेद्यं जन्मनैवेद्यमिष्यते। जन्मनैवेद्यदानेन पुनर्जन्म न विद्यते ॥८१॥
मासि दिने पुण्ये जन्मनैवेद्यमाचरेत्। संक्रांतिपातजन्मर्क्षपौर्णमास्यादिसंयुते ॥८२॥
न्मदिने कुर्याज्जन्मनैवेद्यमुत्तमम्। मासांतरेषु जन्मर्क्षपूर्णयोगदिनेऽपि च ॥८३॥
च शनैर्वापि तावत्साहस्रमाचरेत्। जन्मनैवेद्यदानेन जन्मार्पणफलं लभेत् ॥८४॥
र्पणाच्छिवः प्रीतः स्वसायुज्यं ददाति हि। इदं तज्जन्मनैवेद्यं शिवस्यैव प्रदापयेत् ॥८५॥
लिंगस्वरूपेण शिवो जन्मनिरूपकः। तस्माज्जन्मनिवृत्त्यर्थं जन्मपूजा शिवस्य हि ॥८६॥
नादात्मकं सर्वं जगत्स्थावरजंगमम्। बिंदुः शक्तिः शिवो नादः शिवशक्त्यात्मकं जगत् ॥
धारमिदं बिंदु बिंद्वाधारमिदं जगत्। जगदाधारभूतौ हि बिंदुनादौ व्यवस्थितौ ॥८८॥

बिंदुनादयुतं सर्वं सकलीकरणं भवेत्।सकलीकरणाज्जन्म जगत्प्राप्नोत्यसंशयम्
बिंदुनादात्मकं लिंगं जगत्कारणमुच्यते।बिंदुर्देवी शिवो नादः शिवलिंगं तु कथ्यते
तस्माज्जन्मनिवृत्त्यर्थं शिवलिंगं प्रपूजयेत्।माता देवी बिंदुरूपा नादरूपः शिवः पिता
पूजिताभ्यां पितृभ्यां तु परमानन्द एव हि।परमानंदलाभार्थं शिवलिंगं प्रपूजयेत्
सा देवी जगतां माता स शिवो जगतः पिता।पित्रोः शुश्रूषके नित्यं कृपाधिक्यं हि वर्धते
कृपयांतर्गतैश्वर्यं पूजकस्य ददाति हि।तस्मादंतर्गतानंदलाभार्थं मुनिपुंगवाः
पितृमातृस्वरूपेण शिवलिंगं प्रपूजयेत्।भर्गः पुरुषरूपो हि भर्गा प्रकृतिरुच्यते
अव्यक्तांतरधिष्ठानं गर्भः पुरुष उच्यते।सुव्यक्तांतरधिष्ठानं गर्भः प्रकृतिरुच्यते
पुरुषस्त्वादिगर्भो हि गर्भवाञ्जनको यतः।पुरुषात्प्रकृतौ युक्तं प्रथमं जन्म कथ्यते
प्रकृतेर्व्यक्ततां यातं द्वितीयं जन्म कथ्यते।जन्म जंतुर्मृत्युजन्म पुरुषात्प्रतिपद्यते
अन्यतो भाव्यतेऽवश्यं मायया जन्म कथ्यते।जीर्यते जन्मकालाद्यत्तस्माज्जीव इति स्मृतः
जन्यते तन्यते पाशैर्जीवशब्दार्थं एव हि।जन्मपाशनिवृत्त्यर्थं जन्मलिंगं प्रपूजयेत्
भं वृद्धिं गच्छतीत्यर्थाद्भगः प्रकृतिरुच्यते।प्राकृतैः शब्दमात्राद्यैः प्राकृतेंद्रियभोजनात्
भगस्येदं भोगमिति शब्दार्थो मुख्यतः श्रुतः।मुख्यो भगस्तु प्रकृतिर्भगवाञ्छिव उच्यते
भगवान्भोगदाता हि नान्यो भोगप्रदायकः।भगस्वामी च भगवान्भर्ग इत्युच्यते बुधैः
भगेन सहितं लिंगं भगं लिंगेन संयुतम्।इहामुत्र च भोगार्थं नित्यभोगार्थमेव च
भगवंतं महादेवं शिवलिंगं प्रपूजयेत्।लोकप्रसविता सूर्यस्तच्चिह्नं प्रसवाद्भवेत्
लिंगे प्रसूतिकर्तारं लिंगिनं पुरुषो यजेत्।लिंगार्थगमकं चिह्नं लिंगमित्यभिधीयते
लिंगमर्थं हि पुरुषं शिवं गमयतीत्यदः।शिवशक्त्योश्च चिह्नस्य मेलनं लिंगमुच्यते
स्वचिह्नपूजनात्प्रीतश्चिह्नकार्यं न वीयते।चिह्नकार्यं तु जन्मादि जन्माद्यं विनिवर्तते
प्राकृतैः पुरुषैश्चापि बाह्याभ्यंतरसंभवैः।षोडशैरुपचारैश्च शिवलिंगं प्रपूजयेत्
एवमादित्यवारे हि पूजा जन्मनिवर्तिका।आदिवारे महालिंगं प्रणवेनैव पूजयेत्
आदिवारे पंचगव्यैरभिषेको विशिष्यते।गोमयं गोजलं क्षीरं दध्याज्यं पंचगव्यकम्
क्षीराद्यं च पृथक्चैव मधुना चेक्षुसारकैः।गव्यक्षीरान्ननैवेद्यं प्रणवेनैव कारयेत्
प्रणवं ध्वनिलिंगं तु नादलिंगं स्वयंभुवः।बिंदुलिंगं तु यंत्रं स्यान्मकारं तु प्रतिष्ठितम्
उकारं चरलिंगं स्यादकारं गुरुविग्रहम्।षड्लिंगपूजया नित्यं जीवन्मुक्तो न संशयः
शिवस्य भक्त्या पूजा हि जन्ममुक्तिकरी नृणाम्।रुद्राक्षधारणात्पादमर्धं वै भूतिधारणात्

त्रिपादं मंत्रजाप्याच्च पूजया पूर्णभक्तिमान्। शिवलिंगं च भक्तं च पूज्य मोक्षं लभेन्नरः ॥११६॥
य इमं पठतेऽध्यायं शृणुयाद्वा समाहितः। तस्यैव शिवभक्तिश्च वर्धते सुदृढा द्विजाः ॥११७॥

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां षोडशोऽध्यायः ॥ १६ ॥

## अथ सप्तदशोऽध्यायः

### ( प्रणवपंचाक्षरमंत्रमाहात्म्यम् )

**ऋषय ऊचुः**

्रणवस्य च माहात्म्यं षड्लिंगस्य महामुने। शिवभक्तस्य पूजां च क्रमशो ब्रूहि नः प्रभो ॥ १ ॥

**सूत उवाच**

ोधनैर्भवद्भिश्च सम्यक्प्रश्नस्त्वयं कृतः। अस्योत्तरं महादेवो जानाति स्म न चापरः ॥ २ ॥
थापि वक्ष्ये तमहं शिवस्य कृपयैव हि। शिवोऽस्माकं च युष्माकं रक्षां गृह्णातु भूरिशः ॥ ३ ॥
ो हि प्रकृतिजातस्य संसारस्य महोदधेः। नवं नावांतरमिति प्रणवं वै विदुर्बुधाः ॥ ४ ॥
ः प्रपंचो न नास्ति वो युष्माकं प्रणवं विदुः। प्रकर्षेण नयेद्यस्मान्मोक्षं वः प्रणवं विदुः ॥ ५ ॥
वजापकानां योगिनां स्वमंत्रपूजकस्य च। सर्वकर्मक्षयं कृत्वा दिव्यज्ञानं तु नूतनम् ॥ ६ ॥
मेव मायारहितं नूतनं परिचक्षते। प्रकर्षेण महात्मानं नवं शुद्धस्वरूपकम् ॥ ७ ॥
ूतनं वै करोतीति प्रणवं तं विदुर्बुधाः। प्रणवं द्विविधं प्रोक्तं सूक्ष्मस्थूलविभेदतः ॥ ८ ॥
ूक्ष्ममेकाक्षरं विद्यात्स्थूलं पंचाक्षरं विदुः। सूक्ष्ममव्यक्तपंचार्णं सुव्यक्तार्णं तथेतरत् ॥ ९ ॥
ीवन्मुक्तस्य सूक्ष्मं हि सर्वसारं हि तस्य हि। मंत्रेणार्थानुसंधानं स्वदेहविलयावधि ॥ १० ॥
वदेहे गलिते पूर्णं शिवं प्राप्नोति निश्चयः। केवलं मंत्रजापी तु योगं प्राप्नोति निश्चयः ॥११॥
ट्त्रिंशत्कोटिजापी तु निश्चयं योगमाप्नुयात्। सूक्ष्मं च द्विविधं ज्ञेयं ह्रस्वदीर्घविभेदतः ॥१२॥
कारश्च उकारश्च मकारश्च ततः परम्। बिंदुनादयुतं तद्धि शब्दकालकलान्वितम् ॥१३॥
ीर्घप्रणवमेवं हि योगिनामेव हृद्गतम्। मकारं तंत्रितत्त्वं हि ह्रस्वप्रणव उच्यते ॥१४॥
शवः शक्तिस्तयोरैक्यं मकारं तु त्रिकात्मकम्। ह्रस्वमेवं हि जाप्यं स्यात्सर्वपापक्षयैषिणाम् ॥१५॥
ूवायुकनकार्णोद्यौः शब्दाद्याश्च तथा दश। आशान्वये दश पुनः प्रवृत्ता इति कथ्यते ॥१६॥
स्वमेव प्रवृत्तानां निवृत्तानां तु दीर्घकम्। व्याहृत्यादौ च मंत्रादौ कामं शब्दकलायुतम् ॥
दादौ च प्रयोज्यं स्याद्वंदने संध्ययोरपि। नवकोटिजपाज्जप्त्वा संशुद्धः पुरुषो भवेत् ॥१८॥
ुनश्च नवकोट्या तु पृथिवीजयमाप्नुयात्। पुनश्च नवकोट्या तु ह्यपां जयमवाप्नुयात् ॥१९॥

पुनश्च नवकोट्या तु तेजसां जयमाप्नुयात्।
पुनश्च नवकोट्या तु वायोर्जयमवाप्नुयात्। आकाशजयमाप्नोति नवकोटिजपेन वै।
गंधादीनां क्रमेणैव नवकोटिजपेन वै। अहंकारस्य च पुनर्नवकोटिजपेन वै।
सहस्रमंत्रजप्तेन नित्यशुद्धो भवेत्पुमान्। ततः परं स्वसिद्ध्यर्थं जपो भवति हि द्विजाः।
एवमष्टोत्तरशतकोटिजप्तेन वै पुनः। प्रणवेन प्रबुद्धस्तु शुद्धयोगमवाप्नुयात्।
शुद्धयोगेन संयुक्तो जीवन्मुक्तो न संशयः। सदा जपन्सदा ध्यायञ्छिवं प्रणवरूपिणम्।
समाधिस्थो महायोगी शिव एव न संशयः। ऋषिच्छंदो देवतादि न्यस्य देहे पुनर्जपेत्।
प्रणवं मातृकायुक्तं देहे न्यस्य ऋषिर्भवेत्। दशमातृषडध्वादि सर्वं न्यासफलं लभेत्।
प्रवृत्तानां च मिश्राणां स्थूलप्रणवमिष्यते। क्रियातपोजपैर्युक्तास्त्रिविधाः शिवयोगिनः।
धनादिविभवैश्चैव कराद्यंगैर्नमादिभिः। क्रियया पूजया युक्तः क्रियायोगीति कथ्यते।
पूजायुक्तश्च मितभुग्बाह्येंद्रियजयान्वितः। परद्रोहादिरहितस्तपोयोगीति कथ्यते।
एतैर्युक्तः सदा शुद्धः सर्वकामादिवर्जितः। सदा जपपरः शांतो जपयोगीति तं विदुः।
उपचारैः षोडशभिः पूजया शिवयोगिनाम्। सालोक्यादिक्रमेणैव शुद्धो मुक्तिं लभेन्नरः।
जपयोगमथो वक्ष्ये गदतः शृणुत द्विजाः। तपः कर्तुर्जपः प्रोक्तो यज्जपन्परिमार्जते।
शिवनाम नमःपूर्वं चतुर्थ्यां पंचतत्त्वकम्। स्थूलप्रणवरूपं हि शिवपंचाक्षरं द्विजाः।
पंचाक्षरजपेनैव सर्वसिद्धिं लभेन्नरः। प्रणवेनादिसंयुक्तं सदा पंचाक्षरं जपेत्।
गुरूपदेशं संगम्य सुखवासे सुभूतले। पूर्वपक्षे समारभ्य कृष्णभूतावधि द्विजाः।
माघं भाद्रं विशिष्टं तु सर्वकालोत्तमोत्तमम्। एकवारं मिताशी तु वाग्यतो नियतेंद्रियः।
स्वस्य राजपितॄणां च शुश्रूषणं च नित्यशः। सहस्रजपमात्रेण भवेच्छुद्धोऽन्यथा ऋणी।
पंचाक्षरं पंचलक्षं जपेच्छिवमनुस्मरन्। पद्मासनस्थं शिवदं गंगाचंद्रकलान्वितम्।
वामोरुस्थितशक्त्या च विराजंतं महागणैः। मृगटंकधरं देवं वरदाभयपाणिकम्।
सदानुग्रहकर्त्तारं सदाशिवमनुस्मरन्। संपूज्य मनसा पूर्वं हृदि वा सूर्यमंडले।
जपेत्पंचाक्षरीं विद्यां प्राङ्मुखः शुद्धकर्मकृत्। प्रातः कृष्णचतुर्दश्यां नित्यकर्म समाप्य च।
मनोरमे शुचौ देशे नियतः शुद्धमानसः। पंचाक्षरस्य मंत्रस्य सहस्रं द्वादशं जपेत्।
वरयेच्च सपत्नीकाञ्छैवान्वै ब्राह्मणोत्तमान्। एकं गुरुवरं शिष्टं वरयेत्सांबमूर्तिकम्।
ईशानं चाथ पुरुषमघोरं वाममेव च। सद्योजातं च पंचैव शिवभक्तान्द्विजोत्तमान्।
पूजाद्रव्याणि संपाद्य शिवपूजां समारभेत्। शिवपूजां च विधिवत्कृत्वा होमं समारभेत्।
मुखांतं च स्वसूत्रेण कृत्वा होमं समाचरेत्। दशैकं वा शतैकं वा सहस्रैकमथापि वा।

कापिलेन घृतेनैव जुहुयात्स्वयमेव हि। कारयेच्छिवभक्तैर्वाप्यष्टोत्तरशतं बुधः ॥४७॥
होमांते दक्षिणा देया गुरोर्गोमिथुनं तथा। ईशानादिस्वरूपांस्तान्गुरुं सांब्रं विभाव्य च ॥४८॥
तेषां पत्सिक्ततोयेन स्वशिरः स्नानमाचरेत्। षट्त्रिंशत्कोटितीर्थेषु सद्यः स्नानफलं लभेत् ॥४९॥
दशांगमन्नं तेषां वै दद्याद्वै भक्तिपूर्वकम्। पराबुद्धया गुरोः पत्नीमीशानादिक्रमेण तु ॥५०॥
रमान्नेन संपूज्य यथाविभवविस्तरम्। रुद्राक्षवस्त्रपूर्वं च वटकापूपकैर्युतम् ॥५१॥
बलिदानं ततः कृत्वा भूरि भोजनमाचरेत्। ततः संप्रार्थ्य देवेशं जपं तावत्समापयेत् ॥५२॥
पुरश्चरणमेवं तु कृत्वा मंत्री भवेन्नरः। पुनश्च पंचलक्षेण सर्वपापक्षयो भवेत् ॥५३॥
अतलादि समारभ्य सत्यलोकावधि क्रमात्। पंचलक्षजपात्तत्तल्लोकैश्वर्यमवाप्नुयात् ॥५४॥
मध्ये मृतश्चेद्भोगांते भूमौ तज्जापको भवेत्। पुनश्च पंचलक्षेण ब्रह्मसामीप्यमाप्नुयात् ॥५५॥
पुनश्च पंचलक्षेण सारूप्यैश्वर्यमाप्नुयात्। आहत्य शतलक्षेण साक्षाद्ब्रह्मसमो भवेत् ॥५६॥
कार्यब्रह्मण एवं हि सायुज्यं प्रतिपद्य वै। यथेष्टं भोगमाप्नोति तद्ब्रह्म प्रलयावधि ॥५७॥
पुनः कल्पांतरे वृत्ते ब्रह्मपुत्रः स जायते। पुनश्च तपसा दीप्तः क्रमान्मुक्तो भविष्यति ॥५८॥
पृथ्व्यादिकार्यभूतेभ्यो लोका वै निर्मिताः क्रमात्। पातालादि च सत्यांतं ब्रह्मलोकाश्चतुर्दश ॥
त्यादूर्ध्वं क्षमांतं वै विष्णुलोकाश्चतुर्दश। क्षमालोके कार्यविष्णुर्वैकुंठे वरपत्तने ॥६०॥
कार्यलक्ष्म्या महाभोगिरक्षां कृत्वाऽधितिष्ठति। तदूर्ध्वगाश्च शुच्यतां लोकाष्टाविंशतिः स्थिताः ॥
शुचौ लोके तु कैलासे रुद्रो वै भूनहृत्स्थितः। षडुत्तराश्च पंचाशदहिंसांतास्तदूर्ध्वगाः ॥६२॥
अहिंसालोकमास्थाय ज्ञानकैलासके पुरे। कार्येश्वरस्तिरोभावं सर्वान्कृत्वाऽधितिष्ठति ॥६३॥
दंते कालचक्रं हि कालातीतस्ततः परम्। शिवेनाधिष्ठितस्तत्र कालश्चक्रेश्वराह्वयः ॥६४॥
अहिंस्रं धर्ममास्थाय सर्वान्कालेन युंजति। असत्यश्चाशुचिश्चैव हिंसा चैवाथ निर्घृणा ॥६५॥
सत्यादिचतुष्पादः सर्वांशः कामरूपधृक्। नास्तिक्यलक्ष्मीर्दुःसंगो वेदबाह्यध्वनिः सदा ६६॥
घसङ्गः कृष्णवर्णो महामहिषवेषवान्। तावान्महेश्वरः प्रोक्तस्तिरोधास्तावदेव हि ॥६७॥
दर्वाक्कर्मभोगो हि तदूर्ध्वं ज्ञानभोगकम्। तदर्वाक्कर्ममाया हि ज्ञानमाया तदूर्ध्वकम् ॥६८॥
लक्ष्मीः कर्मभोगो वै याति मायेति कथ्यते। मालक्ष्मीर्ज्ञानभोगो वै याति मायेति कथ्यते ६९॥
दूर्ध्वं नित्यभोगो हि तदर्वाङ् नश्वरं विदुः। तदर्वाक्च तिरोधानं तदूर्ध्वं नहि बन्धनम् ॥७०॥
दर्वाक्पाशबंधो हि तदूर्ध्वं नहि बन्धनम्। तदर्वाक्परिवर्तंते काम्यकर्मानुसारिणः ॥७१॥
ष्कामकर्मभोगस्तु तदूर्ध्वं परिकीर्तितः। तदर्वाक्परिवर्तंते बिंदुपूजापरायणाः ॥७२॥
दूर्ध्वं हि व्रजन्त्येव निष्कामा लिंगपूजकाः। तदर्वाक्परिवर्तंते शिवान्यसुरपूजकाः ॥७३॥
वैकनिरता ये च तदूर्ध्वं संप्रयांति ते। तदर्वाग्जीवकोटिः स्यात्तदूर्ध्वं परकोटिका ॥७४॥

सांसारिकास्तदर्वाक्च मुक्ताः खलु तदूर्ध्वगाः। तदर्वाक्परिवर्तंते प्राकृतद्रव्यपूजकाः
तदूर्ध्वं हि व्रजंत्येते पौरुषद्रव्यपूजकाः। तदर्वाक्छक्तिलिंगं तु शिवलिंगं तदूर्ध्वकम्
तदर्वागावृतं लिंगं तदूर्ध्वं हि निरावृति। तदर्वाक्कल्पितं लिंगं तदूर्ध्वं वै न कल्पितम्
तदर्वाग्बाह्यलिंगं स्यादतरंगं तदूर्ध्वकम्। तदर्वाक्छक्तिलोका हि शतं वै द्वादशाधिक
तदर्वाग्बिंदुरूपं हि नादरूपं तदुत्तरम्। तदर्वाक्कर्मलोकस्तु तदूर्ध्वं ज्ञानलोकक
नमस्कारस्तदूर्ध्वं हि मदाहङ्कारनाशनः। जनिजं वै तिरोधानं नानिषिद्धयाततं इति
ज्ञानशब्दार्थ एवं हि तिरोधाननिवारणात्। तदर्वाक्परिवर्तंते ह्याधिभौतिकपूजकाः
आध्यात्मिकार्चका एव तदूर्ध्वं संप्रयांति वै। तावद्वै वेदिभागं तन्महालोकात्मलिंगके
प्रकृत्याद्यष्टबंधोऽपि वेद्यंते संप्रतिष्ठितः। एवमेतादृशं ज्ञेयं सर्वं लौकिकवैदिकम्
अधर्ममहिषारूढं कालचक्रं तरंति ते। सत्यादिधर्मयुक्ता ये शिवपूजापराश्च ये
तदूर्ध्वं वृषभो धर्मो ब्रह्मचर्यस्वरूपधृक्। सत्यादिपादयुक्तस्तु शिवलोकाग्रतः स्थितः
क्षमाशृङ्गः शमश्रोत्रो वेदध्वनिविभूषितः। आस्तिक्यचक्षुर्निश्वासगुरुबुद्धिमना वृषः

क्रियादिवृषभा ज्ञेयाः कारणादिषु सर्वदा।
तं क्रियावृषभं धर्मं कालातीतोऽधितिष्ठति ॥८७॥

ब्रह्मविष्णुमहेशानां स्वस्वायुर्दिनमुच्यते। तदूर्ध्वं न दिनं रात्रिर्न जन्ममरणादिकम्
पुनः कारणसत्यांता कारणब्रह्मणस्तथा। गंधादिभ्यस्तु भूतेभ्यस्तदूर्ध्वं निर्मिताः सदा
सूक्ष्मगंधस्वरूपा हि स्थिता लोकाश्चतुर्दश। पुनः कारणविष्णोर्वै स्थिता लोकाश्चतुर्दश
पुनः कारणरुद्रस्य लोकाष्टाविंशका मताः। पुनश्च कारणेशस्य षट्पञ्चाशत्तदूर्ध्वगाः
ततः परं ब्रह्मचर्यलोकाख्यं शिवसंमतम्। तत्रैव ज्ञानकैलासे पञ्चावरणसंयुते
पञ्चमंडलसंयुक्तं पञ्चब्रह्मकलान्वितम्। आदिशक्तिसमायुक्तमादिलिंगं तु तत्र वै
शिवालयमिदं प्रोक्तं शिवस्य परमात्मनः। पराशक्त्या समायुक्तस्तत्रैव परमेश्वरः
सृष्टिः स्थितिश्च संहारस्तिरोभावोऽप्यनुग्रहः। पञ्चकृत्यप्रवीणोऽसौ सच्चिदानंदविग्रहः
ध्यानधर्मः सदा यस्य सदानुग्रहतत्परः। समाध्यासनमासीनः स्वात्मारामो विराजते
तस्य सन्दर्शनं साध्यं कर्मध्यानादिभिः क्रमात्। नित्यादिकर्मयजनाच्छिवकर्ममतिर्भवेत्
क्रियादिशिवकर्मभ्यः शिवज्ञानं प्रसाधयेत्। तद्दर्शनगताः सर्वे मुक्ता एव न संशयः
मुक्तिरात्मस्वरूपेण स्वात्मारामत्वमेव हि। क्रियातपोजपज्ञानध्यानधर्मेषु सुस्थितः
शिवस्य दर्शनं लब्ध्वा स्वात्मारामत्वमेव हि। यथा रविः स्वकिरणादशुद्धिमपनेष्यति
कृपाविचक्षणः शंभुरज्ञानमपनेष्यति। अज्ञानविनिवृत्तौ तु शिवज्ञानं प्रवर्तते

शिवज्ञानात्स्वस्वरूपमात्मारामत्वमेष्यति । आत्मारामत्वसंसिद्धौ कृतकृत्यो भवेन्नरः ॥१०२॥
नश्च शतलक्षेण ब्रह्मणः पदमाप्नुयात् । पुनश्च शतलक्षेण विष्णोः पदमवाप्नुयात् ॥१०३॥
नश्च शतलक्षेण रुद्रस्य पदमाप्नुयाद् । पुनश्च शतलक्षेण ऐश्वर्यं पदमाप्नुयात् ॥१०४॥
नश्चैवंविधेनैव जपेन सुसमाहितः । शिवलोकादिभूतं हि कालचक्रमवाप्नुयात् ॥१०५॥
ालचक्रं पञ्चचक्रमेकैकेन क्रमोत्तरे । दृष्टिमोहौ ब्रह्मचक्रं भोगमोहौ तु वैष्णवम् ॥१०६॥
ोपमोहौ रौद्रचक्रं भ्रमणं चैश्वरं विदुः । शिवचक्रं ज्ञानमोहौ पञ्चचक्रं विदुर्बुधाः ॥१०७॥
नश्च दशकोट्या हि कारणब्रह्मणः पदम् । पुनश्च दशकोट्या हि तत्परदैश्वर्यमाप्नुयात् ॥१०८॥
वं क्रमेण विष्ण्वादेः पदं लब्ध्वा महौजसः । क्रमेण तत्पदैश्वर्यं लब्ध्वा चैव महात्मनः ॥१०९॥
तकोटिमनुं जप्त्वा पञ्चोत्तरमतंद्रितः । शिवलोकमवाप्नोति पञ्चमावरणाद्बहिः ॥११०॥
जसं मंडपं तत्र नदीसंस्थानमुत्तमम् । तपोरूपश्च वृषभस्तत्रैव परिदृश्यते ॥१११॥
द्योजातस्य तत्स्थानं पञ्चमावरणं वरम् । वामदेवस्य च स्थानं चतुर्थावरणं पुनः ॥११२॥
घोरनिलयं पश्चात्तृतीयावरणं परम् । पुरुषस्यैव सांबस्य द्वितीयावरणं शुभम् ॥११३॥
शानस्य परस्यैव प्रथमावरणं ततः । ध्यानधर्मस्य च स्थानं पञ्चमं मडपं ततः ॥११४॥
लिनाथस्य संस्थानं तत्र पूर्णामृतप्रदम् । चतुर्थं मंडपं पश्चाच्चंद्रशेखरमूर्तिमत् ॥११५॥
मस्कंदस्य च स्थानं तृतीयं मंडपं परम् । द्वितीयं मंडपं नृत्यमंडपं प्राहुरास्तिकाः ॥११६॥
थमं मूलमायायाः स्थानं तत्रैव शोभनम् । ततः परं गर्भगृहं लिंगस्थानं परं शुभम् ॥११७॥
दिसंस्थानतः पश्चान्न विदुः शिववैभवम् । नंदीश्वरो बहिस्तिष्ठन्पंचाक्षरमुपासते ॥११८॥
वं गुरुक्रमाल्लब्धं नंदीशाच्च मया पुनः । ततः परं स्वसंवेद्यं शिवेनैवानुभावितम् ॥११९॥
वस्य कृपया साक्षाच्छिवलोकस्य वैभवम् । विज्ञातुं शक्यते सर्वैर्नान्यथेत्याहुरास्तिकाः ॥१२०॥

एवं क्रमेण मुक्ताः स्युर्ब्राह्मणा वै जितेंद्रियाः ।
अन्येषां च क्रमं वक्ष्ये गदतः शृणुतादरात् ॥१२१॥

रूपदेशाज्जाप्यं वै ब्राह्मणानां नमोऽन्तीकम् । पंचाक्षरं पंचलक्षमायुष्यं प्रजपेद्विधिः ॥१२२॥
ोत्वापनयनार्थं तु पंचलक्षं जपेत्पुनः । मंत्रेण पुरुषो भूत्वा क्रमान्मुक्तो भवेद्बुधः ॥१२३॥
त्रियः पंचलक्षेण क्षत्रत्वमपनेष्यति । पुनश्च पंचलक्षेण क्षत्रियो ब्राह्मणो भवेत् ॥१२४॥
त्रसिद्धिर्जपाच्चैव क्रमान्मुक्तो भवेन्नरः । वैश्यस्तु पंचलक्षेण वैश्यत्वमपनेष्यति ॥१२५॥
नश्च पंचलक्षेण मंत्रक्षत्रिय उच्यते । पुनश्च पंचलक्षेण क्षत्रत्वमपनेष्यति ॥१२६॥
नश्च पंचलक्षेण मंत्रब्राह्मण उच्यते । शूद्रश्चैव नमोऽन्तेन पंचविंशतिलक्षतः ॥१२७॥
त्रविप्रत्वमापद्य पश्चाच्छुद्धो भवेद्द्विजः । नारीवाथ नरो वाथ ब्राह्मणो वान्य एव वा ॥१२८॥

नमोऽन्तं वा नमःपूर्वमातुरः सर्वदा जपेत्। तत्र स्त्रीणां तथैवोह्य गुरुर्निर्दर्शयेत्क्रमात्।
साधकः पंचलक्षांते शिवप्रीत्यर्थमेव हि। महाभिषेकनैवेद्यं कृत्वा भक्तांश्च पूजयेत्।
पूजया शिवभक्तस्य शिवः प्रीततरो भवेत्। शिवस्य शिवभक्तस्य भेदो नास्ति शिवो हि
शिवस्वरूपमंत्रस्य धारणाच्छिव एव हि। शिवभक्तशरीरे हि शिवे तत्परमो भवेत्।
शिवभक्ताः क्रियाः सर्वा वेदसर्वक्रियां विदुः। यावद्यावच्छिवमंत्रं येन जप्तं भवेत्क्रमात्।
तावद्वै शिवसान्निध्यं तस्मिन्देहे न संशयः। देवीलिंगं भवेद्रूपं शिवभक्तस्त्रियास्तथा।
यावन्मंत्रं जपेद्देव्यास्तावत्सान्निध्यमस्ति हि। शिवं संपूजयेद्धीमान्स्वयं वै शब्दरूपभाक्
स्वयं चैव शिवो भूत्वा परां शक्तिं प्रपूजयेत्।
शक्तिं वेरं च लिंगं च ह्यालेख्या मायया यजेत् ॥१३६॥
शिवलिंगं शिवं मत्वा स्वात्मानं शक्तिरूपकम्। शक्तिलिंगं च देवीं च मत्वा स्वं शिवरू
शिवलिंगं नादरूपं बिंदुरूपं च शक्तिकम्। उपप्रधानभावेन अन्योन्यासक्तलिंगकम्।
पूजयेच्च शिवं शक्तिं स शिवो मूलभावनात्। शिवभक्ताञ्छिवमंत्ररूपकाञ्छिवरूपकान्।
षोडशैरुपचारैश्च पूजयेदिष्टमाप्नुयात्। येन शुश्रूषणाद्यैश्च शिवभक्तस्य लिंगिनः।
आनंदं जनयेद्विद्वाञ्छिवः प्रीततरो भवेत्। शिवभक्तान्सपत्नीकान्पत्न्या सह सदैव तत्
पूजयेद्भोजनाद्यैश्च पंच वा दश वा शतम्। धने देहे च मंत्रे च भावनायामवंचकः।
शिवशक्तिस्वरूपेण न पुनर्जायते भुवि। नाभेरधो ब्रह्मभागमाकच्छं विष्णुभागकम्।
मुखं लिंगमिति प्रोक्तं शिवभक्तशरीरिकम्। मृतान्दाहादियुक्तान्वा दाहादिरहितान्मृतं
उद्दिश्य पूजयेदादिपितरं शिवमेव हि। पूजां कृत्वादिमातुश्च शिवभक्तांश्च पूजयेत्।
पितृलोकं समासाद्य क्रमान्मुक्तो भवेन्मृतः। क्रियायुक्तदशभ्यश्च तपोयुक्तो विशिष्यते।
तपोयुक्तशतेभ्यश्च जपयुक्तो विशिष्यते। जपयुक्तसहस्रेभ्यः शिवज्ञानी विशिष्यते।
शिवज्ञानिषु लक्षेषु ध्यानयुक्तो विशिष्यते। ध्यानयुक्तेषु कोटिभ्यः समाधिस्थो विशिष्य
उत्तरोत्तरवैशिष्ट्यात्पूजायामुत्तरोत्तरम्। फलं वैशिष्ट्यरूपं च दुर्विज्ञेयं मनीषिभिः।
तस्माद्वै शिवभक्तस्य माहात्म्यं वेत्ति को नरः। शिवशक्त्योःपूजनं च शिवभक्तस्य पूजनम्
कुरुते यो नरो भक्त्या स शिवः शिवमेधते। य इमं पठतेऽध्यायमर्थवद्वेदसंमतम्।
शिवज्ञानी भवेद्विप्रः शिवेन सह मोदते। श्रावयेच्छिवभक्तांश्च विशेषज्ञो मुनीश्वराः।
शिवप्रसादसिद्धिः स्याच्छिवस्य कृपया बुधाः ॥१५३॥

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां सप्तदशोऽध्यायः ॥१७॥

## अथ अष्टादशोऽध्यायः

### ( बन्धमोक्षस्वरूपं शिवलिंगमाहात्म्यं च )

### ऋषय ऊचुः

बंधमोक्षस्वरूपं हि ब्रूहि सर्वार्थवित्तम।

### सूत उवाच

बंधं मोक्षं तथोपायं वक्ष्येऽहं शृणुतादरात् ॥ १ ॥

कृत्याद्यष्टबंधेन बद्धो जीवः स उच्यते। प्रकृत्याद्यष्टबंधेन निर्मुक्तो मुक्त उच्यते ॥ २ ॥
कृत्यादिवशीकारो मोक्ष इत्युच्यते स्वतः। बद्धजीवस्तु निर्मुक्तो मुक्तजीवः स कथ्यते ॥ ३ ॥
कृत्यग्रे ततो बुद्धिरहंकारो गुणात्मकः। पंचतन्मात्रमित्येतत्प्रकृत्याद्यष्टकं विदुः ॥ ४ ॥
कृत्याद्यष्टजो देहो देहजं कर्म उच्यते। पुनश्च कर्मजो देहो जन्मकर्म पुनः पुनः ॥ ५ ॥
रीरं त्रिविधं ज्ञेयं स्थूलं सूक्ष्मं च कारणम्। स्थूलं व्यापारदं प्रोक्तं सूक्ष्ममिंद्रियभोगदम् ॥ ६ ॥
रणं त्वात्मभोगार्थं जीवकर्मानुरूपतः। सुखं दुःखं पुण्यपापैः कर्मभिः फलमश्नुते ॥ ७ ॥
स्माद्धि कर्मरज्ज्वा हि बद्धो जीवः पुनः पुनः। शरीरत्रयकर्मभ्यां चक्रवद्भ्राम्यते सदा ॥ ८ ॥
क्रभ्रमनिवृत्त्यर्थं चक्रकर्तारमीडयेत्। प्रकृत्यादि महाचक्रं प्रकृतेः परतः शिवः ॥ ९ ॥
क्रकर्ता महेशो हि प्रकृतेः परतो यतः। पिबति वाथ वमति जीवन्बालो जलं यथा ॥१०॥

शिवस्तथा प्रकृत्यादि वशीकृत्याधितिष्ठति।
र्वं वशीकृतं यस्मात्तस्माच्छिव इति स्मृतः। शिव एव हि सर्वज्ञः परिपूर्णश्च निःस्पृहः ॥११॥

सर्वज्ञता तृप्तिरनादिबोधः स्वतंत्रता नित्यमलुप्तशक्तिः।
अनंतशक्तिश्च महेश्वरस्य यन्मानसैश्वर्यमवैति वेदः ॥१२॥

ः शिवप्रसादेन प्रकृत्यादि वशं भवेत्। शिवप्रसादलाभार्थं शिवमेव प्रपूजयेत् ॥१३॥
स्पृहस्य च पूर्णस्य तस्य पूजा कथं भवेत्। शिवोद्देशकृतं कर्म प्रसादजनकं भवेत् ॥१४॥
गे बेरे भक्तजने शिवमुद्दिश्य पूजयेत्। कायेन मनसा वाचा धनेनापि प्रपूजयेत् ॥१५॥
या तु महेशो हि प्रकृतः परमः शिवः। प्रसादं कुरुते सत्यं पूजकस्य विशेषतः ॥१६॥
प्रसादात्कर्माद्यं क्रमेण स्ववशं भवेत्। कर्मारभ्य प्रकृत्यंतं यदा सर्वं वशं भवेत् ॥१७॥
मुक्त इति प्रोक्तः स्वात्मारामो विराजते। प्रसादात्परमेशस्य कर्मदेहो यदा वशः ॥१८॥
वै शिवलोके तु वासः सालोक्यमुच्यते। सामीप्यं यांति सांबस्य तन्मात्रे च वशं गते ॥१९॥
तु शिवसायुज्यमायुधाद्यैः क्रियादिभिः। महाप्रसादलाभे च बुद्धिश्चापि वशा भवेत् ॥२०॥

बुद्धिस्तु कार्यं प्रकृतेस्तत्सार्ष्टिरिति कथ्यते। पुनर्महाप्रसादेन प्रकृतिर्वशमेष्यति
शिवस्य मानसैश्वर्यं तदाऽयत्नं भविष्यति। सार्वज्ञाद्यं शिवैश्वर्यं लब्ध्वा स्वात्मनि राजते
तत्सायुज्यमिति प्राहुर्वेदागमपरायणाः। एवं क्रमेण मुक्तिः स्याल्लिंगादौ पूजया स्वतः
अतः शिवप्रसादार्थं क्रियाद्यैः पूजयेच्छिवम्। शिवक्रिया शिवतपः शिवमंत्रजपः सदा
शिवज्ञानं शिवध्यानमुत्तरोत्तरमभ्यसेत्। आसुप्तेरामृतेः कालं नयेद्वै शिवचिंतया
सद्यादिभिश्च कुसुमैरर्चयेच्छिवमेष्यति।

ऋषय ऊचुः

लिंगादौ शिवपूजाया विधानं ब्रूहि सुव्रत ॥२६॥

सूत उवाच

लिंगानां च क्रमं वक्ष्ये यथावच्छृणुत द्विजाः। तदेव लिंगं प्रथमं प्रणवं सार्वकामिकम्
सूक्ष्मप्रणवरूपं हि सूक्ष्मरूपं तु निष्कलम्। स्थूललिंगं हि सकलं तत्पंचाक्षरमुच्यते
तयोः पूजा तपः प्रोक्तं साक्षान्मोक्षप्रदे उभे। पौरुषप्रकृतिभूतानि लिंगानि सुबहूनि च
तानि विस्तरतो वक्तुं शिवो वेत्ति न चापरः। भूविकाराणि लिंगानि ज्ञातानि प्रब्रवीमि व
स्वयंभूलिंगं प्रथमं बिंदुलिंगं द्वितीयकम्। प्रतिष्ठितं चरं चैव गुरुलिंगं तु पंचमम्
देवर्षितपसा तुष्टः सान्निध्यार्थं तु तत्र वै। पृथिव्यन्तर्गतः शर्वो बीजं वै नादरूपतः
स्थावरांकुरवद्भूमिमुद्भिद्य व्यक्त एव सः। स्वयंभूतं जातमिति स्वयंभूरिति तं विदुः
तल्लिंगपूजया ज्ञानं स्वयमेव प्रवर्धते। सुवर्णरजतादौ वा पृथिव्यां स्थंडिलेऽपि वा
स्वहस्ताल्लिखितं लिंगं शुद्धप्रणवमंत्रकम्। यंत्रलिंगं समालिख्य प्रतिष्ठावाहनं चरेत्
बिंदुनादमयं लिंगं स्थावरं जंगमं च यत्। भावनामयमेतद्धि शिवदृष्टं न संशयः
यत्र विश्वस्यते शंभुस्तत्र तस्मै फलप्रदः। स्वहस्ताल्लिखिते यंत्रे स्थावरादावकृत्रिमे
आवाह्य पूजयेच्छंभुं षोडशैरुपचारकैः। स्वमैश्वर्यमाप्नोति ज्ञानमभ्यासतो भवेत्
देवैश्च ऋषिभिश्चापि स्वात्मसिद्ध्यर्थमेव हि। समंत्रेणात्महस्तेन कृतं यच्छुद्धमंडले
शुद्धभावनया चैव स्थापितं लिंगमुत्तमम्। तल्लिंगं पौरुषं प्राहुस्तत्प्रतिष्ठितमुच्यते
तल्लिंगं पूजया नित्यं पौरुषैश्वर्यमाप्नुयात्। महद्भिर्ब्राह्मणैश्चापि राजभिश्च महाधनैः
शिल्पिना कल्पितं लिंगं मंत्रेण स्थापितं च यत्। प्रतिष्ठितं प्राकृतं हि प्राकृतैश्वर्यभोगदम्
यदूर्जितं च नित्यं च तद्धि पौरुषमुच्यते। यद्दुर्बलमनित्यं च तद्धि प्राकृतमुच्यते

लिंगं नाभिस्तथा जिह्वा नासाग्रं च शिखा क्रमात्।
कट्यादिषु त्रिलोकेषु लिंगमाध्यात्मिकं चरम् ॥४४॥

पर्वतं पौरुषं प्रोक्तं भूतलं प्राकृतं विदुः। वृक्षादि पौरुषं ज्ञेयं गुल्मादि प्राकृतं विदुः ॥४५॥
षाष्टिकं प्राकृतं ज्ञेयं शालिगोधूम पौरुषम्। ऐश्वर्यं पौरुषं विद्यादणिमाद्यष्टसिद्धिदम् ॥४६॥
सुस्त्रीधनादिविषयं प्राकृतं प्राहुरास्तिकाः। प्रथमं चरलिंगेषु रसलिंगं प्रकथ्यते ॥४७॥
रसलिंगं ब्राह्मणानां सर्वाभीष्टप्रदं भवेत्। बाणलिंगं क्षत्रियाणां महाराज्यप्रदं शुभम् ॥४८॥
स्वर्णलिंगं तु वैश्यानां महाधनपतित्वदम्। शिलालिंगं तु शूद्राणां महाशुद्धिकरं शुभम् ॥४९॥
स्फाटिकं बाणलिंगं च सर्वेषां सर्वकामदम्। स्वीयाभावेऽन्यदीयं तु पूजायां न निषिद्ध्यते ॥५०॥
स्त्रीणां तु पार्थिवं लिङ्गं सभर्तॄणां विशेषतः। विधवानां प्रवृत्तानां स्फाटिकं परिकीर्तितम् ॥५१॥
विधवानां प्रवृत्तानां रसलिङ्गं विशिष्यते। बाल्ये वा यौवने वापि वार्धके वापि सुव्रताः ॥५२॥
शुद्धस्फटिकलिङ्गं तु स्त्रीणां तत्सर्वभोगदम्। प्रवृत्तानां पीठपूजा सर्वाभीष्टप्रदा भुवि ॥५३॥
पात्रेणैव प्रवृत्तस्तु सर्वपूजां समाचरेत्। अभिषेकांते च नैवेद्यं शाल्यन्नेन समाचरेत् ॥५४॥
पूजांते स्थापयेल्लिङ्गं संपुटेषु पृथग्गृहे। करपूजानिवृत्तानां स्वभोज्यं तु निवेदयेत् ॥५५॥
निवृत्तानां परं सूक्ष्मं लिंगमेव विशिष्यते। विभूत्यभ्यर्चनं कुर्याद्विभूतिं च निवेदयेत् ॥५६॥
पूजां कृत्वाऽथ तल्लिङ्गं शिरसा धारयेत्सदा। विभूतिस्त्रिविधा प्रोक्ता लोकवेदशिवाग्निभिः ॥५७॥
लोकाग्निजमथो भस्म द्रव्यशुद्ध्यर्थमावहेत्। मृद्दारुलोहरूपाणां धान्यानां च तथैव च ॥५८॥
तैलादीनां च द्रव्याणां वस्त्रादीनां तथैव च। तथा पर्युषितानां च भस्मना शुद्धिरिष्यते ॥५९॥
श्वादिभिर्दूषितानां च भस्मना शुद्धिरिष्यते। सजलं निर्जलं भस्म यथायोग्यं तु योजयेत् ॥६०॥
वेदाग्निजं तथा भस्म तत्कर्मांतेषु धारयेत्। मंत्रेण क्रियया जन्यं कर्माग्नौ भस्मरूपधृक् ॥६१॥
तद्भस्मधारणात्कर्म स्वात्मन्यारोपितं भवेत्। अघोरेणात्ममंत्रेण बिल्वकाष्ठं प्रदाहयेत् ॥६२॥
शिवाग्निरिति संप्रोक्तस्तेन दग्धं शिवाग्निजम्। कपिलागोमयं पूर्वं केवलं गव्यमेव वा ॥६३॥
शम्यश्वत्थपलाशान्वा वटारग्वधबिल्वकान्। शिवाग्निना दहेच्छुद्धं तद्वै भस्म शिवाग्निजम् ॥६४॥
दर्भाग्नौ वा दहेत्काष्ठं शिवमंत्रं समुच्चरन्। सम्यक्संशोध्य वस्त्रेण नवकुंभे निधापयेत् ॥६५॥
दीप्त्यर्थं तत्तु संग्राह्यं मान्यते पूज्यतेऽपि च। भस्मशब्दार्थ एवं हि शिवः पूर्वं तथा करोत् ॥६६॥
यथा स्वविषये राजा सारं गृह्णाति यत्करम्। यथा मनुष्याः सस्यादीन्दग्ध्वा सारं भजंति वै ॥६७॥

यथा हि जाठराग्निश्च भक्ष्यादीन्विविधान्बहून्।
दग्ध्वा सारतरं सारात्स्वदेहं परिपुष्यति ॥६८॥

तथा प्रपंचकर्ताऽपि स शिवः परमेश्वरः। स्वाधिष्ठेयप्रपंचस्य दग्ध्वा सारं गृहीतवान् ॥६९॥
दग्ध्वा प्रपंचं तद्भस्म स्वात्मन्यारोपयच्छिवः। उद्धूलनस्य व्याजेन जगत्सारं गृहीतवान् ॥७०॥
रत्नं स्थापयामास स्वकीये हि शरीरके। केशमाकाशसारेण वायुसारेण वै मुखम् ॥७१॥

हृदयं चाग्निसारेण त्वपां सारेण वै कटिम्। जानु च्चावनिसारेण तद्वत्सर्वं तदंगकम्।
ब्रह्मविष्णवोश्च रुद्राणां सारं चैव त्रिपुण्ड्रकम्। तथा तिलकरूपेण ललाटान्ते महेश्वरः।
भवृद्धया सर्वमेतद्धि मन्यते स्वयमित्यसौ। प्रपंचसारसर्वस्वमनेनैव वशीकृतम्।
तस्मादस्य वशीकर्ता नास्तीति स शिवःस्मृतः। यथा सर्वमृगाणां च हिंसको मृगहिंसकः।
अस्य हिंसामृगो नास्ति तस्मात्सिंह इतीरितः। शं नित्यं सुखमानंदमिकारः पुरुषः स्मृतः।
वकारः शक्तिरमृतं मेलनं शिव उच्यते। तस्मादेवं स्वमात्मानं शिवं कृत्वाऽर्चयेच्छि
तस्मादुद्धूलनं पूर्वं त्रिपुण्ड्रं धारयेत्परम्। पूजाकाले हि सजलं शुद्ध्यर्थं निर्जलं भवेत्।
दिवा वा यदि वा रात्रौ नारी वाथ नरोऽपि वा। पूजार्थं सजलं भस्म त्रिपुंड्रेणैव धारयेत्॥
त्रिपुंड्रं सजलं भस्म धृत्वा पूजां करोति यः। शिवपूजाफलं सांगं तस्यैव हि सुनिश्चितम्॥
भस्म वै शिवमंत्रेण धृत्वा ह्यत्याश्रमी भवेत्। शिवाश्रमीति संप्रोक्तः शिवैकपरमो यतः॥
शिवव्रतैकनिष्ठस्य नाशौचं न च सूतकम्। ललाटेऽग्रे सितं भस्म तिलकं धारयेन्मृदा॥
स्वहस्ताद्गुरुहस्ताद्वा शिवभक्तस्य लक्षणम्। गुणान्रुंध इति प्रोक्तो गुरुशब्दस्य विग्रहः॥
सविकारान्राजसादीन्गुणान्रुंधे व्यपोहति। गुणातीतः परशिवो गुरुरूपं समाश्रितः॥
गुणत्रयं व्यपोह्याग्रे शिवं बोधयतीति सः। विश्वस्तानां तु शिष्याणां गुरुरित्यभिधीयते॥
तस्माद्गुरुशरीरं तु गुरुलिंगं भवेद्बुधः। गुरुलिंगस्य पूजा तु गुरुशुश्रूषणं भवेत्॥
श्रुतं करोति शुश्रूषा कायेन मनसा गिरा। उक्तं यद्गुरुणा पूर्वं शक्यं वाऽशक्यमेव वा॥
करोत्येव हि पूतात्मा प्राणैरपि धनैरपि। तस्माद्वै शासने योग्यः शिष्य इत्यभिधीयते॥
शरीराद्यर्थकं सर्वं गुरोर्दत्त्वा सुशिष्यकः। अग्रपाकं निवेद्याग्रे भुंजीयाद्गुर्वनुज्ञया॥
शिष्यः पुत्र इति प्रोक्तः सदा शिष्यत्वयोगतः। जिह्वालिंगान्मन्त्रशुक्रं कर्णयोनौ निषिच्य वै॥
जातः पुत्रो मंत्रपुत्रः पितरं पूजयेद्गुरुम्। निमज्जयति पुत्रं वै संसारे जनकः पिता॥
संतारयति संसाराद्गुरुर्वै बोधकः पिता। उभयोरंतरं ज्ञात्वा पितरं गुरुमर्चयेत्॥
अंगशुश्रूषया चापि धनाद्यैः स्वार्जितैर्गुरुम्। पादादिकेशपर्यंतं लिंगान्यंगानि यद्गुरोः॥
धनरूपैः पादुकाद्यैः पादसंग्रहणादिभिः। स्नानाभिषेकनैवेद्यैर्भोजनैश्च प्रपूजयेत्॥
गुरुपूजैव पूजा स्याच्छिवस्य परमात्मनः। गुरुशेषं तु यत्सर्वमात्मशुद्धिकरं भवेत्॥
गुरोः शेषः शिवोच्छिष्टजलमन्नादिनिर्मितम्। शिष्याणां शिवभक्तानां ग्राह्यं भोज्यं भवेद्द्विजाः
गुर्वनुज्ञाविरहितं चोरवत्सकलं भवेत्। गुरोरपि विशेषज्ञं यत्नाद् गृह्णीत वै गुरुम्॥
अज्ञानमोचनं साध्यं विशेषज्ञो हि मोचकः। आदौ च विघ्नशमनं कर्तव्यं कर्मपूर्तये॥
निर्विघ्नेन कृतं सांगं कर्म वै सफलं भवेत्। तस्मात्सकलकर्मादौ विघ्नेशं पूजयेद्बुधः॥

र्वबाधानिवृत्त्यर्थं सर्वान्देवान्यजे द्बुधः। ज्वरादिग्रंथिरोगाश्च बाधा ह्याध्यात्मिकी मता॥१००॥
पैशाचजंबुकादीनां वल्मीकाद्युद्भवे तथा। अकस्मादेव गोधादिजंतूनां पतनेऽपि च ॥१०१॥
गृहे कच्छपसर्पस्त्रीदुर्जनादर्शनेऽपि च। वृक्षनारीगवादीनां प्रसूतिविषयेऽपि च ॥१०२॥
नावि दुःखं समायाति तस्मात्ते भौतिका मताः। अमेध्याशनिपातश्च महामारी तथैव च ॥१०३॥
ज्वरमारी विसूचिश्च गोमारी च मसूरिका। जन्मर्क्षग्रहसंक्रांतिग्रहयोगाः स्वराशिके ॥१०४॥
दुःस्वप्नदर्शनाद्याश्च मता वै ह्याधिदैविकाः। शवचांडालपतितस्पर्शाद्दंतर्गृहे गते ॥१०५॥
एतादृशे समुत्पन्ने भाविदुःखस्य सूचके। शांतियज्ञं तु मतिमान्कुर्यात्तद्दोषशांतये ॥१०६॥
देवालयेऽथ गोष्ठे वा चैत्ये वापि गृहांगणे। प्रदेशोन्नतधिष्ण्ये वै द्विहस्ते च स्वलंकृते ॥१०७॥
भारमात्रं व्रीहिधान्यं प्रस्थाप्य परिसृत्य च। मध्ये विलिख्य कमलं तथा दिक्षु विलिख्य वै ॥
तुना वेष्टितं कुंभं नवगुग्गुलुधूपितम्। मध्ये स्थाप्य महाकुंभं तथा दिक्ष्वपि विन्यसेत् ॥१०९॥
नालाम्रकूर्चादीन्कलशांश्च तथाष्टसु। पूरयेन्मंत्रपूतेन पंचद्रव्ययुतेन हि ॥११०॥
क्षिपेन्नव रत्नानि नीलादीन्क्रमशस्तथा। कर्मज्ञं च सपत्नीकमाचार्यं वरयेद्बुधः ॥१११॥
स्वर्णप्रतिमां विष्णोरिंद्रादीनां च निक्षिपेत्। सशिरस्के मध्यकुंभे विष्णुमावाह्य पूजयेत् ॥११२॥
भागादिषु यथामंत्रमिंद्रादीन्क्रमशो यजेत्। तत्तन्नाम्ना चतुर्थ्या च नमोन्तेन यथाक्रमम् ॥११३॥
आवाहनादिकं सर्वमाचार्येणैव कारयेत्। आचार्यं ऋत्विजा सार्धं तन्मंत्रान्प्रजपेच्छतम् ॥११४॥
कुंभस्य पश्चिमे भागे जपांते होममाचरेत्। कोटिं लक्षं सहस्रं वा शतमष्टोत्तरं बुधाः ॥११५॥
एकाहं वा नवाहं वा तथा मंडलमेव वा। यथायोग्यं प्रकुर्वीत कालदेशानुसारतः ॥११६॥
शमीहोमश्च शांत्यर्थे वृत्त्यर्थे च पलाशकम्। समिदन्नाज्यकैर्द्रव्यैर्नाम्ना मंत्रेण वा हुनेत् ॥११७॥
आरंभे यत्कृतं द्रव्यं तत्क्रियांतं समाचरेत्। पुण्याहं वाचयित्वा ते दिने संप्रोक्षयेज्जलैः ॥११८॥
ब्राह्मणान्भोजयेत्पश्चाद्यावदाहुतिसंख्यया। आचार्यश्च हविष्याशी ऋत्विजश्च भवेद् बुधाः ॥
आदित्यादीन्ग्रहानिष्ट्वा सर्वहोमांत एव हि। ऋत्विग्भ्यो दक्षिणां दद्यान्नवरत्नं यथाक्रमम् ॥१२०॥
दश दानं ततः कुर्याद्भूरिदानं ततः परम्। बालानामुपनीतानां गृहिणां वनिनां धनम् ॥१२१॥
कन्यानां च सभर्तॄणां विधवानां ततः परम्। तंत्रोपकरणं सर्वमाचार्याय निवेदयेत् ॥१२२॥
उत्पातानां च मारीणां दुःखस्वामी यमः स्मृतः। तस्माद्यमस्य प्रीत्यर्थं कालदानं प्रदापयेत् ॥
निष्केण वा कुर्याद्दशनिष्केण वा पुनः। पाशांकुशधरं कालं कुर्यात्पुरुषरूपिणम् ॥१२४॥
स्वर्णप्रतिमादानं कुर्याद्दक्षिणया सह। तिलदानं ततः कुर्यात्पूर्णायुष्यप्रसिद्धये ॥१२५॥
आज्यावेक्षणदानं च कुर्याद्व्याधिनिवृत्तये। सहस्रं भोजयेद्विप्रान्दरिद्रः शतमेव वा ॥१२६॥
वित्ताभावे दरिद्रस्तु यथाशक्ति समाचरेत्। भैरवस्य महापूजां कुर्याद्भूतादिशांतये ॥१२७॥

महाभिषेकं नैवेद्यं शिवस्यांते तु कारयेत्। ब्राह्मणान्भोजयेत्पश्चाद्भूरिभोजनरूपतः।
एवं कृतेन यज्ञेन दोषशांतिमवाप्नुयात्। शांतियज्ञमिमं कुर्याद्वर्षे वर्षे तु फाल्गुने।
दुर्दर्शनादौ सद्यो वै मासमात्रे समाचरेत्। महापापादिसंप्राप्तौ कुर्याद्भैरवपूजनम्।
महाव्याधिसमुत्पत्तौ संकल्पं पुनराचरेत्। सर्वाभावे दरिद्रस्तु दीपदानमथाचरेत्।
तदप्यशक्तः स्नात्वा वैयत्किंचिद्दानमाचरेत्। दिवाकरं नमस्कुर्यान्मंत्रेणाष्टोत्तरं शतम्।
सहस्रमयुतं लक्षं कोटिं वा कारयेद् बुधः। नमस्कारात्मयज्ञेन तुष्टाः स्युः सर्वदेवताः।
त्वत्स्वरूपेऽर्पिता बुद्धिर्न तेऽशून्ये च रोचते। या चास्त्यस्मदहंतेति त्वयि दृष्टे विवर्जिता।
नम्रोऽहं हि स्वदेहेन भो महांस्त्वमसि प्रभो। न शून्यो मत्स्वरूपो वै तव दासोऽस्मि सां
यथायोग्यं स्वात्मयज्ञं नमस्कारं प्रकल्पयेत्। अथात्र शिवनैवेद्यं दत्त्वा तांबूलमाहरेत्।
शिवप्रदक्षिणं कुर्यात्स्वयमष्टोत्तरं शतम्। सहस्रमयुतं लक्षं कोटिमन्येन कारयेत्।
शिवप्रदक्षिणात्सर्वं पातकं नश्यति क्षणात्। दुःखस्य मूलं व्याधिर्हि व्याधेर्मूलं हि पातकम्।
धर्मेणैव हि पापानामपनोदनमीरितम्। शिवोद्देशकृतो धर्मः क्षमः पापविनोदने।
अध्यक्षं शिवधर्मेषु प्रदक्षिणमितीरितम्। क्रियया जपरूपं हि प्रणवं तु प्रदक्षिणम्।
जननं मरणं द्वन्द्वं मायाचक्रमितीरितम्। शिवस्य मायाचक्रे हि बलीपीठं तदुच्यते।
बलिपीठं समारभ्य प्रादक्षिण्यक्रमेण वै। पदे पदांतरं गत्वा बलिपीठं समाविशेत्।
नमस्कारं ततः कुर्यात्प्रदक्षिणमितीरितम्। निर्गमाज्जननं प्राप्तं नमस्त्वात्मसमर्पणम्।
जननं मरणं द्वंद्वं शिवमायासमर्पितम्। शिवमायार्पितद्वंद्वो न पुनस्त्वात्मभाग्भवेत्।
यावद्देहं क्रियाधीनः स जीवो बद्ध उच्यते। देहत्रयवशीकारे मोक्ष इत्युच्यते बुधैः।
मायाचक्रप्रणेता हि शिवः परमकारणम्। शिवमायार्पितद्वंद्वं शिवस्तु परिमार्जति।
शिवेन कल्पितं द्वंद्वं तस्मिन्नेव समर्पयेत्। शिवस्यातिप्रियं विद्यात्प्रदक्षिणं नमो बुधाः।
प्रदक्षिणनमस्काराः शिवस्य परमात्मनः। षोडशैरुपचारैश्च कृता पूजा फलप्रदा।
प्रदक्षिणाविनाश्यं हि पातकं नास्ति भूतले। तस्मात्प्रदक्षिणेनैव सर्वपापं विनाशयेत्।
शिवपूजापरो मौनी सत्यादिगुणसंयुतः। क्रियातपोजपज्ञानध्यानेष्वेकैकमाचरेत्।
ऐश्वर्यं दिव्यदेहश्च ज्ञानमज्ञानसंक्षयः। शिवसान्निध्यमित्येतत्क्रियादीनां फलं भवेत्।
करणेन फलं याति तमसः परिहापनात्। जन्मनः परिमार्जित्वाज्ज्ञबुद्ध्या जनितानिव
यथादेशं यथाकालं यथादेहं यथाधनम्। यथायोग्यं प्रकुर्वीत क्रियादीञ्छिवभक्तिमान्।
न्यायार्जितसुवित्तेन वसेत्प्राज्ञः शिवस्थले। जीवहिंसादिरहितमतिक्लेशविवर्जितम्।
पञ्चाक्षरेण जप्तं च तोयमन्नं विदुः सुखम्। अथवाऽऽहुर्दरिद्रस्य भिक्षान्नं ज्ञानदं भवेत्।

शिवभक्तस्य भिक्षान्नं शिवभक्तिविवर्धनम्। शंभुसत्रमिति प्राहुर्भिक्षान्नं शिवयोगिनः ॥१५६॥
येन केनाप्युपायेन यत्र कुत्रापि भूतले। शुद्धान्नभुक्सदा मौनी रहस्यं न प्रकाशयेत् ॥१५७॥
प्रकाशयेत्तु भक्तानां शिवमाहात्म्यमेव हि। रहस्यं शिवमंत्रस्य शिवो जानाति नापरः ॥१५८॥
शिवभक्तो वसेन्नित्यं शिवलिंगं समाश्रितः। स्थाणुलिंगाश्रयेणैव स्थाणुर्भवति भूसुराः ॥१५६॥
पूजया चरलिंगस्य क्रमान्मुक्तो भवेद्ध्रुवम्। सर्वमुक्तं समासेन साध्यसाधनमुत्तमम् ॥१६०॥
व्यासेन यत्पुरा प्रोक्तं यच्छ्रुतं हि मया पुरा। भद्रमस्तु हि वोऽस्माकं शिवभक्तिर्दृढाऽस्तु सा ॥
य इमं पठतेऽध्यायं यः शृणोति नरः सदा। शिवज्ञानं स लभते शिवस्य कृपया बुधाः ॥१६२॥

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां साध्यसाधनखण्डे
शिवलिंगमाहात्म्यवर्णनं नामाष्टादशोऽध्यायः ॥ १८ ॥

## अथ एकोनविंशोऽध्यायः

### ( पार्थिवपूजनमाहात्म्यं भस्मप्रकाराभिधानं च )

ऋषय ऊचुः

त सूत चिरं जीव धन्यस्त्वं शिवभक्तिमान्। सम्यगुक्तस्त्वया लिंगमहिमा सत्फलप्रदः ॥ १ ॥
त्र पार्थिवमाहेशलिंगस्य महिमाऽधुना। सर्वोत्कृष्टश्च कथितो व्यासतो ब्रूहि तं पुनः ॥ २ ॥

सूत उवाच

णुध्वमृषयः सर्वे सद्भक्त्यादरतोऽखिलाः। शिवपार्थिवलिंगस्य महिमा प्रोच्यते मया ॥ ३ ॥
केष्वेतेषु लिंगेषु पार्थिवं लिंगमुत्तमम्। तस्य पूजनतो विप्रा बहवः सिद्धिमागताः ॥ ४ ॥
रेर्ब्रह्मा च ऋषयः सप्रजापतयस्तथा। संपूज्य पार्थिवं लिङ्गं प्रापुः सर्वेप्सितं द्विजाः ॥ ५ ॥
वासुरमनुष्याश्च गन्धर्वोरगराक्षसाः। अन्येऽपि बहवस्तं संपूज्य सिद्धिं गताः पराम् ॥ ६ ॥
ते रत्नमयं लिङ्गं त्रेतायां हेमसंभवम्। द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौ युगे ॥ ७ ॥
ष्टमूर्तिषु सर्वासु मूर्तिर्वै पार्थिवी वरा। अनन्यपूजिता विप्रास्ततस्तस्मान्महत्फलम् ॥ ८ ॥
था सर्वेषु देवेषु ज्येष्ठः श्रेष्ठो महेश्वरः। एवं सर्वेषु लिंगेषु पार्थिवं श्रेष्ठमुच्यते ॥ ६ ॥
था नदीषु सर्वासु ज्येष्ठा श्रेष्ठा सुरापगा। तथा सर्वेषु लिंगेषु पार्थिवं श्रेष्ठमुच्यते ॥१०॥
था सर्वेषु मंत्रेषु प्रणवो हि महान्स्मृतः। तथेदं पार्थिवं श्रेष्ठमाराध्यं पूज्यमेव हि ॥११॥
था सर्वेषु वर्णेषु ब्राह्मणः श्रेष्ठ उच्यते। तथा सर्वेषु लिंगेषु पार्थिवं श्रेष्ठमुच्यते ॥१२॥
था पुरीषु सर्वासु काशी श्रेष्ठतमा स्मृता। तथा सर्वेषु लिंगेषु पार्थिवं श्रेष्ठमुच्यते ॥१३॥

यथा व्रतेषु सर्वेषु शिवरात्रिव्रतं परम्। तथा सर्वेषु लिंगेषु पार्थिवं श्रेष्ठमुच्यते
यथा देवीषु सर्वासु शैवी शक्तिः परा स्मृता। तथा सर्वेषु लिंगेषु पार्थिवं श्रेष्ठमुच्यते
प्रकृत्य पार्थिवं लिङ्गं योऽन्यदेवं प्रपूजयेत्। वृथा भवति सा पूजा स्नानदानादिकं वृथा
पार्थिवाराधनं पुण्यं धन्यमायुर्विवर्धनम्। तुष्टिदं पुष्टिदं श्रीदं कार्यं साधकसत्तमैः
यथालब्धोपचारैश्च भक्तिश्रद्धासमन्वितः। पूजयेत्पार्थिवं लिंगं सर्वकामार्थसिद्धिदम्
यः कृत्वा पार्थिवं लिंगं पूजयेच्छुभवेदिकम्। इहैव धनवाञ्छ्रीमानन्ते रुद्रोऽभिजायते
त्रिसंध्यं योऽर्चयेल्लिंगं कृत्वा बिल्वेन पार्थिवम्। दशैकादशकं यावत्तस्य पुण्यफलं शृणु
अनेनैव स्वदेहेन रुद्रलोके महीयते। पापहं सर्वमर्त्यानां दर्शनात्स्पर्शनादपि
जीवन्मुक्तः स वै ज्ञानी शिव एव न संशयः। तस्य दर्शनमात्रेण भुक्तिर्मुक्तिश्च जायते
शिवं यः पूजयेन्नित्यं कृत्वा लिंगं तु पार्थिवम्। यावज्जीवनपर्यंतं स याति शिवमन्दिरम्
मृडेनाप्रमितान्वर्षाञ्छिवलोके हि तिष्ठति। सकामः पुनरागत्य राजेन्द्रो भारते भवेत्

निष्कामः पूजयेन्नित्यं पार्थिवं लिंगमुत्तमम् ।
शिवलोके सदा तिष्ठेत्तस्य सायुज्यमाप्नुयात् ॥२५॥

पार्थिवं शिवलिंगं च विप्रो यदि न पूजयेत्। स याति नरकं घोरं शूलप्रोतं सुदारुणम्
यथाकथंचिद्विधिना रम्यं लिंगं प्रकारयेत्। पंचसूत्रविधानं च पार्थिवेन विचारयेत्
अखण्डं तद्धि कर्तव्यं न विखण्डं प्रकारयेत्। विखण्डं तु प्रकुर्वाणो नैव पूजाफलं लभेत्
रत्नजं हेमजं लिंगं पारदं स्फाटिकं तथा। पार्थिवं पुष्परागोत्थमखंडं तु प्रकारयेत्
अखंडं तु चरं लिंगं द्विखंडमचरं स्मृतम्। खंडाखंडविचारोऽयं सचराचरयोः स्मृतः
वेदिका तु महाविद्या लिंगं देवो महेश्वरः। अतो हि स्थावरे लिंगे स्मृता श्रेष्ठा द्विखंडता
द्विखंडं स्थावरं लिंगं कर्तव्यं हि विधानतः। अखंडं जंगमं प्रोक्तं शैवसिद्धान्तवेदिभिः
द्विखंडं तु चरं लिंगं कुर्वन्त्यज्ञानमोहिताः। नैव सिद्धान्तवेत्तारो मुनयः शास्त्रकोविदाः
अखंडं स्थावरं लिंगं द्विखंडं चरमेव च। ये कुर्वन्ति नरा मूढा न पूजाफलभागिनः
तस्माच्छास्त्रोक्तविधिना अखंडं चरसंज्ञकम्। द्विखंडं स्थावरं लिंगं कर्तव्यं परया मुदा
अखंडे तु चरे पूजा सम्पूर्णफलदायिनी। द्विखंडे तु चरे पूजा महाहानिप्रदा स्मृता
अखंडे स्थावरे पूजा न कामफलदायिनी। प्रत्यवायकरी नित्यमित्युक्तं शास्त्रवेदिभिः

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां साध्यसाधनखंडे
पार्थिवशिवलिंगपूजनमाहात्म्यवर्णनं नामैकोनविंशोऽध्यायः ॥१९॥

# अथ विंशोऽध्यायः

## ( वैदिकः पार्थिवपूजनप्रकारः )

### सूत उवाच

अथ वैदिकभक्तानां पार्थिवार्चा निगद्यते। वैदिकेनैव मार्गेण भुक्तिमुक्तिप्रदायिनी ॥ १ ॥
त्रोक्तविधिना स्नात्वा संध्यां कृत्वा यथाविधि। ब्रह्मयज्ञं विधायादौ ततस्तर्पणमाचरेत् ॥ २ ॥
त्यिकं सकलं कामं विधायानंतरं पुमान्। शिवस्मरणपूर्वं हि भस्मरुद्राक्षधारकः ॥ ३ ॥
दोक्तविधिना सम्यक्संपूर्णफलसिद्धये। पूजयेत्परया भक्त्या पार्थिवं लिंगमुत्तमम् ॥ ४ ॥
दीतीरे तडागे च पर्वते काननेऽपि च। शिवालये शुचौ देशे पार्थिवार्चा विधीयते ॥ ५ ॥
द्धप्रदेशसंभूतां मृदमाहृत्य यत्नतः। शिवलिङ्गं प्रकल्पेत सावधानतया द्विजाः ॥ ६ ॥
प्रे गौरा स्मृता शोणा बाहुजे पीतवर्णका। वैश्ये कृष्णा पादजाते ह्यथवा यत्र या भवेत् ॥७॥
गृह्य मृत्तिकां लिंगनिर्माणार्थं प्रयत्नतः। अतीव शुभदेशे च स्थापयेत्तां मृदं शुभाम् ॥ ८ ॥
शोध्य च जलेनापि पिंडीकृत्य शनैः शनैः। विधीयेत शुभं लिङ्गं पार्थिवं वेदमार्गतः ॥ ९ ॥
तः संपूजयेद्भक्त्या भुक्तिमुक्तिफलाप्तये। तत्प्रकारमहं वच्मि शृणुध्वं सविधानतः ॥१०॥
मः शिवाय मंत्रेणार्चनद्रव्यं च प्रोक्षयेत्। भूरसीति च मंत्रेण क्षेत्रसिद्धिं प्रकारयेत् ॥११॥
पोऽस्मानिति मंत्रेण जलसंस्कारमाचरेत्। नमस्ते रुद्रमंत्रेण फाटिकाबंधमुच्यते ॥ १२ ॥
भवायेति मंत्रेण क्षेत्रशुद्धिं प्रकारयेत्। नमः पूर्वेण कुर्यात्पंचामृतस्यापि प्रोक्षणम् ॥१३॥
लग्रीवाय मंत्रेण नमःपूर्वेण भक्तिमान्। चरेच्छंकरलिंगस्य प्रतिष्ठापनमुत्तमम् ॥१४॥
क्तितस्तत एतत्ते रुद्रायेति च मंत्रतः। आसनं रमणीयं वै दद्याद्वैदिकमार्गकृत् ॥१५॥
नो महान्तमिति च मंत्रेणावाहनं चरेत्। याते रुद्रेण मंत्रेण संचरेदुपवेशनम् ॥१६॥
ेण यामिषुमिति न्यासं कुर्याच्छिवस्य च। अध्यवोचदिति प्रेम्णाधिवासं मनुनाचरेत् ॥१७॥
नुनासौ जीव इति देवतान्यासमाचरेत्। असौ योऽवसर्पतीति चाचरेदुपसर्पणम् ॥१८॥
ोऽस्तु नीलग्रीवायेति पाद्यं मनुनाहरेत्। अर्घ्यं च रुद्रगायत्र्याऽऽचमनं त्र्यंबकेण च ॥१९॥
: पृथिव्यामिति च पयसा स्नानमाचरेत्। दधिक्राव्णेति मंत्रेण दधिस्नानं च कारयेत् ॥२०॥
स्नानं खलु घृतं घृतयावेति मंत्रतः। मधुवाता मधुनक्तं मधुमान्न इति त्र्यृचा ॥२१॥
खण्डस्नपनं प्रोक्तमिति पंचामृतं स्मृतम्। अथवा पाद्यमंत्रेण स्नानं पंचामृतेन च ॥२२॥
नस्तोके इति प्रेम्णा मंत्रेण कटिबंधनम्। नमो धृष्णवे इति वा उत्तरीयं च धापयेत् ॥२३॥
ते हेतिरिति प्रेम्णा ऋक्चतुष्केण वैदिकः। शिवाय विधिना भक्तश्चरेद्वस्त्रसमर्पणम् ॥२४॥

नमः श्वभ्य इति प्रेम्णा गंधं दद्याद्दता सुधीः। नमस्तक्षभ्य इति चाक्षतान्मंत्रेण चार्पयेत्
नमः पार्याय इति वा पुष्पं मंत्रेण चार्पयेत्। नमः पर्णाय इति वा बिल्वपत्रसमर्पणम्
नमः कपर्दिने चेति धूपं दद्याद्यथाविधि। दीपं दद्याद्यथोक्तं तु नम आशव इत्यृचा
नमो ज्येष्ठाय मन्त्रेण दद्यान्नैवेद्यमुत्तमम्। मनुना त्र्यम्बकमिति पुनराचमनं स्मृतम्
इमा रुद्रायेति ऋचा कुर्यात्फलसमर्पणम्। नमो व्रज्यायेति ऋचा सकलं शंभवेऽर्पयेत्
मानो महांतमिति च मानस्तोके इति ततः। मंत्रद्वयेनैकादशाक्षतै रुद्रान्प्रपूजयेत्
हिरण्यगर्भ इति ऋचा दक्षिणां हि समर्पयेत्। देवस्यत्वेति मंत्रेण ह्यभिषेकं चरेद्बुधः
दीपमंत्रेण वा शंभोर्नीराजनविधिं चरेत्। पुष्पांजलिं चरेद्भक्त्या इमा रुद्राय च त्र
मानोमहान्तमिति च चरेत्प्राज्ञः प्रदक्षिणाम्। मानस्तोकेति मंत्रेण साष्टाङ्गं प्रणमेत्सुधीः
एषते इति मंत्रेण शिवमुद्रां प्रदर्शयेत्। यतोयत इत्यभयां ज्ञानाख्यां त्र्यंबकेण च
नमःसेनेति मंत्रेण महामुद्रां प्रदर्शयेत्। दर्शयेद्धेनुमुद्रां च नमो गोभ्य ऋचाऽनया
पंच मुद्राः प्रदर्श्याथ शिवमंत्रजपं चरेत्। शतरुद्रियमंत्रेण जपेद्वेदविचक्षणः
ततः पंचाङ्गपाठं च कुर्याद्वेदविचक्षणः। देवागात्विति मंत्रेण कुर्याच्छंभोर्विसर्जनम्
इत्युक्तः शिवपूजाया व्यासतो वैदिको विधिः। समासतश्च शृणुत वैदिकं विधिमुत्तमम्
ऋचा सद्योजातमिति मृदाहरणमाचरेत्। वामदेवाय इति च जलप्रक्षेपमाचरेत्
अघोरेण च मंत्रेण लिंगनिर्माणमाचरेत्। तत्पुरुषायमंत्रेणाह्वानं कुर्याद्यथाविधि
संयोजयेद्वेदिकायामीशानमनुना हरम्। अन्यत्सर्वं विधानं च कुर्यात्संक्षेपतः सुधीः
पंचाक्षरेण मंत्रेण गुरुदत्तेन वा तथा। कुर्यात्पूजां षोडशोपचारेण विधिवत्सुधीः
भवाय भवनाशाय महादेवाय धीमहि। उग्राय उग्रनाशाय शर्वाय शशिमौलिने
अनेन मनुना वापि पूजयेच्छंकरं सुधीः। सुभक्त्या च भ्रमं त्यक्त्वा भक्त्यैव फलदः
इत्यपि प्रोक्तमादृत्य वैदिकक्रमपूजनम्। प्रोच्यतेऽन्यविधिः सम्यक्साधारणतया द्विजाः
पूजा पार्थिवलिंगस्य संप्रोक्ता शिवनामभिः। तां शृणुध्वं मुनिश्रेष्ठाः सर्वकामप्रदायिनीम्
हरो महेश्वरः शंभुः शूलपाणिः पिनाकधृक्। शिवः पशुपतिश्चैव महादेव इति क्रमात्
मृदाहरणसंघट्टप्रतिष्ठाह्वानमेव च। स्नपनं पूजनं चैव क्षमस्वेति विसर्जनम्
ॐकारादिचतुर्थ्यन्तैर्नमोन्तैर्नामभिः क्रमात्। कर्तव्याश्च क्रियाः सर्वा भक्त्या परमया मुदा
कृत्वा न्यास विधिं सम्यक्षडङ्गं करयोस्तथा। षडक्षरेण मंत्रेण ततो ध्यानं समाचरेत्

कैलासपीठासनमध्यसंस्थं भक्तैः सनंदादिभिरर्च्यमानम्।
भक्तार्तिदावानलमप्रमेयं ध्यायेदुमालिंगितविश्वभूषणम् ॥ ५१॥

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नम्।
पद्मासीनं समंतात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥५२॥

इति ध्यात्वा च संपूज्य पार्थिवं लिंगमुत्तमम्। जपेत्पञ्चाक्षरं मंत्रं गुरुदत्तं यथाविधि ॥५३॥
स्तुतिभिश्चैव देवेशं स्तुवीत प्रणमन्सुधीः। नानाविधाभिर्विप्रेंद्राः पठेद्वै शतरुद्रियम् ॥५४॥
ततः साक्षतपुष्पाणि गृहीत्वांजलिना मुदा। प्रार्थयेच्छंकरं भक्त्या मंत्रैरेभिः सुभक्तितः ॥५५॥
तावकस्त्वद्गुणप्राणस्त्वच्चित्तोऽहं सदा मृड। कृपानिधे इति ज्ञात्वा भूतनाथ प्रसीद मे ॥५६॥
अज्ञानाद्यदि वा ज्ञानाज्जपं पूजादिकं मया। कृतं तदस्तु सफलं कृपया तव शंकर ॥५७॥
अहं पापी महानद्य पावनश्च भवान्महान्। इति विज्ञाय गौरीश यदिच्छसि तथा कुरु ॥५८॥
वेदैः पुराणैः सिद्धान्तैर्ऋषिभिर्विविधैरपि। न ज्ञातोऽसि महादेव कुतोऽहं त्वां सदाशिव ॥५९॥
यथा तथा त्वदीयोऽस्मि सर्वभावैर्महेश्वर। रक्षणीयस्त्वयाऽहं वै प्रसीद परमेश्वर ॥६०॥
इत्येवं चाक्षतान्पुष्पाण्यारोप्य च शिवोपरि। प्रणमेद्भक्तितः शंभुं साष्टांगं विधिवन्मुने ॥६१॥
ततः प्रदक्षिणां कुर्याद्यथोक्तविधिना सुधीः। पुनः स्तुवीत देवेशं स्तुतिभिः श्रद्धयान्वितः ६२॥
ततो गलरवं कृत्वा प्रणमेच्छुचिनम्रधीः। कुर्याद्विज्ञप्तिमादृत्य विसर्जनमथाचरेत् ॥६३॥
इत्युक्ता मुनिशार्दूलाः पार्थिवार्चा विधानतः। भुक्तिदा मुक्तिदा चैव शिवभक्तिविवर्धिनी ॥६४॥
इत्यध्यायं सुचित्तेन यः पठेच्छृणुयादपि। सर्वपापविशुद्धात्मा सर्वान्कामानवाप्नुयात् ॥६५॥
आयुरारोग्यदं चैव यशस्यं स्वर्ग्यमेव च। पुत्रपौत्रादिसुखदमाख्यानमिदमुत्तमम् ॥६६॥

इति शिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां साध्यसाधनखंडे
पार्थिवलिंगपूजाविधिवर्णनो नाम विंशोऽध्यायः ॥२०॥

## अथ एकविंशोऽध्यायः

### (कामनाऽनुरोधेन पूजने शिवलिंगसंख्याभिधानम्)

**ऋषय ऊचुः**

सूत सूत महाभाग व्यासशिष्य नमोऽस्तु ते। सम्यगुक्तं त्वया तात पार्थिवार्चाविधानकम् ॥ १ ॥
कामनाभेदमाश्रित्य संख्यां ब्रूहि विधानतः। शिवपार्थिवलिंगानां कृपया दीनवत्सल ॥ २ ॥

**सूत उवाच**

शृणुध्वमृषयः सर्वे पार्थिवार्चाविधानकम्। यस्यानुष्ठानमात्रेण कृतकृत्यो भवेन्नरः ॥ ३ ॥

अकृत्वा पार्थिवं लिंगं योऽन्यदेवं प्रपूजयेत्। वृथा भवति सा पूजा दमदानादिकं वृथा।
संख्या पार्थिवलिंगानां यथाकामं निगद्यते। संख्या सद्यो मुनिश्रेष्ठ निश्चयेन फलप्रदा।
प्रथमावाहनं तत्र प्रतिष्ठा पूजनं पृथक्। लिंगाकारं समं तत्र सर्वं ज्ञेयं पृथक्पृथक्।
विद्यार्थी पुरुषः प्रीत्या सहस्रमितपार्थिवम्। पूजयेच्छिवलिंगं हि निश्चयात्तत्फलप्रदम्।
नरः पार्थिवलिंगानां धनार्थी च तदर्द्धकम्। पुत्रार्थी सार्द्धसाहस्रं वस्त्रार्थी शतपंचकम्।
मोक्षार्थी कोटिगुणितं भूकामश्च सहस्रकम्। दयार्थी च त्रिसाहस्रं तीर्थार्थी द्विसहस्रकम्।
सुहृत्कामी त्रिसाहस्रं वश्यार्थी शतमष्टकम्। मारणार्थी सप्तशतं मोहनार्थी शताष्टकम्।
उच्चाटनपरश्चैव सहस्रं च यथोक्ततः। स्तंभनार्थी सहस्रं तु द्वेषणार्थी तदर्द्धकम्।
निगडान्मुक्तिकामस्तु सहस्रं सार्द्धमुत्तमम्। महाराजभये पञ्चशतं ज्ञेयं विचक्षणैः।
चौरादिसंकटे ज्ञेयं पार्थिवानां शतद्वयम्। डाकिन्यादिभये पंचशतमुक्तं च पार्थिवम्।
दारिद्र्ये पञ्चसाहस्रमयुतं सर्वकामदम्। अथ नित्यविधिं वक्ष्ये शृणुध्वं मुनिसत्तमाः।
एकं पापहरं प्रोक्तं द्विलिङ्गं चार्थसिद्धिदम्। त्रिलिङ्गं सर्वकामानां कारणं परमीरितम्।
उत्तरोत्तरमेवं स्यात्पूर्वोक्तगणनावधि। मतांतरमथो वक्ष्ये संख्यायां मुनिभेदतः।
लिंगानामयुतं कृत्वा पार्थिवानां सुबुद्धिमान्। निर्भयो हि भवेन्नूनं महाराजभयं हरेत्।
कारागृहादिमुक्त्यर्थमयुतं कारयेद्बुधः। डाकिन्यादिभये सप्तसहस्रं कारयेत्तथा।
सहस्राणि पञ्चपञ्चाशदपुत्रस्तत्प्रकारयेत्। लिंगानामयुतेनैव कन्यकासंततिं लभेत्।
लिंगानामयुतेनैव विष्ण्वाद्यैश्वर्यमाप्नुयात्। लिंगानां प्रयुतेनैव ह्यतुलां श्रियमाप्नुयात्।
कोटिमेकां तु लिंगानां यः करोति नरो भुवि। शिव एव भवेत्सोऽपि नात्र कार्य्या विचारणा।
अर्चा पार्थिवलिंगानां कोटियज्ञफलप्रदा। भुक्तिदा मुक्तिदा नित्यं ततः कामार्थिनां नृ
विना लिंगार्चनं यस्य कालो गच्छति नित्यशः। महाहानिर्भवेत्तस्य दुर्वृतस्य दुरात्मनः।
एकतः सर्वदानानि व्रतानि विविधानि च। तीर्थानि नियमा यज्ञा लिंगार्चा चैकतः स्
कलौ लिंगार्चनं श्रेष्ठं यथा लोके प्रदृश्यते। तथान्यन्नास्ति शास्त्राणामेष सिद्धान्तनिश्चयः।
भुक्तिमुक्तिप्रदं लिंगं विविधापन्निवारणम्। पूजयित्वा नरो नित्यं शिवसायुज्यमाप्नुयात्।
शिवनाममयं लिंगं नित्यं पूज्यं महर्षिभिः। यतश्च सर्वलिंगेषु तस्मात्पूज्यं विधानतः।
उत्तमं मध्यमं नीचं त्रिविधं लिंगमीरितम्। मानतो मुनिशार्दूलास्तच्छृणुध्वं वदाम्यहम्।
चतुरंगुलमुच्छ्रायं रम्यवेदिकया युतम्। उत्तमं लिंगमाख्यातं मुनिभिः शास्त्रकोविदैः।
तदर्द्धं मध्यमं प्रोक्तं तदर्द्धमधमं स्मृतम्। इत्थं त्रिविधमाख्यातमुत्तरोत्तरतः परम्।
अनेकलिंगं यो नित्यं भक्तिश्रद्धासमन्वितः। पूजयेत्स लभेत्कामान्मनसा मानसेप्सितान्।

न लिंगाराधनादन्यत्पुण्यं वेदचतुष्टये। विद्यते सर्वशास्त्राणामेष एव विनिश्चयः ॥३२॥
सर्वमेतत्परित्यज्य कर्मजालमशेषतः। भक्त्या परमया विद्वाँल्लिंगमेकं प्रपूजयेत् ॥३३॥
लिंगेऽर्चितेऽर्चितं सर्वं जगत्स्थावरजङ्गमम्। संसारांबुधिमग्नानां नान्यत्तरणसाधनम् ॥३४॥
अज्ञानतिमिरांधानां विषयासक्तचेतसाम्। प्लवो नान्योऽस्ति जगति लिंगाराधनमंतरा ॥३५॥
हरिब्रह्मादयो देवा मुनयो यक्षराक्षसाः। गंधर्वाश्चारणाः सिद्धा दैतेया दानवास्तथा ॥३६॥
नागाः शेषप्रभृतयो गरुडाद्याः खगास्तथा। सप्रजापतयश्चान्ये मनवः किन्नरा नराः ॥३७॥
पूजयित्वा महाभक्त्या लिंगं सर्वार्थसिद्धिदम्।
प्राप्ताः कामानभीष्टांश्च तांस्तान्सर्वान्हृदि स्थितान् ॥३८॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा प्रतिलोमजः। पूजयेत्सततं लिंगं तत्तन्मंत्रेण सादरम् ॥३९॥
किं बहूक्तेन मुनयः स्त्रीणामपि तथान्यतः। अधिकारोऽस्ति सर्वेषां शिवलिंगार्चने द्विजाः ४०॥
द्विजानां वैदिकेनापि मार्गेणाराधनं वरम्। अन्येषामपि जंतूनां वैदिकेन न संमतम् ॥४१॥
वैदिकानां द्विजानां च पूजा वैदिकमार्गतः। कर्तव्या नान्यमार्गेण इत्याह भगवाञ्छिवः ॥४२॥
दधीचिगौतमादीनां शापेनादग्धचेतसाम्। द्विजानां जायते श्रद्धा नैव वैदिककर्मणि ॥४३॥
यो वैदिकमनादृत्य कर्म स्मार्तमथापि वा। अन्यत्समाचरेन्मर्त्यो न संकल्पफलं लभेत् ॥४४॥
इत्थं कृत्वार्चनं शंभोर्नैवेद्यांतं विधानतः। पूजयेदष्टमूर्तीश्च तत्रैव त्रिजगन्मयीः ॥४५॥
क्षितिरापोऽनलो वायुराकाशः सूर्यसोमकौ। यजमान इति त्वष्टौ मूर्तयः परिकीर्तिताः ॥४६॥
शर्वो भवश्च रुद्रश्च उग्रो भीम इतीश्वरः। महादेवः पशुपतिरेतान्मूर्तिभिरर्चयेत् ॥४७॥
पूजयेत्परिवारं च ततः शंभोः सुभक्तितः। ईशानादिक्रमात्तत्र चंदनाक्षतपत्रकैः ॥४८॥
ईशानं नंदिनं चंडं महाकालं च भृङ्गिणम्। वृषं स्कंदं कपर्दीशं सोमं शुक्रं च तत्क्रमात् ॥४९॥
अग्रतो वीरभद्रं च पृष्ठे कीर्तिमुखं तथा। तत एकादशान्रुद्रान्पूजयेद्विधिना ततः ॥५०॥
ततः पंचाक्षरं जप्त्वा शतरुद्रियमेव च। स्तुतीर्नानाविधाः कृत्वा पञ्चांगपठनं तथा ॥५१॥
ततः प्रदक्षिणां कृत्वा नत्वा लिङ्गं विसर्जयेत्। इति प्रोक्तमशेषं च शिवपूजनमादरात् ॥५२॥
रात्रावुदङ्मुखः कुर्याद्देवकार्य्यं सदैव हि। शिवार्चनं सदाप्येवं शुचिः कुर्यादुदङ्मुखः ॥५३॥
न प्राचीमग्रतः शंभोर्नोदीचीं शक्तिसंहिताम्। न प्रतीचीं यतः पृष्ठमतो ग्राह्यं समाश्रयेत् ॥५४॥
विना भस्मत्रिपुंड्रेण विना रुद्राक्षमालया। बिल्वपत्रं विना नैव पूजयेच्छंकरं बुधः ॥५५॥
तस्मात्प्राप्तौ मुनिश्रेष्ठाः प्रवृत्ते शिवपूजने। तस्मान्मृदापि कर्तव्यं ललाटे च त्रिपुंड्रकम् ५६॥

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां साध्यसाधनखण्डे
पार्थिवपूजनवर्णनं नामैकविंशोऽध्यायः ॥२१॥

# अथ द्वाविंशोऽध्यायः

## ( शिवनैवेद्यभक्षणनिर्णयः बिल्वमाहात्म्यं च )

### ऋषय ऊचुः

अग्राह्यं शिवनैवेद्यमिति पूर्वं श्रुतं वचः। ब्रूहि तन्निर्णयं बिल्वमाहात्म्यमपि सन्मुने।

### सूत उवाच

शृणुध्वं मुनयः सर्वे सावधानतयाऽधुना। सर्वं वदामि सप्रीत्या धन्या यूयं शिवव्रताः।
शिवभक्तः शुचिः शुद्धः सद्व्रती दृढनिश्चयः। भक्षयेच्छिवनैवेद्यं त्यजेदग्राह्यभावनाम्।
दृष्ट्वापि शिवनैवेद्यं यांति पापानि दूरतः। भुक्ते तु शिवनैवेद्ये पुण्यान्यायांति कोटिशः।
अलं यागसहस्रेणाप्यलं यागार्बुदैरपि। भक्षिते शिवनैवेद्ये शिवसायुज्यमाप्नुयात्।
यद्गृहे शिवनैवेद्यप्रचारोऽपि प्रजायते। तद्गृहं पावनं सर्वमन्यपावनकारणम्॥
आगतं शिवनैवेद्यं गृहीत्वा शिरसा मुदा। भक्षणीयं प्रयत्नेन शिवस्मरणपूर्वकम्।
आगतं शिवनैवेद्यमन्यदा ग्राह्यमित्यपि। विलंबे पापसंबंधो भवत्येव हि मानवः॥
न यस्य शिवनैवेद्यग्रहणेच्छा प्रजायते। स पापिष्ठगरिष्ठः स्यान्नरकं यात्यपि ध्रुवम्॥
हृदये चन्द्रकांते च स्वर्णरूप्यादिनिर्मिते। शिवदीक्षावता भक्तेनेदं भक्ष्यमितीर्यते।
शिवदीक्षान्वितो भक्तो महाप्रसादसंज्ञकम्। सर्वेषामपि लिंगानां नैवेद्यं भक्षयेच्छुभम्।
अन्यदीक्षायुतनृणां शिवभक्तिरतात्मनाम्। शृणुध्वं निर्णयं प्रीत्या शिवनैवेद्यभक्षणे।
शालग्रामोद्भवे लिंगे रसलिंगे तथा द्विजाः। पाषाणे राजते स्वर्णे सुरसिद्धप्रतिष्ठिते।
काश्मीरे स्फाटिके रात्ने ज्योतिर्लिंगेषु सर्वशः। चान्द्रायणसमं प्रोक्तं शंभोर्नैवद्यभक्षणम्।
ब्रह्महापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत्। भक्षयित्वा द्रुतं तस्य सर्वपापं प्रणश्यति।
चंडाधिकारो यत्रास्ति तद्भोक्तव्यं न मानवैः। चंडाधिकारो नो यत्र भोक्तव्यं तच्च भक्तितः।
बाणलिंगे च लौहे च सिद्धलिंगे स्वयंभुवि। प्रतिमासु च सर्वासु न चंडोऽधिकृतो भवेत्
स्नापयित्वा विधानेन यो लिंगस्नपनोदकम्। त्रिः पिबेत्त्रिविधं पापं तस्येहाशु विनश्यति।
अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम्। शालग्रामशिलासंगात्सर्वं याति पवित्रताम्॥
लिंगोपरि च यद्द्रव्यं तदग्राह्यं मुनीश्वराः। सुपवित्रं च तज्ज्ञेयं यल्लिंगस्पर्शबाह्यतः।
नैवेद्यनिर्णयः प्रोक्त इत्थं वो मुनिसत्तमाः। शृणुध्वं बिल्वमाहात्म्यं सावधानतयाऽऽदरात्
महादेवस्वरूपोऽयं बिल्वो देवैरपि स्तुतः। यथाकथंचिदेतस्य महिमा ज्ञायते कथम्।
पुण्यतीर्थानि यावंति लोकेषु प्रथितान्यपि। तानि सर्वाणि तीर्थानि बिल्वमूले वसंति हि

ल्वमूले महादेवं लिंगरूपिणमव्ययम्। यः पूजयति पुण्यात्मा स शिवं प्राप्नुयाद्ध्रुवम् ॥
ल्वमूले जलैर्यस्तु मूर्धानमभिषिंचति। स सर्वतीर्थस्नातः स्यात्स एव भुवि पावनः ॥२५॥
तस्य बिल्वमूलस्याथालवालमनुत्तमम्। जलाकुलं महादेवो दृष्ट्वा तुष्टो भवत्यलम् ॥२६॥
जयेद्बिल्वमूलं यो गंधपुष्पादिभिर्नरः। शिवलोकमवाप्नोति संततिर्वर्धते सुखम् ॥२७॥
ल्वमूले दीपमालां यः कल्पयति सादरम्। स तत्त्वज्ञानसंपन्नो महेशांतर्गतो भवेत् ॥२८॥
ल्वशाखां समादाय हस्तेन नवपल्लवम्। गृहीत्वा पूजयेद्बिल्वं स च पापैः प्रमुच्यते ॥२९॥
ल्वमूले शिवरतं भोजयेद्यस्तु भक्तितः। एकं वा कोटिगुणितं तस्य पुण्यं प्रजायते ॥३०॥
ल्वमूले क्षीरयुक्तमन्नमाज्येन संयुतम्। यो दद्याच्छिवभक्ताय स दरिद्रो न जायते ॥३१॥
गोपांगमिति प्रोक्तं शिवलिंगप्रपूजनम्। प्रवृत्तानां निवृत्तानां भेदतो द्विविधं द्विजाः ॥३२॥
त्तानां पीठपूजा सर्वाभीष्टप्रदा भुवि। पात्रेणैव प्रवृत्तस्तु सर्वपूजां समाचरेत् ॥३३॥
द्यमभिषेकान्ते शाल्यन्नेन समाचरेत्। पूजान्ते स्थापयेल्लिंगं पुटे शुद्धे पृथग्गृहे ॥३४॥
पूजानिवृत्तानां स्वभोज्यं तु निवेदयेत्। निवृत्तानां परं सूक्ष्मं लिंगमेव विशिष्यते ॥३५॥
भूत्यभ्यर्चनं कुर्याद्विभूतिं च निवेदयेत्। पूजां कृत्वा तथा लिंगं शिरसा धारयेत्सदा ॥३६॥

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां साध्यसाधनखण्डे
शिवनैवेद्यवर्णनो नाम द्वाविंशोऽध्यायः ॥२२॥

## अथ त्रयोविंशोऽध्यायः

( रुद्राक्षमाहात्म्यं शिवनाममहिमा च )

### ऋषय ऊचुः

सूत महाभाग व्यासशिष्य नमोऽस्तु ते। तदेव व्यासतो ब्रूहि भस्ममाहात्म्यमुत्तमम् ॥ १ ॥
रुद्राक्षमाहात्म्यं नाममाहात्म्यमुत्तमम्। त्रितयं ब्रूहि सुप्रीत्या ममानन्दय मानसम् ॥ २ ॥

### सूत उवाच

पृष्टं भवद्भिश्च लोकानां हितकारकम्। भवन्तो वै महाधन्याः पवित्राः कुलभूषणाः ॥ ३ ॥
चैव शिवः साक्षाद्दैवतं परमं शुभम्। सदाशिवकथा लोके वल्लभा भवतां सदा ॥ ४ ॥
न्याश्च कृतार्थाश्च सफलं देहधारणम्। उद्धृतं च कुलं तेषां ये शिवं समुपासते ॥ ५ ॥
नाम मुखे यस्य सदाशिवशिवेति च। पापानि न स्पृशंत्येव खदिरांगारकं यथा ॥ ६ ॥
शिवाय नमस्तुभ्यं मुखं व्याहरते यदा। तन्मुखं पावनं तीर्थं सर्वपापविनाशनम् ॥ ७ ॥
मुखं च तथा यो वै पश्यति प्रीतिमान्नरः। तीर्थजन्यं फलं तस्य भवतीति सुनिश्चितम् ॥ ८ ॥

यत्र त्रयं सदा तिष्ठेदेतच्छुभतरं द्विजाः। तस्य स्पर्शनमात्रेण वेणीस्नानफलं लभे
शिवनामविभूतिश्च तथा रुद्राक्ष एव च। एतत्त्रयं महापुण्यं त्रिवेणीसदृशं स्मृत
एतत्त्रयं शरीरे च यस्य तिष्ठति नित्यशः। तस्यैव दर्शनं लोके दुर्लभं पापहारक
तद्दर्शनं यथा वेणी नोभयोरंतरं मनाक्। एवं यो न विजानाति स पापिष्ठो न संशय
विभूतिर्यस्य नो भाले नांगे रुद्राक्षधारणम्। नास्ये शिवमयी वाणी तं त्यजेदधमं यथा
शैवं नाम यथा गङ्गा विभूतिर्यमुना मता। रुद्राक्षं विधिना प्रोक्ता सर्वपापविनाशिनी
शरीरे च त्रयं यस्य तत्फलं चैकतः स्थितम्। एकतो वेणिकायाश्च स्नानजं तु फलं बुधै
तदेवं तुलितं पूर्वं ब्रह्मणा हितकारिणा। समानं चैव तज्जातं तस्माद्धार्यं सदा बुधै
तद्दिनं हि समारभ्य ब्रह्मविष्ण्वादिभिः सुरैः। धार्यते त्रितयं तच्च दर्शनात्पापहारक

ऋषय ऊचुः

ईदृशं हि फलं प्रोक्तं नामादित्रितयोद्भवम्। तन्माहात्म्यं विशेषेण वक्तुमर्हसि सुव्रत

सूत उवाच

ऋषयो हि महाप्रज्ञाः सच्छैवा ज्ञानिनां वराः। तन्माहात्म्यं हि सद्भक्त्या शृणुतादरतो हि
स गूढमपि शास्त्रेषु पुराणेषु श्रुतिष्वपि। भवत्स्नेहान्मया विप्राः प्रकाशः क्रियतेऽधुना
कस्तत्त्रितयमाहात्म्यं संजानाति द्विजोत्तमाः। महेश्वरं विना सर्वं ब्रह्मांडे सदसत्पर
वच्म्यहं नाममाहात्म्यं यथाभक्ति समासतः। शृणुत प्रीतितो विप्राः सर्वपापहरं परम्
शिवेति नामदावाग्नेर्महापातकपर्वताः। भस्मीभवंत्यनायासात्सत्यं सत्यं न संशयः
पापमूलानि दुःखानि विविधान्यपि शौनक। शिवनामैकनश्यानि नान्यनश्यानि सर्वथा
स वैदिकः स पुण्यात्मा स धन्यः स बुधो मतः। शिवनामजपासक्तो यो नित्यं भुवि मानवः
भवंति विविधा धर्मास्तेषां सद्यः फलोन्मुखाः। येषां भवति विश्वासः शिवनामजपे मुने
पातकानि विनश्यंति यावंति शिवनामतः। भुवि तावंति पापानि क्रियंते न नरैर्मुने
ब्रह्महत्यादिपापानां राशीनप्रमितान्मुने। शिवनाम द्रुतं प्रोक्तं नाशयत्यखिलान्नरैः
शिवनामतरीं प्राप्य संसाराब्धिं तरंति ये। संसारमूलपापानि तानि नश्यंत्यसंशयम्
संसारमूलभूतानां पातकानां महामुने। शिवनामकुठारेण विनाशो जायते ध्रुवम्
शिवनामामृतं पेयं पापदावानलार्दितैः। पापदावाग्नितप्तानां शांतिस्तेन विना न हि
शिवेति नामपीयूषवर्षधारापरिप्लुताः। संसारदवमध्येऽपि न शोचंति कदाचन
शिवनाम्नि महद्भक्तिर्जाता येषां महात्मनाम्। तद्विधानां तु सहसा मुक्तिर्भवति सर्वथा

नेकजन्मभिर्येन तपस्तप्तं मुनीश्वर। शिवनाम्नि भवेद्भक्तिः सर्वपापापहारिणी ॥३४॥
स्यासाधारणी शंभुनाम्नि भक्तिरखंडिता। तस्यैव मोक्षः सुलभो नान्यस्येति मतिर्मम ॥३५॥
त्वाप्यनेकपापानि शिवनामजपादरः। सर्वपापविनिर्मुक्तो भवत्येव न संशयः ॥३६॥
वंति भस्मसाद्वृक्षा दवदग्धा यथा वने। तथा तावंति दग्धानि पापानि शिवनामतः ॥३७॥
यो नित्यं भस्मपूतांगः शिवनामजपादरः। स तरत्येव संसारमघोरमपि शौनक ॥३८॥
ह्मस्वहरणं कृत्वा हत्वापि ब्राह्मणान्बहून्। न लिप्यते नरः पापैः शिवनामजपादरः ॥३९॥
लोक्य वेदानखिलाञ्छिवनामजपः परः। संसारतरणोपाय इति पूर्वैर्विनिश्चितम् ॥४०॥
बहूक्त्या मुनिश्रेष्ठाः श्लोकेनैकेन वच्म्यहम्। शिवनाम्नो महिमानं सर्वपापापहारणम् ॥४१॥
पानां हरणे शम्भोर्नाम्नः शक्तिर्हि पावनी। शक्नोति पातकं तावत्कर्तुं नापि नरः क्वचित् ४२॥
वनामप्रभावेण लेभे सद्गतिमुत्तमाम्। इन्द्रद्युम्ननृपः पूर्वं महापापयुतो मुने ॥४३॥
था काचिद्द्विजा योषाऽसौ मुने बहुपापिनी। शिवनामप्रभावेण लेभे सद्गतिमुत्तमाम् ॥४४॥
युक्तं वो द्विजश्रेष्ठा नाममाहात्म्यमुत्तमम्। शृणुध्वं भस्ममाहात्म्यं सर्वपावनपावनम् ॥४५॥

इति श्री.शिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां साध्यसाधनखंडे
शिवनाममाहात्म्यवर्णनं नाम त्रयोविंशोऽध्यायः ॥२३॥

## अथ चतुर्विंशोऽध्यायः

### ( भस्ममाहात्म्यम् )

### सूत उवाच

धं भस्म संप्रोक्तं सर्वमंगलदं परम्। तत्प्रकारमहं वक्ष्ये सावधानतया शृणु ॥१॥
ज्ञेयं महाभस्म द्वितीयं स्वल्पसंज्ञकम्। महाभस्म इति प्रोक्तं भस्म नानाविधं परम् ॥२॥
स्म त्रिविधं प्रोक्तं श्रौतं स्मार्तं च लौकिकम्। भस्मैव स्वल्पसंज्ञं हि बहुधा परिकीर्तितम् ॥३॥
भस्म तथा स्मार्तं द्विजानामेव कीर्तितम्। अन्येषामपि सर्वेषामपरं भस्म लौकिकम् ॥४॥
णं मंत्रतः प्रोक्तं द्विजानां मुनिपुंगवैः। केवलं धारणं ज्ञेयमन्येषां मंत्रवर्जितम् ॥५॥
नेयमुच्यते भस्म दग्धगोमयसंभवम्। तदपि द्रव्यमित्युक्तं त्रिपुंड्रस्य महामुने ॥६॥
होत्रोत्थितं भस्म संग्राह्यं वा मनीषिभिः। अन्ययज्ञोत्थितं वापि त्रिपुण्ड्रस्य च धारणे ॥७॥
रित्यादिभिर्मंत्रैर्जाबालोपनिषद्गतैः। सप्तभिर्धूलनं कार्यं भस्मना सजलेन च ॥८॥
नामाश्रमाणां च मंत्रतोऽमंत्रतोऽपि च। त्रिपुंड्रोद्धूलनं प्रोक्तं जाबालैरादरेण च ॥९॥
नोद्धूलनं चैव यथा तिर्यक्त्रिपुंड्रकम्। प्रमादादपि मोक्षार्थी न त्यजेदिति विश्रुतिः ॥१०॥

शिवेन विष्णुना चैव तथा तिर्यक्त्रिपुंड्रकम्। उमा देवी च लक्ष्मीश्च वाचान्याभिश्च नित्य
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरपि च संकरैः। अपभ्रंशैर्धृतं भस्म त्रिपुंड्रोद्धूलनात्मना
उद्धूलनं त्रिपुंड्रं च श्रद्धया नाचरंति ये। तेषां नास्ति समाचारो वर्णाश्रमसमन्वित
उद्धूलनं त्रिपुंड्रं च श्रद्धया नाचरन्ति ये। तेषां नास्ति विनिर्मुक्तिः संसाराज्जन्मकोटि
उद्धूलनं त्रिपुंड्रं च श्रद्धया नाचरन्ति ये। तेषां नास्ति शिवज्ञानं कल्पकोटिशतैर
उद्धूलनं त्रिपुंड्रं च श्रद्धया नाचरन्ति ये। ते महापातकैर्युक्ता इति शास्त्रीयनिर्ण
उद्धूलनं त्रिपुंड्रं च श्रद्धया नाचरन्ति ये। तेषामाचरितं सर्वं विपरीतफलाय
महापातकयुक्तानां जंतूनां सर्वविद्विषम्। त्रिपुण्ड्रोद्धूलनद्वेषो जायते सुदृढं मु
शिवाग्निकार्यं यः कृत्वा कुर्यात्त्रियायुषात्मवित्। मुच्यते सर्वपापैस्तु स्पृष्टेन भस्मना न
सितेन भस्मना कुर्य्यात्त्रिसन्ध्यं यस्त्रिपुण्ड्रकम्। सर्वपापविनिर्मुक्तः शिवेन सह मोद
सितेन भस्मना कुर्याल्ललाटे तु त्रिपुण्ड्रकम्। योऽसावनादिभूतान्हि लोकानाप्नो मृतो
अकृत्वा भस्मना स्नानं न जपेद्वै षडक्षरम्। त्रिपुंड्रं च रचित्वा तु विधिना भस्मना
अदयो वाधमो वापि सर्वपापान्वितोऽपि वा। उषःपापान्वितो वापि मूर्खो वा पतितोऽ
यस्मिन्देशे वसेन्नित्यं भूतिशासनसंयुतः। सर्वतीर्थैश्च क्रतुभिः सान्निध्यं क्रियते सदा
त्रिपुण्ड्रसहितो जीवः पूज्यः सर्वैः सुरासुरैः। पापान्वितोऽपि शुद्धात्मा किं पुनः श्रद्धया
यस्मिन्देशे शिवज्ञानी भूतिशासनसंयुतः। गतो यदृच्छयाद्यापि तस्मिंस्तीर्थाः समागता
बहुनात्र किमुक्तेन धार्यं भस्म सदा बुधैः। लिंगार्चनं सदा कार्यं जप्यो मंत्रः षडक्षर
ब्रह्मणा विष्णुना वापि रुद्रेण मुनिभिः सुरैः। भस्मधारणमाहात्म्यं न शक्यं परिभाषितुं
इति वर्णाश्रमाचारो लुप्तावर्णक्रियोऽपि च। पापात्सकृत्त्रिपुण्ड्रस्य धारणात्सोऽपि मुच्य
ये भस्मधारिणं त्यक्त्वा कर्म कुर्वन्ति मानवाः। तेषां नास्ति विनिर्मोक्षः संसाराज्जन्मको
तेनाधीतं गुरोः सर्वं तेन सर्वमनुष्ठितम्। येन विप्रेण शिरसि त्रिपुंड्रं भस्मना कृतं
ये भस्मधारिणं दृष्ट्वा नराः कुर्वंति ताडनम्। तेषां चंडालतो जन्म ब्रह्मन्नूह्यं विपश्चि
मानस्तोकेन मंत्रेण मंत्रितं भस्म धारयेत्। ब्राह्मणः क्षत्रियश्चैव प्रोक्तेष्वंगेषु भक्तिमान्
वैश्यस्त्रियंबकेनैव शूद्रः पंचाक्षरेण तु। अन्यासां विधवास्त्रीणां विधिः प्रोक्तश्च शूद्रव
पंचब्रह्मादिमनुभिर्गृहस्थस्य विधीयते। त्रियंबकेन मनुना विधिर्वै ब्रह्मचारिण
अघोरेणाथ मनुना विपिनस्थविधिः स्मृतः। यतिस्तु प्रणवेनैव त्रिपुण्ड्रादीनि कार्ये
अतिवर्णाश्रमी नित्यं शिवोऽहंभावनात्परात्। शिवयोगी च नियतमीशानेनापि धारये
न त्याज्यं सर्ववर्णैश्च भस्मधारणमुत्तमम्। अन्यैरपि यथा जीवैः सदेति शिवशासन

स्मस्नानेन यावंतः कणाः स्वांगे प्रतिष्ठिताः। तावंति शिवलिंगानि तनौ धत्ते हि धारकः ॥३९॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चापि च संकराः।
स्त्रियोऽथ विधवा बालाः प्राप्ताः पाखण्डिकास्तथा ॥४०॥
ह्मचारी गृही वन्यः संन्यासी वा व्रती तथा। नार्यो भस्म त्रिपुंड्रांका मुक्ता एव न संशयः ॥४१॥
नाज्ञानधृतो वापि वह्निदाहसमो यथा। ज्ञानाज्ञानधृतं भस्म पावयेत्सकलं नरम् ॥४२॥
नाश्नीयाज्जलमन्नमल्पमपि वा भस्माक्षधृत्या विना
भुक्त्वा वाथ गृही वनीपतियतिर्वर्णी तथा संकरः।
एनोभुङ् नरकं प्रयाति स तदा गायत्रिजापेन त-
द्वर्णानां तु यतेस्तु मुख्यप्रणवाजापेन मुक्तिर्भवेत् ॥४३॥
पुण्ड्रं ये विनिन्दंति निन्दंति शिवमेव ते। धारयन्ति च ये भक्त्या धारयन्ति तमेव ते ॥४४॥
भस्मरहितं भालं धिग्ग्राममशिवालयम्। धिगनीशार्चनं जन्म धिग्विद्यामशिवाश्रयाम् ४५॥
निंदंति महेश्वरं त्रिजगतामाधारभूतं हरं ये निंदंति त्रिपुण्ड्रधारणकरं दोषस्तु तद्दर्शने।
वै संकरसूकरासुरखरश्वक्रोष्टुकीटोपमा जाता एव भवन्ति पापपरमास्ते नारकाः केवलम् ॥४६॥
ते दृष्ट्वा शशिभास्करौ निशि दिने स्वप्नेऽपि नो केवलं
पश्यंतु श्रुतिरुद्रसूक्तजपतो मुच्येत तेनादृताः।
तत्संभाषणतो भवेद्धि नरकं निस्तारवानास्थितं
ये भस्मादिविधारणं हि पुरुषं निंदन्ति मंदा हि ते ॥४७॥
तांत्रिकस्त्वधिकृतो नोर्ध्वपुण्ड्रधरो मुने। संतप्तचक्रचिह्नोऽत्र शिवयज्ञे बहिष्कृतः ॥४८॥
ते बहवो लोका बृहज्जाबालचोदिताः। ते विचार्याः प्रयत्नेन ततो भस्मरतो भवेत् ॥४९॥
यच्चंदनैश्चंदनकेऽपि मिश्रं धार्यं हि भस्मैव त्रिपुण्ड्रभस्मना।
विभूतिभालोपरि किंचनापि धार्यं सदा नो यदि संति बुद्धयः ॥५०॥
स्त्रीभिस्त्रिपुण्ड्रमलकावधि धारणीयं भस्म द्विजादिभिरथो विधवाभिरेवम्।
तद्वत्सदाश्रमवतां विशदा विभूतिर्धार्यापवर्गफलदा सकलाघहन्त्री ॥५१॥
पुण्ड्रं कुरुते यस्तु भस्मना विधिपूर्वकम्। महापातकसंघातैर्मुच्यते चोपपातकैः ॥५२॥
चारी गृहस्थो वा वानप्रस्थोऽथवा यतिः। ब्रह्मक्षत्राश्च विट्शूद्रास्तथान्ये पतिताधमाः ॥५३॥
धूलनं त्रिपुंड्रं च धृत्वा शुद्धा भवंति च। भस्मनो विधिना सम्यक्पापराशिं विहाय च ॥५४॥
मधारी विशेषेण स्त्रीगोहत्यादिपातकैः। वीरहत्याऽश्वहत्याभ्यां मुच्यते नात्र संशयः ॥५५॥
व्यापहरणं परदाराभिमर्शनम्। परनिन्दा परक्षेत्रहरणं परपीडनम् ॥५६॥

सस्यारामादिहरणं गृहदाहादिकर्म च।गोहिरण्यमहिष्यादितिलकम्बलवाससाम्
अन्नधान्यजलादीनां नीचेभ्यश्च परिग्रहः।दासवेश्यामतंगीषु वृषलीषु नटीषु
रजस्वलासु कन्यासु विधवासु च मैथुनम्।मांसचर्मरसादीनां लवणस्य च विक्रयः
पैशुन्यं कूटवादश्च साक्षिमिथ्याभिलाषिणाम्।
एवमादीन्यसंख्यानि पापानि विविधानि च।सद्य एव विनश्यंति त्रिपुंड्रस्य च धारणात्
शिवद्रव्यापहरणं शिवनिंदा च कुत्रचित्।निंदा च शिवभक्तानां प्रायश्चित्तैर्न शुद्ध्यति
रुद्राक्षं यस्य गात्रेषु ललाटे तु त्रिपुंड्रकम्।स चांडालोऽपि संपूज्यो वर्णवर्णोत्तमोत्तमः
यानि तीर्थानि लोकेऽस्मिन्गंगाद्याः सरितश्च याः।स्नातो भवति सर्वत्र ललाटे तु त्रिपुंड्रक
सप्तकोटि महामंत्राः पंचाक्षरपुरस्सराः।तथान्ये कोटिशो मन्त्राः शैवकैवल्यहेतवः
अन्ये मंत्राश्च देवानां सर्वसौख्यकरा मुने।ते सर्वे तस्य वश्याः स्युर्यो बिभर्ति त्रिपुंड्रकम्
सहस्रं पूर्वजातानां सहस्रं जनयिष्यताम्।स्ववंशजानां ज्ञातीनामुद्धरेद्यस्त्रिपुंड्रधा
इह भुक्त्वाखिलान्भोगान्दीर्घायुर्व्याधिवर्जितः।जीवितान्ते च मरणं सुखेनैव प्रपद्यते
अष्टैश्वर्यगुणोपेतं प्राप्य दिव्यवपुः शिवम्।दिव्यं विमानमारुह्य दिव्यत्रिदशसेवितम्
विद्याधराणां सर्वेषां गंधर्वाणां महौजसाम्।इन्द्रादिलोकपालानां लोकेषु च यथाक्रमम्
भुक्त्वा भोगान्सुविपुलान्प्रजेशानां पदेषु च।ब्रह्मणः पदमासाद्य तत्र कन्याशतं रमेत्
तत्र ब्रह्मायुषो मानं भुक्त्वा भोगाननेकशः।विष्णुर्लोके लभेद्भोगं यावद्ब्रह्मशतात्ययम्
शिवलोकं ततः प्राप्य लब्ध्वेष्टं काममक्षयम्।शिवसायुज्यमाप्नोति संशयो नात्र जायताम्
सर्वोपनिषदां सारं समालोक्य मुहुर्मुहुः।इदमेव हि निर्णीतं परं श्रेयस्त्रिपुंड्रकम्
विभूतिं निंदते यो वै ब्राह्मणः सोऽन्यजातकः।प्रयाति नरके घोरे यावद्ब्रह्मा चतुर्मुखः
श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने।धृतत्रिपुण्ड्रः पूतात्मा मृत्युं जयति मानवः
जलस्नानं मलत्यागे भस्मस्नानं सदा शुचि।मंत्रस्नानं हरेत्पापं ज्ञानस्नाने परं पदम्
सर्वतीर्थेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम्।तत्फलं समवाप्नोति भस्मस्नानकरो नरः
भस्मस्नानं परं तीर्थं गङ्गास्नानं दिने दिने।भस्मरूपी शिवः साक्षाद्भस्म त्रैलोक्यपावनम्
न तदूनं न तद्ध्यानं न तद्दानं जपो न सः।त्रिपुण्ड्रेण विना येन विप्रेण यदनुष्ठितम्
वानप्रस्थस्य कन्यानां दीक्षाहीननृणां तथा।मध्याह्नात्प्राग्जलैर्युक्तं परतो जलवर्जितम्
एवं त्रिपुण्ड्रं यः कुर्यान्नित्यं नियतमानसः।शिवभक्तः स विज्ञेयो भुक्तिं मुक्तिं च विंदति
यस्यांगे नैव रुद्राक्ष एकोऽपि बहुपुण्यदः।तस्य जन्म निरर्थं स्यात्त्रिपुण्ड्ररहितो यदि
एवं त्रिपुण्ड्रमाहात्म्यं समासात्कथितं मया।रहस्यं सर्वजंतूनां गोपनीयमिदं त्वया

...स्रो रेखा भवंत्येत्र स्थानेषु मुनिपुङ्गवाः। ललाटादिषु सर्वेषु यथोक्तेष्वत्रुधैर्मुने ॥८४॥
भ्रुवोर्मध्यं समारभ्य यावदंतो भवेद्भ्रुवोः। तावत्प्रमाणं संधार्यं ललाटे च त्रिपुंड्रकम् ॥८५॥
...मध्यमानामिकांगुल्या मध्ये तु प्रतिलोमतः। अंगुष्ठेन कृता रेखा त्रिपुण्ड्राख्याऽभिधीयते ॥८६॥
...ऽङ्गुलिभिरादाय तिसृभिर्भस्म यत्नतः। त्रिपुंड्रं धारयेद्भक्त्या भुक्तिमुक्तिप्रदं परम् ॥८७॥
...णामपि रेखानां प्रत्येकं नवदेवताः। सर्वत्रांगेषु ता वक्ष्ये सावधानतया शृणु ॥८८॥
...कारो गार्हपत्याग्निर्भूर्धर्मश्च रजोगुणः। ऋग्वेदश्च क्रियाशक्तिः प्रातःसवनमेव च ॥८९॥
...हादेवश्च रेखायाः प्रथमायाश्च देवता। विज्ञेया मुनिशार्दूलाः शिवदीक्षापरायणैः ॥९०॥
...कारो दक्षिणाग्निश्च नभस्तत्त्वं यजुस्तथा। मध्यंदिनं च सवनमिच्छाशक्त्यंतरात्मकौ ॥९१॥
...हेश्वरश्च रेखाया द्वितीयायाश्च देवता। विज्ञेया मुनिशार्दूल शिवदीक्षापरायणैः ॥९२॥
...काराहवनीयौ च परमात्मा तमोदिवौ। ज्ञानशक्तिः सामवेदस्तृतीयं सवनं तथा ॥९३॥
...वश्चैव च रेखायास्तृतीयायाश्च देवता। विज्ञेया मुनिशार्दूल शिवदीक्षापरायणैः ॥९४॥
... नित्यं नमस्कृत्य सद्भक्त्या स्थानदेवताः। त्रिपुंड्रं धारयेच्छुद्धो भुक्तिं मुक्तिं च विंदति ॥

इत्युक्ताः स्थानदेवाश्च सर्वांगेषु मुनीश्वरः।
तेषां संबंधिनो भक्त्या स्थानानि शृणु सांप्रतम् ॥९६॥

...त्रिंशत्स्थानके वार्धषोडशस्थानकेऽपि च। अष्टस्थाने तथा चैव पंचस्थानेऽपि ता न्यसेत् ॥
...मांगे ललाटे च कर्णयोर्नेत्रयोस्तथा। नासावक्त्रगलेष्वेवं हस्तयोरुभयोस्ततः ॥९८॥
...रे मणिबंधे च हृदये पार्श्वयोर्द्वयोः। नाभौ मुष्कद्वये चैवमूर्वोर्गुल्फे च जानुनि ॥९९॥
...द्वये पदद्वन्द्वे द्वात्रिंशत्स्थानमुत्तमम्। अग्न्यम्भूवायुदिग्देशदिक्पालान्वसुभिः सह १००॥

धरा ध्रुवश्च सोमश्च आपश्चैवानिलोऽनलः।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥१०१॥

...षां नाममात्रेण त्रिपुंड्रं धारयेद्बुधः। कुर्याद्वा षोडशस्थाने त्रिपुंड्रं तु समाहितः ॥१०२॥
...र्के च ललाटे च कंठे चांसद्वये भुजे। कूर्परे मणिबंधे च हृदये नाभिपार्श्वके ॥१०३॥
... चैवं प्रतिष्ठाप्य यजेत्तत्राश्विदैवते। शिवं शक्तिं तथा रुद्रमीशं नारदमेव च ॥१०४॥
...गादिनवशक्तीश्च एताः षोडश देवताः। नासत्यौ दस्रकश्चैव अश्विनौ द्वौ प्रकीर्तितौ १०५॥
...वा मूर्ध्नि केशे च कर्णयोर्वदने तथा। बाहुद्वये च हृदये नाभ्यामूरुयुगे तथा ॥१०६॥

जानुद्वये च पदयोः पृष्ठभागे च षोडश।
शिवश्चन्द्रश्च रुद्रः को विघ्नेशो विष्णुरेव वा ॥१०७॥

...चैव हृदये शम्भुस्तथा नाभौ प्रजापतिः। नागश्च नागकन्याश्च उभयोर्ऋषिकन्यकाः ॥

पादयोश्च समुद्राश्च तीर्थाः पृष्ठे विशालतः। इत्येवं षोडशस्थानमष्टस्थानमथोच्यते
गुह्यस्थानं ललाटश्च कर्णद्वयमनुत्तमम्। अंसयुग्मं च हृदयं नाभिरित्येवमष्टकम्
ब्रह्मा च ऋषयः सप्त देवताश्च प्रकीर्तिताः। इत्येवं तु समुद्दिष्टं भस्मविद्भिर्मुनीश्वराः
अथ वा मस्तकं बाहू हृदयं नाभिरेव च। पञ्चस्थानान्यमून्याहुर्धारणे भस्मविज्जनाः
यथासंभवनं कुर्याद्देशकालाद्यपेक्षया। उद्धूलनेऽप्यशक्तश्चेत्त्रिपुंड्रादीनि कारये
त्रिनेत्रं त्रिगुणाधारं त्रिदेवजनकं शिवम्। स्मरन्नमः शिवायेति ललाटे तु त्रिपुंड्रकम्

ईशाभ्यां नम इत्युक्त्वा पार्श्वयोश्च त्रिपुंड्रकम्।
बीजाभ्यां नम इत्युक्त्वा धारयेत्तु प्रकोष्ठयोः ॥११५॥

कुर्यादधः पितृभ्यां च उमेशाभ्यां तथोपरि। भीमायेति ततः पृष्ठे शिरसः पश्चिमे तथा

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां भस्मधारणवर्णनो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

## अथ पञ्चविंशोऽध्यायः

### ( रुद्राक्षमाहात्म्यम् )

### सूत उवाच

शौनकर्षे महाप्राज्ञ शिवरूप महामते। शृणु रुद्राक्षमाहात्म्यं समासात्कथयाम्यहम्
शिवप्रियतमो ज्ञेयो रुद्राक्षः परपावनः। दर्शनात्स्पर्शनाज्जाप्यात्सर्वपापहरः स्मृतः
पुरा रुद्राक्षमहिमा देव्यग्रे कथितो मुने। लोकोपकरणार्थाय शिवेन परमात्मना

### शिव उवाच

श्रूयतां तु महेशानि रुद्राक्षमहिमा शिवे। कथयामि तव प्रीत्या भक्तानां हितकाम्यया
दिव्यवर्षसहस्राणि महेशानि पुनः पुरा। तपः प्रकुर्वतस्त्रस्तं मनः संयम्य वै मम
स्वतंत्रेण परेशेन लोकोपकृतिकारिणा। लीलया परमेशानि चक्षुरुन्मीलितं मया
पुटाभ्यां चारुचक्षुर्भ्यां पतिता जलबिंदवः। तत्राश्रुबिंदुतो जाता वृक्षा रुद्राक्षसंज्ञकाः
स्थावरत्वमनुप्राप्य भक्तानुग्रहकारणात्। ते दत्ता विष्णुभक्तेभ्यश्चतुर्वर्णेभ्य एव च
भूमौ गौडोद्भवांश्चक्रे रुद्राक्षाञ्छिववल्लभान्। मथुरायामयोध्यायां लंकायां मलये तथा
सह्याद्रौ च तथा काश्यां देशेष्वन्येषु वा तथा। परानसह्यपापौघभेदनाञ्छ्रुतिनोदनान्

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा जाता ममाज्ञया।
रुद्राक्षास्ते पृथिव्यां तु तज्जातीयाः शुभाक्षकाः ॥१२॥

श्वेतरक्ताः पीतकृष्णा वर्णा ज्ञेयाः क्रमाद्बुधैः। स्वजातीयं नृभिर्धार्यं रुद्राक्षं वर्णतः क्रमात् ॥१२॥
वर्णैस्तु तत्फलं धार्यं भुक्तिमुक्तिफलेप्सुभिः। शिवभक्तैर्विशेषेण शिवयोः प्रीतये सदा ॥१३॥
धात्रीफलप्रमाणं यच्छ्रेष्ठमेतदुदाहृतम्। बदरीफलमात्रं तु मध्यमं संप्रकीर्त्तितम् ॥१४॥

अधमं चणमात्रं स्यात्प्रक्रियैषा परोच्यते।
शृणु पार्वति सुप्रीत्या भक्तानां हितकाम्यया ॥१५॥

बदरीफलमात्रं च यत्स्यात्किल महेश्वरि। तथापि फलदं लोके सुखसौभाग्यवर्द्धनम् ॥१६॥
धात्रीफलसमं यत्स्यात्सर्वारिष्टविनाशनम्। गुंजया सदृशं यत्स्यात्सर्वार्थफलसाधनम् ॥१७॥
यथा यथा लघुः स्याद्वै तथाधिकफलप्रदः। एकैकतः फलं प्रोक्तं दशांशैरधिकं बुधैः ॥१८॥
रुद्राक्षधारणं प्रोक्तं पापनाशनहेतवे। तस्माच्च धारणीयो वै सर्वार्थसाधनो ध्रुवम् ॥१९॥
यथा च दृश्यते लोके रुद्राक्षः फलदः शुभः। न तथा दृश्यतेऽन्या च मालिका परमेश्वरि ॥२०॥

समाः स्निग्धा दृढाः स्थूलाः कंटकैः संयुताः शुभाः।
रुद्राक्षाः कामदा देवि भुक्तिमुक्तिप्रदाः सदा ॥२१॥

कृमिदुष्टं छिन्नभिन्नं कंटकैर्हीनमेव च। व्रणयुक्तमवृत्तं च रुद्राक्षान्षड्विवर्जयेत् ॥२२॥

स्वयमेव कृतद्वारं रुद्राक्षं स्यादिहोत्तमम्।
यत्तु पौरुषयत्नेन कृतं तन्मध्यमं भवेत् ॥२३॥

रुद्राक्षधारणं प्रोक्तं महापातकनाशनम। रुद्रसंख्याशतं धृत्वा रुद्ररूपो भवेन्नरः ॥२४॥
एकादश शतानीह धृत्वा यत्फलमाप्यते। तत्फलं शक्यते नैव वक्तुं वर्षशतैरपि ॥२५॥
शतार्द्धेन युतैः पंचशतैर्वै मुकुटं मतम्। रुद्राक्षैर्विरचेत्सम्यग्भक्तिमान्पुरुषो नरः ॥२६॥
त्रिभिः शतैः षष्टियुक्तैस्त्रिरावृत्या तथा पुनः। रुद्राक्षैरुपवीतं च निर्मीयाद्भक्तितत्परः ॥२७॥

शिखायां च त्रयं प्रोक्तं रुद्राक्षाणां महेश्वरि।
कर्णयोः षट् च षट् चैव वामदक्षिणयोस्तथा ॥२८॥

शतमेकोत्तरं कंठे बाह्वोर्वै रुद्रसंख्यया। कूर्परद्वारयोस्तत्र मणिबंधे तथा पुनः ॥२९॥
उपवीते त्रयं धार्यं शिवभक्तिरतैर्नरैः। शेषानुर्वरितान्पंच सम्मितान्धारयेत्कटौ ॥३०॥
एतत्संख्या धृता येन रुद्राक्षाः परमेश्वरि। तद्रूपं तु प्रणम्यं हि स्तुत्यं सर्वैर्महेशवत् ॥३१॥
एवंभूतं स्थितं ध्याने यदा कृत्वासने जनम्। शिवेति व्याहरंश्चैव दृष्ट्वा पापैः प्रमुच्यते ॥३२॥
शताधिकसहस्रस्य विधिरेष प्रकीर्त्तितः। तदभावे प्रकारोऽन्यः शुभः संप्रोच्यते मया ॥३३॥
शिखायामेकरुद्राक्षं शिरसा त्रिंशतं वहेत्। पंचाशच्च गले दध्याद्बाह्वोः षोडश षोडश ॥३४॥
मणिबंधे द्वादश द्विस्कंधे पंचशतं वहेत्। अष्टोत्तरशतैर्माल्यमुपवीतं प्रकल्पयेत् ॥३५॥

एवं सहस्ररुद्राक्षान्धारयेद्यो दृढव्रतः। तं नमंति सुराः सर्वे यथा रुद्रस्तथैव सः
एकं शिखायां रुद्राक्षं चत्वारिंशत्तु मस्तके। द्वात्रिंशत्कण्ठदेशे तु वक्षस्यष्टोत्तरं शतम्

एकैकं कर्णयोः षट् षट् बाह्वोः षोडश षोडश ।
करयोरविमानेन द्विगुणेन मुनीश्वर ॥३८॥

संख्या प्रीतिधृता येन सोऽपि शैवजनः परः। शिववत्पूजनीयो हि वंद्यः सर्वैरभीक्ष्णशः
शिरसीशानमंत्रेण कर्णे तत्पुरुषेण च। अघोरेण गले धार्यं तेनैव हृदयेऽपि च
अघोरबीजमंत्रेण करयोर्धारयेत्सुधीः। पंचदशाक्षग्रथितां वामदेवेन चोदरे

पंच ब्रह्मभिरंगैश्च त्रिमालां पंचसप्त च ।
अथ वा मूलमंत्रेण सर्वानक्षांस्तु धारयेत् ॥४२॥

मद्यं मांसं तु लशुनं पलाण्डुं शिग्रुमेव च। श्लेष्मांतकं विड्वराहं भक्षणे वर्जयेत्ततः

वलक्षं रुद्राक्षं द्विजतनुभिरेवेह विहितं सुरक्तं क्षत्राणां प्रमुदितमुमे पीतमसकृत्।
ततो वैश्यैर्धार्यं प्रतिदिवसमावश्यकमहो तथा कृष्णं शूद्रैः श्रुतिगदितमार्गोऽयमगजे।
वर्णी वनी गृहयतिर्नियमेन दध्यादेतद्रहस्यपरमो न हि जातु तिष्ठेत्।
रुद्राक्षधारणमिदं सुकृतैश्च लभ्यं त्यक्त्वेदमेतदखिलान्नरकान्प्रयांति।

आदावामलकास्ततो लघुतरा रुग्णास्ततः कण्टकैः
संदष्टाः कृमिभिस्तनूपकरणच्छिद्रेण हीनास्तथा ।
धार्या नैव शुभेप्सुभिश्चणकवद्रुद्राक्षमप्यंततो
रुद्राक्षो मम लिंगमंगलमुमे सूक्ष्मं प्रशस्तं सदा ॥४६॥

सर्वाश्रमाणां वर्णानां स्त्रीशूद्राणां शिवाज्ञया। धार्याः सदैव रुद्राक्षा यतीनां प्रणवेन हि।
दिवा बिभ्रद्रात्रिकृतै रात्रौ बिभ्रद्दिवाकृतैः। प्रातर्मध्याह्नसायाह्ने मुच्यते सर्वपातकैः।
ये त्रिपुंड्रधरा लोके जटाधारिण एव ये। ये रुद्राक्षधरास्ते वै यमलोकं प्रयांति न।

रुद्राक्षमेकं शिरसा बिभर्ति तथा त्रिपुण्ड्रं च ललाटमध्ये ।
पञ्चाक्षरं ये हि जपंति मंत्रं पूज्या भवद्भिः खलु ते हि साधवः ॥५०॥

यस्याङ्गे नास्ति रुद्राक्षस्त्रिपुंड्रं भालपट्टके। मुखे पंचाक्षरं नास्ति तमानय यमालयम्।
ज्ञात्वा ज्ञात्वा तत्प्रभावं भस्मरुद्राक्षधारिणः। ते पूज्याः सर्वदास्माकं नो नेतव्याः कदाचन
एवमाज्ञापयामास कालोऽपि निजकिङ्करान्। तथेतिं मत्त्वा ते सर्वे तूष्णीमासन्सुविस्मिताः
अत एव महादेवि रुद्राक्षोऽप्यघनाशनः। तद्धरो मत्प्रियः शुद्धोऽस्त्यघवानपि पार्वति।
हस्ते बाहौ तथा मूर्ध्नि रुद्राक्षं धारयेत्तु यः। अवध्यः सर्वभूतानां रुद्ररूपी चरेद्भुवि।

सुरासुराणां सर्वेषां वंदनीयः सदा स वै। पूजनीयो हि दृष्टस्य पापहा च यथा शिवः ॥५६॥
ध्यानज्ञानावमुक्तोऽपि रुद्राक्षं धारयेत्तु यः। सर्वपापविनिर्मुक्तः स याति परमां गतिम् ॥५७॥
रुद्राक्षेण जपन्मन्त्रं पुण्यं कोटिगुणं भवेत्। दशकोटिगुणं पुण्यं धारणाल्लभते नरः ॥५८॥
यावत्कालं हि जीवस्य शरीरस्थो भवेत्स वै। तावत्कालं स्वल्पमृत्युर्न तं देवि विबाधते ॥५९॥
त्रिपुंड्रेण च संयुक्तं रुद्राक्षाविलसांगकम्। मृत्युंजयं जपंतं च दृष्ट्वा रुद्रफलं लभेत् ॥६०॥
पंचदेवप्रियश्चैव सर्वदेवप्रियस्तथा। सर्वमंत्राञ्जपेद्भक्तो रुद्राक्षमालया प्रिये ॥६१॥
विष्णवादिदेवभक्ताश्च धारयेयुर्न संशयः। रुद्रभक्तो विशेषेण रुद्राक्षान्धारयेत्सदा ॥६२॥

रुद्राक्षा विविधाः प्रोक्तास्तेषां भेदान्वदाम्यहम्।
शृणु पार्वति सद्भक्त्या भुक्तिमुक्तिफलप्रदान् ॥६३॥

एकवक्त्रः शिवः साक्षाद्भुक्तिमुक्तिफलप्रदः। तस्य दर्शनमात्रेण ब्रह्महत्यां व्यपोहति ॥६४॥
यत्र संपूजितस्तत्र लक्ष्मीर्दूरतरा नहि। नश्यंत्युपद्रवाः सर्वे सर्वकामा भवंति हि ॥६५॥
द्विवक्त्रो देवदेवेशः सर्वकामफलप्रदः। विशेषतः स रुद्राक्षो गोवधं नाशयेद्द्रुतम् ॥६६॥

त्रिवक्त्रो यो हि रुद्राक्षः साक्षात्साधनदः सदा।
तत्प्रभावाद्भवेयुर्वै विद्याः सर्वाः प्रतिष्ठिताः ॥६७॥

चतुर्वक्त्रः स्वयं ब्रह्मा नरहत्यां व्यपोहति। दर्शनात्स्पर्शनात्सद्यश्चतुर्वर्गफलप्रदः ॥६८॥
पंचवक्त्रः स्वयं रुद्रः कालाग्निर्नामतः प्रभुः। सर्वमुक्तिप्रदश्चैव सर्वकामफलप्रदः ॥६९॥
अगम्यागमनं पापमभक्ष्यस्य च भक्षणम्। इत्यादिसर्वपापानि पंचवक्त्रो व्यपोहति ॥७०॥
षड्वक्त्रः कार्तिकेयस्तु धारणाद्दक्षिणे भुजे। ब्रह्महत्यादिकैः पापैर्मुच्यते नात्र संशयः ॥७१॥

सप्तवक्त्रो महेशानि ह्यनंगो नाम नामतः।
धारणात्तस्य देवेशि दरिद्रोऽपीश्वरो भवेत् ॥७२॥

रुद्राक्षश्चाष्टवक्त्रश्च वसुमूर्तिश्च भैरवः। धारणात्तस्य पूर्णायुर्मृतो भवति शूलभृत् ॥७३॥
भैरवो नववक्त्रश्च कपिलश्च मुनिः स्मृतः। दुर्गा वा तदधिष्ठात्री नवरूपा महेश्वरी ॥७४॥
तं धारयेद्वामहस्ते रुद्राक्षं भक्तितत्परः। सर्वेश्वरो भवेन्नूनं मम तुल्यो न संशयः ॥७५॥

दशवक्त्रो महेशानि स्वयं देवो जनार्दनः।
धारणात्तस्य देवेशि सर्वान्कामानवाप्नुयात् ॥७६॥

एकादशमुखो यस्तु रुद्राक्षः परमेश्वरि। स रुद्रो धारणात्तस्य सर्वत्र विजयी भवेत् ॥७७॥
द्वादशास्यं तु रुद्राक्षं धारयेत्केशदेशके। आदित्याश्चैव ते सर्वे द्वादशैव स्थितास्तथा ७८॥
त्रयोदशमुखो विश्वेदेवस्तद्धारणान्नरः। सर्वान्कामानवाप्नोति सौभाग्यमंगलं लभेत् ॥७९॥

चतुर्दशमुखो यो हि रुद्राक्षः परमः शिवः। धारयेन्मूर्ध्नि तं भक्त्या सर्वपापं प्रणश्यति
इति रुद्राक्षभेदा हि प्रोक्ता वै मुखभेदतः। तत्तन्मंत्राञ्छृणु प्रीत्या क्रमाच्छैलेश्वरात्मजे
ॐ ह्रीं नमः १ ॐ नमः २ क्लीं नमः ३ ॐ ह्रीं नमः ४ ॐ ह्रीं नमः ५ ॐ
हुं नमः ६ ॐ हुं नमः ७ ॐ हुं नमः ८ ॐ ह्रीं हुं नमः ९ ॐ ह्रीं नमः १० ॐ ह्रीं
११ ॐ क्रौं क्षौं रौं नमः १२ ॐ ह्रीं नमः १३ ॐ नमः १४
भक्तिश्रद्धायुतश्चैव सर्वकामार्थसिद्धये। रुद्राक्षान्धारयेन्मंत्रैर्देवनालस्य वर्जितः

विना मंत्रेण यो धत्ते रुद्राक्षं भुवि मानवः।
स याति नरकं घोरं यावदिन्द्राश्चतुर्दश ॥८३॥

रुद्राक्षमालिनं दृष्ट्वा भूतप्रेतपिशाचकाः। डाकिनी शाकिनी चैव ये चान्ये द्रोहकाः
कृत्रिमं चैव यत्किंचिदभिचारादिकं च यत्। तत्सर्वं दूरतो याति दृष्ट्वा शंकितविग्रहम्
रुद्राक्षमालिनं दृष्ट्वा शिवो विष्णुः प्रसीदति। देवी गणपतिः सूर्यः सुराश्चान्येऽपि पार्वति
एवं ज्ञत्वा तु माहात्म्यं रुद्राक्षस्य महेश्वरि। सम्यग्धार्याः समंत्राश्च भक्त्या धर्मविवृद्धये
इत्युक्तं गिरिजाग्रे हि शिवेन परमात्मना। भस्मरुद्राक्षमाहात्म्य भुक्तिमुक्तिफलप्रदम्
शिवस्यातिप्रियौ ज्ञेयौ भस्मरुद्राक्षधारिणौ। तद्धारणप्रभावाद्धि भुक्तिर्मुक्तिर्न संशयः
भस्मरुद्राक्षधारी यः शिवभक्तः स उच्यते। पञ्चाक्षरजपासक्तः परिपूर्णश्च सन्मुखे
विना भस्मत्रिपुंड्रेण विना रुद्राक्षमालया। पूजितोऽपि महादेवो नाभीष्टफलदायकः

तत्सर्वं च समाख्यातं यत्पृष्टं हि मुनीश्वर।
भस्मरुद्राक्षमाहात्म्यं सर्वकाम समृद्धिदम् ॥९२॥
एतद्यः शृणुयान्नित्यं माहात्म्यं परमं शुभम्।
रुद्राक्षभस्मनोर्भक्त्या सर्वान्कामानवाप्नुयात् ॥९३॥

इह सर्वसुखं भुक्त्वा पुत्रपौत्रादिसंयुतः। लभेत्परत्र सन्मोक्षं शिवस्यातिप्रियो भवेत्
विद्येश्वरसंहितेयं कथिता वो मुनीश्वराः। सर्वसिद्धिप्रदा नित्यं मुक्तिदा शिवशासनात्

इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां साध्यसाधनखण्डे
रुद्राक्षमाहात्म्यवर्णनं नाम पञ्चविंशोऽध्यायः ॥२५॥

## समाप्तेयं प्रथमा विद्येश्वरसंहिता।

ॐ नमः शिवाय

# श्रीशिवमहापुराणम्

## द्वितीया रुद्रसंहिता ( सृष्टिखण्डः—१ )

### प्रथमोऽध्यायः

( निर्गुणशिवस्य शक्तिविषयकः प्रश्नः )

विश्वोद्भवस्थितिलयादिषु हेतुमेकं गौरीपतिं विदिततत्त्वमनन्तकीर्तिम् ।
मायाश्रयं विगतमायमचिन्त्यरूपं बोधस्वरूपममलं हि शिवं नमामि ॥१॥
वन्दे शिवं तं प्रकृतेरनादिं प्रशान्तमेकं पुरुषोत्तमं हि ।
स्वमायया कृत्स्नमिदं हि सृष्ट्वा नभोवदन्तर्बहिरास्थितो यः ॥ २ ॥
वन्देऽन्तरस्थं निजगूढरूपं शिवं स्वतः स्रष्टुमिदं विचष्टे ।
जगन्ति नित्यम्परितो भ्रमंति यत्सन्निधौ चुम्बकलोहवत्तम् ॥ ३ ॥

व्यास उवाच

गत. पितरं शम्भुञ्जगतो मातरं शिवाम्। तत्पुत्रञ्च गणाधीशं नत्वैतद्वर्णयामहे ॥ ४ ॥
कदा मुनयः सर्वे नैमिषारण्यवासिनः। पप्रच्छुर्वरया भक्त्या सूतं ते शौनकादयः ॥ ५ ॥

ऋषय ऊचुः

नाद्येश्वरसंहितायाः श्रुता सा सत्कथा शुभा। साध्यसाधनखंडाख्या रम्याद्या भक्तवत्सला ॥ ६ ॥
त सूत महाभाग चिरञ्जीव सुखी भव। यच्छ्रावयसि नस्तात शांकरीं परमां कथाम् ॥ ७ ॥
वन्तस्त्वन्मुखाम्भोजच्युतं ज्ञानामृतं वयम्। अवितृप्ताः पुनः किंचित्प्रष्टुमिच्छामहेऽनघ ॥ ८ ॥
ासप्रसादात्सर्वज्ञ प्राप्तोऽसि कृतकृत्यताम्। नाज्ञातं विद्यते किंचिद्भूतं भव्यं भवच्च यत् ॥ ९ ॥
रोर्व्यासस्य सद्भक्त्या समासाद्य कृपां पराम्। सर्वं ज्ञातं विशेषेण सर्वं सार्थं कृतं जनुः ॥ १० ॥
दानीं कथय प्राज्ञ शिवरूपमनुत्तमम्। दिव्यानि वै चरित्राणि शिवयोरप्यशेषतः ॥ ११ ॥

अगुणो गुणतां याति कथं लोके महेश्वरः। शिवतत्त्वं वयं सर्वे न जानीमो विचारतः
सृष्टेः पूर्वं कथं शंभुः स्वरूपेणावतिष्ठते। सृष्टिमध्ये स हि कथं क्रीडन्संवर्त्तते प्रभुः
तदन्ते च कथं देवः स तिष्ठति महेश्वरः। कथं प्रसन्नतां याति शंकरो लोकशंकरः
स प्रसन्नो महेशानः किं प्रयच्छति सत्फलम्। स्वभक्तेभ्यः परेभ्यश्च तत्सर्वं कथयस्व नः
सद्यः प्रसन्नो भगवान्भवतीत्यनुशुश्रुम। भक्तप्रयासं स महान्न पश्यति दयापरः
ब्रह्मा विष्णुर्महेशश्च त्रयो देवाश्शिवांगजाः। महेशस्तत्र पूर्णांशः स्वयमेव शिवोऽपरः हि
तस्याविर्भावमाख्याहि चरितानि विशेषतः। उमाविर्भावमाख्याहि तद्विवाहं तथा प्रभो
तद्गार्हस्थ्यं विशेषेण तथा लीलाः परा अपि। एतत्सर्वं तदन्यच्च कथनीयं त्वयाऽनघ

## व्यास उवाच

इति पृष्टस्तदा तैस्तु सूतो हर्षसमन्वितः। स्मृत्वा शंभुपदांभोजं प्रत्युवाच मुनीश्वरान्

## सूत उवाच

सम्यक् पृष्टं भवद्भिश्च धन्या यूयं मुनीश्वराः। सदाशिवकथायां वो यज्जाता नैष्ठिकी मतिः
सदाशिवकथाप्रश्नः पुरुषांस्त्रीन्पुनाति हि। वक्तारं पृच्छकं श्रोतॄञ्जाह्नवीसलिलं यथा
शंभोर्गुणानुवादात्को विरज्येत पुमान्द्विजाः। विना पशुघ्नं त्रिविधजनानन्दकरात्सदा
गीयमानो वितृष्णैश्च भवरोगौषधोऽपि हि। मनःश्रोत्राभिरामश्च यतः सर्वार्थदः स वै
कथयामि यथाबुद्धि भवत्प्रश्नानुसारतः। शिवलीलां प्रयत्नेन द्विजास्तां शृणुतादरात्
भवद्भिः पृच्छ्यते यद्वत्तत्तथा नारदेन वै। पृष्टं पित्रे प्रेरितेन हरिणा शिवरूपिणा
ब्रह्मा श्रुत्वा सुतवचः शिवभक्तः प्रसन्नधीः। जगौ शिवयशः प्रीत्या हर्षयन्मुनिसत्तमम्

## सूत उवाच

सूतोक्तमिति तद्वाक्यमाकर्ण्य द्विजसत्तमाः। पप्रच्छुस्तत्सुसंवादं कुतूहलसमन्विताः

## ऋषय ऊचुः

सूत सूत महाभाग शैवोत्तम महामते। श्रुत्वा तव वचो रम्यं चेतो नः सकुतूहलम्
कदा बभूव सुखकृद्विधिनारदयोर्महान्। संवादो यत्र गिरिशसुलीला भवमोचनी
विधिनारदसंवादपूर्वकं शांकरं यशः। ब्रूहि नस्तात तत्प्रीत्या तत्तत्प्रश्नानुसारतः
इत्याकर्ण्य वचस्तेषां मुनीनां भावितात्मनाम्। सूतः प्रोवाच सुप्रीतस्तत्संवादानुसारतः

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने मुनिप्रश्नवर्णनो नाम प्रथमोऽध्यायः ॥ १ ॥

# अथ द्वितीयोऽध्यायः

## ( नारदतपोनाशाय इन्द्रेण कामदेवप्रेषणम् )

### सूत उवाच

एकस्मिन्समये विप्रा नारदो मुनिसत्तमः। ब्रह्मपुत्रो विनीतात्मा तपोर्थं मन आदधे ॥ १ ॥
हिमशैलगुहा काचिदेका परमशोभना। यत्समीपे सुरनदी सदा वहति वेगतः ॥ २ ॥
त्राश्रमो महादिव्यो नानाशोभासमन्वितः। तपोर्थं स ययौ तत्र नारदो दिव्यदर्शनः ॥ ३ ॥
तं दृष्ट्वा मुनिशार्दूलस्तेपे स सुचिरं तपः। बद्ध्वासनं दृढं मौनी प्राणानायम्य शुद्धधीः ॥ ४ ॥
वक्रे मुनिः समाधिं तमहंब्रह्मेति यत्र ह। विज्ञानं भवति ब्रह्मसाक्षात्कारकरं द्विजाः ॥ ५ ॥
इत्थं तपति तस्मिन्वै नारदे मुनिसत्तमे। चकंपेऽथ शुनासीरो मनःसंतापविह्वलः ॥ ६ ॥
मनसीति विचिंत्यासौ मुनिर्मे राज्यमिच्छति। तद्विघ्नकरणार्थं हि हरिर्यत्नमियेष सः ॥ ७ ॥
स्मार स स्मरं शक्रश्चेतसा देवनायकः। आजगाम द्रुतं कामः समधीर्महिषीसुतः ॥ ८ ॥
अथागतं स्मरं दृष्ट्वा संबोध्य सुरराट् प्रभुः। उवाच तं प्रपश्याशु स्वार्थे कुटिलशेमुषिः ॥ ९ ॥

### इन्द्र उवाच

मित्रवर्य्य महावीर सर्वदा हितकारक। शृणु प्रीत्या वचो मे त्वं कुरु साहाय्यमात्मना १०॥
वद्बलान्मे बहूनाञ्च तपोगर्वो विनाशितः। मद्राज्यस्थिरता मित्र त्वदनुग्रहतः सदा ॥११॥
हिमशैलगुहायां हि मुनिस्तपति नारदः। मनसोद्दिश्य विश्वेशं महासंयमवान्दृढः ॥१२॥
याचेन्न विधितो राज्यं स ममेति विशंकितः। अद्यैव गच्छ तत्र त्वं तत्तपोविघ्नमाचर ॥१३॥
इत्याज्ञप्तो महेन्द्रण स कामः समधुप्रियः। जगाम तत्स्थलं गर्वादुपायं स्वञ्चकार ह ॥१४॥
रचयामास तत्राशु स्वकलाः सकला अपि। वसंतोऽपि स्वप्रभावं चकार विविधं मदात् ॥१५॥
न बभूव मुनेश्चेतो विकृतं मुनिसत्तमाः। भ्रष्टो बभूव तद्गर्वो महेशानुग्रहेण ह ॥१६॥
शृणुतादरतस्तत्र कारणं शौनकादयः। ईश्वरानुग्रहेणात्र न प्रभावः स्मरस्य हि ॥१७॥
तत्रैव शम्भुनाऽकारि सुतपश्च स्मरारिणा। अत्रैव दग्धस्तेनाशु कामो मुनितपोपहः ॥१८॥
कामजीवनहेतोर्हि रत्या संप्रार्थितैः सुरैः। सम्प्रार्थित उवाचेदं शंकरो लोकशंकरः ॥१९॥
कंचित्समयमासाद्य जीविष्यति सुराः स्मरः। परंत्विह स्मरोपायश्चलिष्यति न कश्चन ॥२०॥
इह यावद्दृश्यते भूर्जनैः स्थित्वाऽमराः सदा। कामबाणप्रभावोऽत्र न चलिष्यत्यसंशयम् ॥२१॥
इति शंभूक्तितः कामो मिथ्यात्मगतिकस्तदा। नारदे स जगामाशु शिवमिन्द्रसमीपतः ॥२२॥
आचख्यौ सर्ववृत्तांतं प्रभावं च मुनेः स्मरः। तदाज्ञया ययौ स्थानं स्वकीयं स मधुप्रियः २३॥

विस्मितोऽभूत्सुराधीशः प्रशशंसाथ नारदम्। तद्वृत्तांतानभिज्ञो हि मोहितश्शिवमायया
दुर्ज्ञेया शांभवी माया सर्वेषां प्राणिनामिह। भक्तं विनार्पितात्मानं तया संमोह्यते जगत्
नारदोऽपि चिरं तस्थौ तत्रेशानुग्रहेण ह। पूर्णं मत्वा तपस्तत्स्वं विरराम ततो मुनिः
कामाजयं निजं मत्वा गर्वितोऽभून्मुनीश्वरः। वृथैव विगतज्ञानः शिवमायाविमोहितः
धन्या धन्या महामाया शांभवी मुनिसत्तमाः। तद्गतिं न हि पश्यंति विष्णुब्रह्मादयोपि हि
तया संमोहितोऽतीव नारदो मुनिसत्तमः। कैलासं प्रययौ शीघ्रं स्ववृत्तं गदितुं मदात्
रुद्रं नत्वाऽब्रवीत्सर्वं स्ववृत्तज्ञर्ववान्मुनिः। मत्वात्मानं महात्मानं स्वप्रभुञ्च स्मरञ्जयम्
तच्छ्रुत्वा शंकरः प्राह नारदं भक्तवत्सलः। स्वमायामोहितं हेत्वनभिज्ञं भ्रष्टचेतसम्

## रुद्र उवाच

हे तात नारद प्राज्ञ धन्यस्त्वं शृणु मद्वचः। वाच्यमेवं न कुत्रापि हरेरग्रे विशेषतः
पृच्छमानोऽपि न ब्रूयाः स्ववृत्तं मे यदुक्तवान्। गोप्यं गोप्यं सर्वथा हि नैव वाच्यं कदाचन
शास्म्यहं त्वां विशेषेण मम प्रियतमो भवान्। विष्णुभक्तो यतस्त्वं हि तद्भक्तोऽतीव मे
शास्ति स्मेत्थञ्च बहुशो रुद्रः सूतिकरः प्रभुः। नारदो न हितं मेने शिवमायाविमोहितः
प्रबला भाविनी कर्मगतिर्ज्ञेया विचक्षणैः। न निवार्या जनैः कैश्चिदपीच्छा सैव शांकरी
ततः स मुनिवर्यो हि ब्रह्मलोकं जगाम ह। विधिं नत्वाऽब्रवीत्कामजयं स्वस्य तपोबलात्
तदाकर्ण्य विधिः सोऽथ स्मृत्वा शंभुपदाम्बुजम्। ज्ञात्वा सर्वं कारणं तन्निषिषेध सुतं तदा
मेने हितं न विध्युक्तं नारदो ज्ञानिसत्तमः। शिवमायामोहितश्च रूढचित्तमदांकुरः
शिवेच्छा यादृशी लोके भवत्येव हि सा तदा। तदधीनं जगत्सर्वं वचस्तंत्यां स्थितं यतः
नारदोऽथ ययौ शीघ्रं विष्णुलोकं विनष्टधीः। मदांकुरमना वृत्तं गदितुं स्वं तदग्रतः
आगच्छंतं मुनिं दृष्ट्वा नारदं विष्णुरादरात्। उत्थित्वाग्रे गतोऽरं तं शिश्लेष ज्ञातहेतुकः
स्वासने समुपावेश्य स्मृत्वा शिवपदाम्बुजम्। हरिः प्राह वचस्तथ्यं नारदं मदनाशनम्

## विष्णुरुवाच

कुत आगम्यते तात किमर्थमिह चागतः। धन्यस्त्वं मुनिशार्दूल तीर्थोऽहं तु तवागमात्
विष्णुवाक्यमिति श्रुत्वा नारदो गर्वितो मुनिः। स्ववृत्तं सर्वमाचष्ट समदं मदमोहितः
श्रुत्वा मुनिवचो विष्णुः समदं कारणं ततः। ज्ञातवानखिलं स्मृत्वा शिवपादांबुजं हृदि
तुष्टाव गिरिशं भक्त्या शिवात्मा शैवराड्ढरिः। सांजलिर्विबुधीर्नम्रमस्तकः परमेश्वरम्

## विष्णुरुवाच

देव देव महादेव प्रसीद परमेश्वर। धन्यस्त्वं शिव धन्या ते माया सर्वविमोहिनी

त्यादि स स्तुतिं कृत्वा शिवस्य परमात्मनः। निमील्य नयने ध्यात्वा विरराम पदाम्बुजम् ४९॥
कर्त्तव्यं शंकरस्य स ज्ञात्वा विश्वपालकः। शिवशासनतः प्राह हृदाऽथ मुनिसत्तमम् ॥५०॥

विष्णुरुवाच

न्यस्त्वं मुनिशार्दूल तपोनिधिरुदारधीः। भक्तित्रिकं न यस्यास्ति काममोहादयो मुने ५१॥
कारास्तस्य सद्यो वै भवंत्यखिलदुःखदाः। नैष्ठिको ब्रह्मचारी त्वं ज्ञानवैराग्यवान्सदा ॥५२॥
थं कामविकारी स्या जन्मनाविकृतःसुधीः। इत्याद्युक्तं वचो भूरि श्रुत्वा स मुनिसत्तमः ॥५३॥
विजहास हृदा नत्वा प्रत्युवाच वचो हरिम्।

नारद उवाच

किंप्रभावः स्मरः स्वामिन्कृपा यद्यस्ति ते मयि ॥५४॥
इत्युक्त्वा हरिमानम्य ययौ यादृच्छिको मुनिः ॥५५॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखण्डे सृष्ट्युपाख्याने
नारदतपोवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः

( नारदस्य कन्यास्वयम्वरे गमनं तत्र तस्य पराभवः )

ऋषय ऊचुः

सूत महाभाग व्यासशिष्य नमोऽस्तु ते। अद्भुतेयं कथा तात वर्णिता कृपया हि नः ॥ १ ॥
नौ गते हरिस्तात किं चकार ततः परम्। नारदोऽपि गतः कुत्र तन्मे व्याख्यातुमर्हसि॥ २ ॥

व्यास उवाच

याकर्ण्य वचस्तेषां सूतः पौराणिकोत्तमः। प्रत्युवाच शिवं स्मृत्वा नानासूतिकरं बुधः ॥ ३ ॥

सूत उवाच

यदृच्छया विष्णुर्गते तस्मिन्हि नारदे। शिवेच्छया चकाराशु मायां मायाविशारदः॥ ४ ॥
मार्गस्य मध्ये तु विरेचे नगरं महत्। शतयोजनविस्तारमद्भुतं सुमनोहरम् ॥ ५ ॥
लोकादधिकं रम्यं नानावस्तुविराजितम्। नरनारीविहाराढ्यं चतुर्वर्णाकुलं परम् ॥ ६ ॥
राजा शीलनिधिर्नामैश्वर्यसमन्वितः। सुतास्वयम्वरोद्युक्तो महोत्सवसमन्वितः ॥ ७ ॥
दिग्भ्यः समायातैः संयुतं नृपनन्दनैः। नानावेषैः सुशोभैश्च तत्कन्यावरणोत्सुकैः ॥ ८ ॥
दृशं पुरं दृष्ट्वा मोहं प्राप्तोऽथ नारदः। कौतुकी तन्नृपद्वारं जगाम मदनैधितः ॥ ९ ॥
गतं मुनिवर्यं तं दृष्ट्वा शीलनिधिर्नृपः। उपवेश्यार्चयांचक्रे रत्नसिंहासने वरे ॥१०॥

अथ राजा स्वतनयां नामतः श्रीमतीं वराम्। समानीय नारदस्य पादयोः समपातय
तत्कन्यां प्रेक्ष्य स मुनिर्नारदः प्राह विस्मितः। केयं राजन्महाभागा कन्या सुरसुतोप
तस्य तद्वचनं श्रुत्वा राजा प्राह कृतांजलिः। दुहितेयं मम मुने श्रीमती नाम नाम
प्रदानसमयं प्राप्ता वरमन्वेषती शुभम्। सा स्वयम्वरसंप्राप्ता सर्वलक्षणलक्षि
अस्या भाग्यं वद मुने सर्वं जातकमादरात्। कीदृशं तनयेयं मे वरमाप्स्यति तद्व
इत्युक्तो मुनिशार्दूलस्तामिच्छुः कामविह्वलः। समाभाष्य स राजानं नारदो वाक्यमब्रवी
सुतेयं तव भूपाल सर्वलक्षणलक्षिता। महाभाग्यवती धन्या लक्ष्मीरिव गुणाल
सर्वेश्वरोऽजितो वीरो गिरीशसदृशो विभुः। अस्याः पतिर्ध्रुवं भावी कामजित्सुरसत्त
इत्युक्त्वा नृपमामंत्र्य ययौ यादृच्छिको मुनिः। बभूव कामविवशः शिवमायाविमोहि
चित्ते विचिन्त्य स मुनिराप्नुयां कथमेनकाम्। स्वयम्वरे नृपाणामेकं मां वृणुयात्क
सौन्दर्यं सर्वनारीणां प्रियं भवति सर्वथा। तद्दृष्ट्वैव प्रसन्ना सा स्ववशा नात्र संश
विधायेत्थं विष्णुरूपं ग्रहीतुं मुनिसत्तमः। विष्णुलोकं जगामाशु नारदः स्मरविह्व
प्रणिपत्य हृषीकेशं वाक्यमेतदुवाच ह। रहसि त्वां प्रवक्ष्यामि स्ववृत्तांतमशेष
तथेत्युक्ते तथाभूते शिवेच्छाकार्यकर्तरि। ब्रूहीत्युक्तवति श्रीशे मुनिराह च केशव

## नारद उवाच

त्वदीयो भूपतिः शीलनिधिः स वृषतत्परः। तस्य कन्या विशालाक्षी श्रीमती वरवर्णि
जगन्मोहिन्यभिख्या च त्रैलोक्येऽप्यतिसुन्दरी। परिणेतुमहं विष्णो तामिच्छाम्यद्य मा
स्वयंवरं चकारासौ भूपतिस्तनयेच्छया। चतुर्दिग्भ्यः समायाता राजपुत्राः सहस्र
यदि दास्यसि रूपं मे तदा तां प्राप्नुयां ध्रुवम्। त्वद्रूपं सा विना कंठे जयमालां न धार
स्वरूपं देहि मे नाथ सेवकोऽहं प्रियस्तव। वृणुयान्मां यथा सा वै श्रीमती क्षितिपात्म

## सूत उवाच

वचः श्रुत्वा मुनेरित्थं विहस्य मधुसूदनः। शांकरीं प्रभुतां बुद्ध्वा प्रत्युवाच दयाप

## विष्णुरुवाच

स्वेष्टदेशं मुने गच्छ करिष्यामि हितं तव। भिषग्वरो यथार्त्तस्य यतः प्रियतरोऽसि
इत्युक्त्वा मुनये तस्मै ददौ विष्णुर्मुखं हरेः। स्वरूपमनुगृह्यास्य तिरोधानं जगाम
एवमुक्तो मुनिर्हृष्टः स्वरूपं प्राप्य वै हरेः। मेने कृतार्थमात्मानं तद्यत्नं न बुबोध
अथ तत्र गतः शीघ्रं नारदो मुनिसत्तमः। चक्रे स्वयम्वरं यत्र राजपुत्रैः समाकुल
स्वयम्वरसभा दिव्या राजपुत्रसमावृता। शुशुभेऽतीव विप्रेन्द्रा यथा शक्रसभाऽ

स्यां नृपसभायां वै नारदः समुपाविशत्। स्थित्वा तत्र विचिन्त्येति प्रीतियुक्तेन चेतसा ॥
वरिष्यति नान्यं सा विष्णुरूपधरं ध्रुवम्। आननस्य कुरूपत्वं न वेद मुनिसत्तमः ॥३७॥
र्वरूपं मुनिं सर्वे ददृशुस्तत्र मानवाः। तद्भेदं बुबुधुस्ते न राजपुत्रादयो द्विजाः ॥३८॥
त्र रुद्रगणौ द्वौ तद्रक्षणार्थं समागतौ। विप्ररूपधरौ गूढौ तद्भेदं जज्ञतुः परम् ॥३९॥
ढं मत्वा मुनिं तौ तन्निकटं जग्मतुर्गणौ। कुरुतस्तत्प्रहासं वै भाषमाणौ परस्परम् ॥४०॥
य नारदरूपं हि विष्णोरिव महोत्तमम्। मुखं तु वानरस्येव विकटं च भयंकरम् ॥४१॥
छत्ययं नृपसुतां वृथैव स्मरमोहितः। इत्युक्त्वा सच्छलं वाक्यमुपहासं प्रचक्रतुः ॥४२॥
शुश्राव यथार्थं तु तद्वाक्यं स्मरविह्वलः। पर्यैक्षच्छ्रीमतीं तां वै तल्लिप्सुर्मोहितो मुनिः ॥४३॥
स्मिन्नंतरे भूपकन्या चांतःपुरात्तु सा। स्त्रीभिः समावृता तत्राजगाम वरवर्णिनी ॥४४॥
लां हिरण्मयीं रम्यामादाय शुभलक्षणा। तत्र स्वयम्वरे रेजे स्थिता मध्ये रमेव सा ॥४५॥
ाम सा सभां सर्वां मालामादाय सुव्रता। वरमन्वेषती तत्र स्वात्माभीष्टं नृपात्मजा ॥४६॥
नरास्यं विष्णुतनुं मुनिं दृष्ट्वा चुकोप सा। दृष्टिं निवार्य च ततः प्रस्थिता प्रीतमानसा ॥४७॥
दृष्ट्वा स्ववरं तत्र त्रस्तासीन्मनसेप्सितम्। अंतः सभा स्थिता कस्मिन्नर्पयामास न स्रजम् ॥४८॥
स्मिन्नंतरे विष्णुराजगाम नृपाकृतिः। न दृष्टः कैश्चिदपरैः केवलं सा ददर्श हि ॥४९॥
सा तं समालोक्य प्रसन्नवदनाम्बुजा। अर्पयामास तत्कंठे तां मालां वरवर्णिनी ॥५०॥
मादाय ततो विष्णू राजरूपधरः प्रभुः। अंतर्धानमगात्सद्यः स्वस्थानं प्रययौ किल ॥५१॥
राजकुमाराश्च निराशाः श्रीमतीं प्रति। मुनिस्तु विह्वलोऽतीव बभूव मदनातुरः ॥५२॥
तावूचतुः सद्यो नारदं स्मरविह्वलम्। विप्ररूपधरौ रुद्रगणौ ज्ञानविशारदौ ॥५३॥

**गणावूचतुः**

ारद मुने त्वं हि वृथा मदनमोहितः। तल्लिप्सुः स्वमुखं पश्य वानरस्येव गर्हितम् ॥५४॥

**सूत उवाच**

ाकर्ण्य तयोर्वाक्यं नारदो विस्मितोऽभवत्। मुखं ददर्श मुकुरे शिवमायाविमोहितः ॥५५॥
ुखं वानरस्येव दृष्ट्वा चुक्रोध सत्वरम्। शापं ददौ तयोस्तत्र गणयोर्मोहितो मुनिः ॥५६॥
ं ममोपहासं वै चक्रतुर्ब्राह्मणस्य हि। भवेतां राक्षसौ विप्रवीर्यजौ वै तदाकृती ॥५७॥
हरगणावित्थं स्वशापं ज्ञानिसत्तमौ। न किंचिदूचतुस्तौ हि मुनिमाज्ञाय मोहितम् ॥५८॥
थानं जग्मतुर्विप्रा उदासीनौ शिवस्तुतिम्। चक्रतुर्मन्यमानौ वै शिवेच्छां सकलां तदा ॥५९॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखडे सृष्ट्युपाख्याने नारदमोहनवर्णनो नाम तृतीयोऽध्यायः ॥ ३ ॥

# अथ चतुर्थोऽध्यायः

## ( नारदस्य वैकुण्ठगमनं तत्र तस्य विष्णवे शापदानम् )

### ऋषय ऊचुः

सूत सूत महाप्राज्ञ वर्णिता ह्यद्भुता कथा। धन्या तु शांभवी माया तदधीनं चराचरम्
गतयोर्गणयोः शंभोःस्वयमात्मेच्छया विभोः। किं चकार मुनिः क्रुद्धो नारदः स्मरविह्वल

### सूत उवाच

विमोहितो मुनिर्दत्त्वा तयोः शापं यथोचितम्। जले मुखं निरीक्ष्याथ स्वरूपं गिरिशेच्छया
शिवेच्छया न प्रबुद्धः स्मृत्वा हरिकृतच्छलम्। क्रोधं दुर्विषहं कृत्वा विष्णुलोकं जगाम ह
उवाच वचनं क्रुद्धः समिद्ध इव पावकः। दुरुक्तिगर्भितं व्यङ्गं नष्टज्ञानः शिवेच्छया

### नारद उवाच

हे हरे त्वं महादुष्टः कपटी विश्वमोहनः। परोत्साहं न सहसे मायावी मलिनाशयः
मोहिनीरूपमादाय कपटं कृतवान्पुरा। असुरेभ्योऽपाययस्त्वं वारुणीममृतं न हि
चेत्पिबेन्न विषं रुद्रो दयां कृत्वा महेश्वरः। भवेन्नष्टाऽखिला माया तव व्याजरते हरे
गतिः सकपटा तेऽतिप्रिया विष्णो विशेषतः। साधुस्वभावो न भवान्स्वतंत्रः प्रभुणा कृतः
कृतं समुचितन्नैव शिवेन परमात्मना। तत्प्रभावबलं ध्यात्वा स्वतंत्रकृतिकारकः
त्वद्गतिं सुसमाज्ञाय पश्चात्तापमवाप सः। विप्रं सर्वोपरि प्राह स्वोक्तवेदप्रमाणकृत्
तज्ज्ञात्वाहं हरे त्वाद्य शिक्षयिष्यामि तद्बलात्। यथा न कुर्याः कुत्रापीदृशं कर्म कदाचन
अद्यापि निर्भयस्त्वं हि संगं नाप्तस्तरस्विना। इदानीं लप्स्यसे विष्णो फलं स्वकृतकर्मणः
इत्थमुक्त्वा हरिं सोऽथ मुनिर्मायाविमोहितः। शशाप क्रोधनिर्विण्णो ब्रह्मतेजः प्रदर्शयन्
स्त्रीकृते व्याकुलं विष्णो मामकार्षीर्विमोहकः। अन्वकार्षीः स्वरूपेण येन कापट्यकार्यकृत्
तद्रूपेण मनुष्यस्त्वं भव तद्दुःखभुग्घरे। यन्मुखं कृतवान्मे त्वं ते भवंतु सहायिनः
त्वं स्त्रीवियोगजं दुःखं लभस्व परदुःखद। मनुष्यगतिकः प्रायो भवाज्ञानविमोहितः
इति शप्त्वा हरिं मोहान्नारदोऽज्ञानमोहितः। विष्णुर्जग्राह तं शापं प्रशंसञ्शांभवीमजाम्
अथ शंभुर्महालीलो निश्चकर्ष विमोहिनीम्। स्वमायां मोहितो ज्ञानी नारदोऽप्यभवद्यया
अंतर्हितायां मायायां पूर्ववन्मतिमानभूत्। नारदो विस्मितमनाः प्राप्तबोधो निराकुलः
पश्चात्तापमवाप्याति निनिन्द स्वं मुहुर्मुहुः। प्रशशंस तदा मायां शांभवीं ज्ञानिमोहिनीम्

अथ ज्ञात्वा मुनिः सर्वं मायाविभ्रममात्मनः। अपतत्पादयोर्विष्णोर्नारदो वैष्णवोत्तमः ॥२२॥
इत्युपस्थापितः प्राह वचनं नष्टदुर्मतिः। मया दुरुक्तयः प्रोक्ता मोहितेन कुबुद्धिना ॥२३॥
दत्तः शापोऽपि ते नाथ वितथं कुरु तं प्रभो। महत्पापमकार्षं हि यास्यामि निरयं ध्रुवम् ॥२४॥
कमुपायं हरे कुर्यां दासोऽहं ते तमादिश। येन पापकुलं नश्येन्निरयो न भवेन्मम ॥२५॥
इत्युक्त्वा स पुनर्विष्णोः पादयोर्मुनिसत्तमः। पपात सुमतिर्भक्त्या पश्चात्तापमुपागतः ॥२६॥
अथ विष्णुस्तमुत्थाप्य बभाषे सूनृतं वचः

विष्णुरुवाच

न खेदं कुरु मे भक्तवरस्त्वं नात्र संशयः ॥२७॥
शृणु तात प्रवक्ष्यामि सुहितं तव निश्चयात्। निरयस्ते न भविता शिवः शं ते विधास्यति ॥२८॥
यदकार्षीः शिववचो वितथं मदमोहितः। स दत्तवानीदृशं ते फलं कर्मफलप्रदः ॥२९॥
शिवेच्छयाऽखिलं जातं कुर्वित्थं निश्चितां मतिम्। गर्वापहर्ता स स्वामी शंकरः परमेश्वरः ॥३०॥
परं ब्रह्म परात्मा स सच्चिदानंदबोधनः। निर्गुणो निर्विकारी च रजःसत्त्वतमःपरः ॥३१॥
स एवादाय मायां स्वां त्रिधा भवति रूपतः। ब्रह्मविष्णुमहेशात्मा निर्गुणोऽनिर्गुणोऽपि सः ॥३२॥
निर्गुणत्वे शिवाह्वो हि परमात्मा महेश्वरः। परं ब्रह्माव्ययोऽनंतो महादेवेति गीयते ॥३३॥
तत्सेवया विधिः स्रष्टा पालको जगतामहम्। स्वयं सर्वस्य संहारी रुद्ररूपेण सर्वदा ॥३४॥
साक्षी शिवस्वरूपेण मायाभिन्नः स निर्गुणः। स्वेच्छाचारी संविहारी भक्तानुग्रहकारकः ॥३५॥
शृणु त्वं नारद मुने सदुपायं सुखप्रदम्। सर्वपापापहर्त्तारं भुक्तिमुक्तिप्रदं सदा ॥३६॥
त्यक्त्वा स्वसंशयं सर्वं गायन् शंकरसद्यशः। शतं नाम शिवस्तोत्रं सदानन्यमतिर्जप ॥३७॥
यज्जपित्वा द्रुतं सर्वं तव पापं विनश्यति। इत्युक्त्वा नारदं विष्णुः पुनः प्राह दयान्वितः ॥३८॥
मुने न कुरु शोकं त्वं त्वया किंचित्कृतं न हि। स्वेच्छया कृतवाञ्छंभुरिदं सर्वं न संशयः ॥३९॥
अकार्षीत्त्वन्मतिं दिव्यां कामक्लेशमदात्स ते। त्वन्मुखाद्दापयांचक्रे शापं मे स महेश्वरः ॥४०॥
इत्थं स्वचरितं लोके प्रकटीकृतवान् स्वयम्। मृत्युंजयः कालकालो भक्तोद्धारपरायणः ॥४१॥
न शिवसमानोऽस्ति प्रियः स्वामी सुखप्रदः। सर्वशक्तिप्रदो मेऽस्ति स एव परमेश्वरः ॥४२॥
तस्योपास्यां कुरु मुने तमेव सततं भज। तद्यशः शृणु गाय त्वं कुरु नित्यं तदर्चनम् ॥४३॥
कायेन मनसा वाचा यः शंकरमुपैति भोः। स पण्डित इति ज्ञेयः स जीवन्मुक्त उच्यते ॥४४॥
शिवेति नामदावाग्नेर्महापातकपर्वताः। भस्मीभवन्त्यनायासात्सत्यं सत्यं न संशयः ॥४५॥
पापमूलानि दुःखानि विविधान्यपि तान्यतः। शिवार्चनैकनश्यानि नान्यनश्यानि सर्वथा ॥४६॥
स वैदिकः स पुण्यात्मा स धन्यः स बुधो मुने। यः सदा कायवाक्चित्तैः शरणं याति शंकरम् ॥४७॥

भवंति विविधा धर्मा येषां सद्यः फलोन्मुखाः। तेषां भवति विश्वासस्त्रिपुरांतकपूजने
पातकानि विनश्यंति यावंति शिवपूजया। भुवि तावंति पापानि न संत्येव महामुने
ब्रह्महत्यादिपापानां राशयोऽप्यमिता मुने। शिवस्मृत्या विनश्यंति सत्यं सत्यं वदाम्यहम्
शिवनामतरीं प्राप्य संसाराब्धिं तरंति ते। संसारमूलपापानि तस्य नश्यंत्यसंशयम्
संसारमूलभूतानां पातकानां महामुने। शिवनामकुठारेण विनाशो जायते ध्रुवम्
शिवनामामृतं पेयं पापदावानलार्दितैः। पापदावाग्नितप्तानां शांतिस्तेन विना न हि
शिवेति नामपीयूषवर्षधारापरिप्लुताः । संसारदवमध्येऽपि न शोचंति न संशयः
न भक्तिः शंकरे पुंसां रागद्वेषरतात्मनाम्। तद्विधानां हि सहसा मुक्तिर्भवति सर्वथा
अनंतजन्मभिर्येन तपस्तप्तं भविष्यति। तस्यैव भक्तिर्भवति भवानीप्राणवल्लभे
जातापि शंकरे भक्तिरन्यसाधारणी वृथा। परंत्वव्यभिचारेण शिवभक्तिरपेक्षिता
यस्यासाधारणी शंभौ भक्तिरव्यभिचारिणी। तस्यैव मोक्षः सुलभो नान्यस्येति मतिर्मम
कृत्वाप्यनंतपापानि यदि भक्तिर्महेश्वरे। सर्वपापविनिर्मुक्तो भवत्येव न संशयः
भवति भस्मसाद्वृक्षा दवदग्धा यथा वने। तथा भवंति दग्धानि शांकराणामघान्य
यो नित्यं भस्मपूतांगो शिवपूजोन्मुखो भवेत्। स तरत्येव संसारमपारमतिदारुणम्
ब्रह्मस्वहरणं कृत्वा हत्वापि ब्राह्मणान्बहून्। न लिप्यते नरः पापैर्विरूपाक्षस्य सेवया
विलोक्य वेदानखिलाञ्छिवस्यैवार्चनं परम्। संसारनाशनोपाय इति पूर्वैर्विनिश्चितम्
अद्यप्रभृति यत्नेन सावधानो यथाविधि। साम्बं सदाशिवं भक्त्या भज नित्यं महेश्वरम्
आपादमस्तकं सम्यग् भस्मनोद्धूल्य सादरम्। सर्वश्रुतिश्रुतं शैवम्मंत्रञ्जप षडक्षरम्
सर्वाङ्गेषु प्रयत्नेन रुद्राक्षाञ्छिववल्लभान्। धारयस्वातिसद्भक्त्या समन्त्रं विधिपूर्वकम्
शृणु शैवीं कथां नित्यं वद शैवीं कथां सदा। पूजयस्वातियत्नेन शिवभक्तान्पुनः पुनः
अप्रमादेन सततं शिवैकशरणो भव। शिवार्चनेन सततमानन्दः प्राप्यते यतः
उरस्याधाय विशदे शिवस्य चरणाम्बुजौ। शिवतीर्थानि विचर प्रथमं मुनिसत्तम
पश्यन्माहात्म्यमतुलं शंकरस्य परात्मनः। गच्छानन्दवनं पश्चाच्छंभुप्रियतमं मुने
तत्र विश्वेश्वरं दृष्ट्वा पूजनं कुरु भक्तितः। नत्वा स्तुत्वा विशेषेण निर्विकल्पो भविष्यसि
ततश्च भवता नूनं विधेयं गमनं मुने। ब्रह्मलोके स्वकामार्थं शासनान्मम भक्तितः
नत्वा स्तुत्वा विशेषेण विधिं स्वजनकं मुने। प्रष्टव्यं शिवमाहात्म्यं बहुशः प्रीतचेतसा
स शैवप्रवरो ब्रह्मा माहात्म्यं शंकरस्य ते। श्रावयिष्यति सुप्रीत्या शतनामस्तवं च
अद्यतस्त्वं भव मुने शैवश्शिवपरायणः। मुक्तिभागी विशेषेण शिवस्ते शं विधास्यति

इत्थं विष्णुर्मुनिं प्रीत्या ह्युपदिश्य प्रसन्नधीः। स्मृत्वा नुत्वा शिवं स्तुत्वा ततस्त्वंतरधीयत ॥७६॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने
नारदस्य विष्णूपदेशवर्णनो नाम चतुर्थोऽध्यायः ॥ ४ ॥

## अथ पंचमोऽध्यायः

### ( नारदस्य काशीक्षेत्रगमनम् )

**सूत उवाच**

ंतर्हिते हरौ विप्रा नारदो मुनिसत्तमः। विचचार महीं पश्यञ्छिवलिंगानि भक्तितः ॥ १ ॥
थिव्या अटनं कृत्वा शिवरूपाण्यनेकशः। ददर्श प्रीतितो विप्रा भुक्तिमुक्तिप्रदानि सः २ ॥
थ तं विचरंतं कौ नारदं दिव्यदर्शनम्। ज्ञात्वा शंभुगणौ तौ तु सुचित्तमुपजग्मतुः ॥ ३ ॥
रसा सुप्रणम्याशु गणावूचतुरादरात्। गृहीत्वा चरणौ तस्य शापोद्धारेच्छया च तौ ४ ॥

**शिवगणावूचतुः**

पुत्र सुरर्षे हि शृणु प्रीत्याऽऽवयोर्वचः। तवापराधकर्तारावावां विप्रौ न वस्तुतः ॥ ५ ॥
वां हरगणौ विप्र तवागस्कारिणौ मुने। स्वयंवरे राजपुत्र्या मायामोहितचेतसा ॥ ६ ॥
या दत्तश्च नौ शापः परेशप्रेरितेन ह। ज्ञात्वा कुसमयं तत्र मौनमेव हि जीवनम् ॥ ७ ॥
कर्मणः फलं प्राप्तं कस्यापि न हि दूषणम्। सुप्रसन्नो भव विभो कुर्वनुग्रहमद्य नौ ॥८॥

**सूत उवाच**

आकर्ण्य गणयोरिति भक्त्युक्तमादरात्। प्रत्युवाच मुनिः प्रीत्या पश्चात्तापमवाप्य सः ९ ॥

**नारद उवाच**

तं मे महादेवगणौ मान्यतमौ सताम्। वचनं सुखदं मोहनिर्मुक्तं च यथार्थकम् ॥१०॥
मम मतिर्भ्रष्टासीच्छिवेच्छावशाद् ध्रुवम्। सर्वथा मोहमापन्नः शप्तवान्वां कुशेमुषिः ॥११॥
तं तत्तथा भावि तथापि शृणुतां गणौ। शापोद्धारमहं वच्मि क्षमेथामघमद्य मे ॥१२॥
मुनिवरस्याप्त्वा राक्षसेशत्वमादिशत्। स्यातां विभवसंयुक्तौ बलिनौ सुप्रतापिनौ ॥१३॥
ह्मांडराजानौ शिवभक्तौ जितेंद्रियौ। शिवापरतनोर्मृत्युं प्राप्य स्वं पदमाप्स्यथः ॥१४॥

**सूत उवाच**

कर्ण्य मुनेर्वाक्यं नारदस्य महात्मनः। उभौ हरगणौ प्रीतौ स्वं पदं जग्मतुर्मुदा ॥१५॥
ोऽपि परं प्रीतो ध्यायञ्छिवमनन्यधीः। विचचार महीं पश्यञ्छिवतीर्थान्यभीक्ष्णशः ॥१६॥
प्राप्याथ स मुनिः सर्वोपरि विराजिताम्। शिवप्रियां शंभुसुखप्रदां शंभुस्वरूपिणीम् ॥१७॥

दृष्ट्वा काशीं कृतार्थोऽभूत्काशीनाथं ददर्श ह। आनर्च परमप्रीत्या परमानन्दसंयुतः
समुदः सेव्य तां काशीं कृतार्थो मुनिसत्तमः। नमन्संवर्णयन्भक्त्या संस्मरन्प्रेमविह्वलः
ब्रह्मलोकं जगामाथ शिवस्मरणसन्मतिः। शिवतत्त्वं विशेषेण ज्ञातुमिच्छुः स नारदः
नत्वा तत्र विधिं भक्त्या स्तुत्वा च विविधैः स्तवैः। पप्रच्छ शिवसत्तत्त्वं शिवसंयुक्तमानसः

नारद उवाच

ब्रह्मन्ब्रह्मस्वरूपज्ञ पितामह जगत्प्रभो। त्वत्प्रसादान्मया सर्वं विष्णोर्माहात्म्यमुत्तमम्
भक्तिमार्गं ज्ञानमार्गं तपोमार्गं सुदुस्तरम्। दानमार्गञ्च तीर्थानां मार्गं च श्रुतवानहम्
न ज्ञातं शिवतत्त्वं च पूजाविधिमतः क्रमात्। चरित्रं विविधं तस्य निवेदय मम प्रभो
निर्गुणोऽपि शिवस्तात सगुणः शंकरः कथम्। शिवतत्त्वं न जानामि मोहितः शिवमायया
सृष्टेः पूर्वं कथं शंभुः स्वरूपेण प्रतिष्ठितः। सृष्टिमध्ये स हि कथं क्रीडन्संवर्तते प्रभुः
तदन्ते च कथं देवः स तिष्ठति महेश्वरः। कथं प्रसन्नतां याति शंकरो लोकशंकरः
संतुष्टश्च स्वभक्तेभ्यः परेभ्यश्च महेश्वरः। किं फलं यच्छति विधे तत्सर्वं कथयस्व
सद्यः प्रसन्नो भगवान्भवतीत्यनुसंश्रुतम्। भक्तप्रयासं स महान्न पश्यति दया[illegible]
ब्रह्मा विष्णुर्महेशश्च त्रयो देवाः शिवांशजाः। महेशस्तत्र पूर्णांशः स्वयमेव शिवः [illegible]
तस्याविर्भावमाख्याहि चरितानि विशेषतः। उमाविर्भावमाख्याहि तद्विवाहं तथा वि[illegible]
तद्गार्हस्थ्यं विशेषेण तथा लीलाः परा अपि। एतत्सर्वं तथान्यच्च कथनीयं त्वयाऽ[illegible]
तदुत्पत्तिं विवाहं च शिवायास्तु विशेषतः। प्रब्रूहि मे प्रजानाथ गुहजन्म तथैव [illegible]
बहुभ्यश्च श्रुतं पूर्वं न तृप्तोऽस्मि जगत्प्रभो। अतस्त्वां शरणं प्राप्तः कृपां कुरु ममो[illegible]
इति श्रुत्वा वचस्तस्य नारदस्यांगजस्य हि। उवाच वचनं तत्र ब्रह्मा लोकपितामहः

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने नारदप्रश्नवर्णनो नाम पञ्चमोऽध्यायः ॥ ५ ॥

## अथ षष्ठोऽध्यायः

(महाप्रलयस्वरूपवर्णनं विष्णोरुत्पत्तिश्च)

ब्रह्मोवाच

भो ब्रह्मन्साधु पृष्टोऽहं त्वया विबुधसत्तम। लोकोपकारिणा नित्यं लोकानां हितकाम्यया
यच्छ्रुत्वा सर्वलोकानां सर्वपापक्षयो भवेत्। तदहं ते प्रवक्ष्यामि शिवतत्त्वमनामयम्
शिवतत्त्वं मया नैव विष्णुनापि यथार्थतः। ज्ञातञ्च परमं रूपमद्भुतं च परेण [illegible]

महाप्रलयकाले च नष्टे स्थावरजंगमे। आसीत्तमोमयं सर्वमनर्कग्रहतारकम् ॥ ४ ॥
अचन्द्रमनहोरात्रमनग्न्यनिलभूजलम् ।अप्रधानं वियच्छून्यमन्यतेजोविवर्जितम् ॥ ५ ॥
अदृष्टत्वादिरहितं शब्दस्पर्शसमुज्झितम्। अव्यक्तगंधरूपं च रसत्यक्तमदिङ्मुखम् ॥ ६ ॥
इत्थं सत्यंधतमसे सूचीभेद्ये निरंतरे। तत्सद्ब्रह्मेति यच्छ्रुत्वा सदेकं प्रतिपद्यते ॥ ७ ॥
इतीदृशं यदा नासीद्यत्तत्सदसदात्मकम्। योगिनोंतर्हिताकाशे यत्पश्यंति निरंतरम् ॥ ८ ॥
अमनोगोचरं वाचां विषयं न कदाचन। अनामरूपवर्णं च न च स्थूलं न यत्कृशम् ॥ ९ ॥
अह्रस्वदीर्घमलघु गुरुत्वपरिवर्जितम्। न यत्रापचयः कश्चित्तथा नोपचयोऽपि च ॥१०॥
अविधत्ते सचकितं यदस्तीति श्रुतिः पुनः। सत्यं ज्ञानमनंतं च परानन्दम्परम्महः ॥११॥
अप्रमेयमनाधारमविकारमनाकृति ।निर्गुणं योगिगम्यञ्च सर्वव्याप्येककारकम् ॥१२॥
निर्विकल्पं निरारंभं निर्मायं निरुपद्रवम्। अद्वितीयमनाद्यन्तमविकाशं चिदात्मकम् ॥१३॥
यस्येत्थं संविकल्पंते संज्ञासंज्ञोक्तितः स्म वै। कियता चैव कालेन द्वितीयेच्छाऽभवत्किल ॥१४॥
अमूर्तेन स्वमूर्तिश्च तेनाकल्पि स्वलीलया। सर्वैश्वर्य गुणोपेता सर्वज्ञानमयी शुभा ॥१५॥
सर्वगा सर्वरूपा च सर्वदृक्सर्वकारिणी। सर्वैकवंद्या सर्वाद्या सर्वदा सर्वसंस्कृतिः ॥१६॥
परिकल्प्येति तां मूर्तिमैश्वरीं शुद्धरूपिणीम् ।
अद्वितीयमनाद्यंतं सर्वाभासं चिदात्मकम्। अंतर्दधे पराख्यं यद्ब्रह्म सर्वगमव्ययम् ॥१७॥
अमूर्तं यत्पराख्यं वै तस्य मूर्तिः सदाशिवः। अर्वाचीना पराचीना ईश्वरं तं जगुर्बुधाः ॥१८॥
शक्तिस्तदैकलेनापि स्वैरं विहरता तनुः। स्वविग्रहात्स्वयं सृष्टा स्वशरीरानपायिनी ॥१९॥
प्रधानं प्रकृतिं तां च मायां गुणवतीं पराम्। बुद्धितत्त्वस्य जननीमाहुर्विकृतिवर्जिताम् ॥२०॥
सा शक्तिरम्बिका प्रोक्ता प्रकृतिः सकलेश्वरी। त्रिदेवजननी नित्या मूलकारणमित्युत ॥२१॥
अस्या अष्टौ भुजाश्चासन्विचित्रवदना शुभा। एका चन्द्रसहस्रस्य वदने भाश्च नित्यशः ॥२२॥
नानाभरणसंयुक्ता नानागतिसमन्विता। नानायुधधरा देवी फुल्लपंकजलोचना ॥२३॥
अचिंत्यतेजसा युक्ता सर्वयोनिः समुद्यता। एकाकिनी यदा माया संयोगाच्चाप्यनेकिका ॥
पुमानीश्वरः स शिवः शंभुरनीश्वरः। शीर्षे मन्दाकिनीधारी भालचन्द्रस्त्रिलोचनः ॥२५॥
पञ्चवक्त्रः प्रसन्नात्मा दशबाहुस्त्रिशूलधृक्। कर्पूरगौरसुसितो भस्मोद्धूलितविग्रहः ॥२६॥
तेन च तया शक्त्या साकं कालस्वरूपिणा। शिवलोकाभिधं क्षेत्रं निर्मितं तेन ब्रह्मणा ॥२७॥
काशिकेत्येतत्प्रोच्यते क्षेत्रमुत्तमम्। परं निर्वाणसंख्यानं सर्वोपरि विराजितम् ॥२८॥
ताभ्यां च रमणाभ्यां च तस्मिन्क्षेत्रे मनोरमे। परमानंदरूपाभ्यां परमानन्दरूपिणी ॥२९॥
प्रलयकालेऽपि न तत्क्षेत्रं कदाचन। विमुक्तं हि शिवाभ्यां यदविमुक्तं ततो विदुः ॥३०॥

अस्यानन्दवनं नाम पुराकारि पिनाकिना। क्षेत्रस्यानंदहेतुत्वादविमुक्तमनंतरम्
अथानन्दवने तस्मिञ्छिवयो रममाणयोः। इच्छेत्यभूत्सुरर्षे हि सृज्यः कोऽप्यपरः किलं
यस्मिन्यस्य महाभारमावां स्वस्वैरचारिणौ। निर्वाणधारणं कुर्वः केवलं काशिशायिनौ
स एव सर्वं कुरुतां स एव परिपातु च। स एव संवृणोत्वंते मदनुग्रहतस्सदा
चेतस्समुद्रमाकुंच्य चिंताकल्लोललोलितम्। सत्त्वरत्नं तमोग्राहं रजोविद्रुमवल्लितम्
यस्य प्रसादात्तिष्ठावः सुखमानन्दकानने। परिक्षिप्तमनोवृत्तौ बहिश्चितातुरे सुखम्
संप्रधार्य्येति स विभुस्तया शक्त्या परेश्वरः। सव्ये व्यापारयांचक्रे दशमेंऽगे सुधासवम्
ततः पुमानाविरासीदेकस्त्रैलोक्यसुंदरः। शांतः सत्त्वगुणोद्रिक्तो गांभीर्य्यामितसागरः
तथा च क्षमया युक्तो मुनेऽलब्धोपमोऽभवत्। इन्द्रनीलद्युतिः श्रीमान्पुण्डरीकोत्तमेक्षणः
सुवर्णकृतिभृच्छ्रेष्ठदुकूलयुगलावृतः। लसत्प्रचंडदोर्दण्डयुगलो ह्यपराजितः
ततः स पुरुषश्शंभुं प्रणम्य परमेश्वरम्। नामानि कुरु मे स्वामिन्वद कर्म जगाविभिः
तच्छ्रुत्वा वचनं प्राह शंकरः प्रहसन्प्रभुः। पुरुषं तं महेशानो वाचा मेघगभीरया

शिव उवाच

विष्णिवतिव्यापकत्वात्ते नाम ख्यातं भविष्यति। बहून्यन्यानि नामानि भक्तसौख्यकराणि
तपः कुरु दृढो भूत्वा परमं कार्यसाधनम्। इत्युक्त्वा श्वासमार्गेण ददौ च निगमं
ततोऽच्युतः शिवं नत्वा चकार विपुलं तपः। अंतर्द्धानं गतः शक्त्या सलोकः परमेश्वरो
दिव्यं द्वादशसाहस्रं वर्षं तप्त्वापि चाच्युतः। न प्राप स्वाभिलषितं सर्वदं शंभुदर्शनम्
ततः संशयमापन्नश्चिंतितं हृदि सादरम्। मयाद्य किं प्रकर्त्तव्यमिति विष्णुः शिवं
एतस्मिन्नंतरे वाणी समुत्पन्ना शिवाच्छुभा। तपः पुनः प्रकर्त्तव्यं संशयस्यापनुत्तये
ततस्तेन च तच्छ्रुत्वा तपस्तप्तं सुदारुणम्। बहुकालं तदा ब्रह्मध्यानमार्गपरेण
ततः स पुरुषो विष्णुः प्रबुद्धो ध्यानमार्गतः। सुप्रीतो स्मयं प्राप्तः किं यत्तत्त्वमहो
परिश्रमवतस्तस्य विष्णोः स्वाङ्गेभ्य एव च। जलधारा हि संयाता विविधाश्शिवमायया
अभिव्याप्तं च सकलं शून्यं यत्तन्महामुने। ब्रह्मरूपं जलमभूत्स्पर्शनात्पापनाशनम्
तदा श्रांतश्च पुरुषो विष्णुस्तस्मिञ्जले स्वयम्। सुष्वाप परमप्रीतो बहुकालं विमोहितः
नारायणेति नामापि तस्यासीच्छ्रुतिसंमतम्। नान्यत्किंचित्तदा ह्यासीत्प्राकृतं पुरुषं
एतस्मिन्नन्तरे काले तत्त्वान्यासन्महात्मनः। तत्प्रकारं शृणु प्राज्ञ गदतो मे महा
प्रकृतेश्च महानासीन्महतश्च गुणास्त्रयः। अहंकारस्ततो जातस्त्रिविधो गुणभेदतः
तन्मात्राश्च ततो जाताः पञ्चभूतानि वै ततः। तदैव तानीन्द्रियाणि ज्ञानकर्ममयानि

तत्त्वानामिति संख्यानमुक्तं ते ऋषिसत्तम। जडात्मकञ्च तत्सर्वं प्रकृतेः पुरुषं विना ॥५८॥
तत्तदैकीकृतं तत्त्वं चतुर्विंशतिसंख्यकम्। शिवेच्छया गृहीत्वा स सुष्वाप ब्रह्मरूपके ॥५९॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां सृष्टिव्याख्याने प्रथमखण्डे विष्णूत्पत्तिवर्णनो नाम षष्ठोऽध्यायः ॥ ६ ॥

## अथ सप्तमोऽध्यायः

### ( ब्रह्मविष्णुविवादः )

#### ब्रह्मोवाच

सुप्ते नारायणे देवे नाभौ पंकजमुत्तमम्। आविर्बभूव सहसा बृहद्वै शंकरेच्छया ॥ १ ॥
अनंतयष्टिकायुक्तं कर्णिकारसमप्रभम्। अनंतयोजनायाममनंतोच्छ्रायसंयुतम् ॥ २ ॥
कोटिसूर्यप्रतीकाशं सुंदरं तत्त्वसंयुतम्। अत्यद्भुतं महारम्यं दर्शनीयमनुत्तमम् ॥ ३ ॥
कृत्वा यत्नं पूर्ववत्स शंकरः परमेश्वरः। दक्षिणांगान्निजान्मां वै साम्बश्शंभुरजीजनत् ॥४॥
स मायामोहितं कृत्वा मां महेशो द्रुतं मुने। तन्नाभिपंकजादाविर्भावयामास लीलया ॥ ५ ॥
एवं पश्चात्ततो जज्ञे पुत्रोऽहं हेमगर्भकः। चतुर्मुखो रक्तवर्णस्त्रिपुंड्रांकितमस्तकः ॥ ६ ॥
तन्मायामोहितश्चाहं नाविदं कमलं विना। स्वदेहजनकं तात पितरं ज्ञानदुर्बलः ॥ ७ ॥
कोऽहं वा कुत आयातः किं कार्यं तु मदीयकम्। कस्य पुत्रोऽहमुत्पन्नः केनैव निर्मितोऽधुना ॥८॥
इति संशयमापन्नबुद्धिर्मां समपद्यत। किमर्थं मोहमायामि तज्ज्ञानं सुकरं खलु ॥ ९ ॥
एतत्कमलपुष्पस्य पत्रारोहस्थलं ह्यधः। मत्कर्ता च स वै तत्र भविष्यति न संशयः ॥१०॥
इति बुद्धिं समास्थाय कमलादवरोहयम्। नाले नाले गतस्तत्र वर्षाणां शतकं मुने ॥११॥
लब्धं तु मया तत्र कमलस्थानमुत्तमम्। संशयं च पुनः प्राप्तः कमले गन्तुमुत्सुकः ॥१२॥
आरुरोहाथ कमलं नालमार्गेण वै मुने। कुड्मलं कमलस्याथ लब्धवान्न विमोहितः ॥१३॥
नालमार्गेण भ्रमतो गतं वर्षशतं पुनः। क्षणमात्रं तदा तत्र ततस्तिष्ठन्विमोहितः ॥१४॥
तदा वाणी समुत्पन्ना तपेति परमा शुभा। शिवेच्छयाऽपरा व्योम्नो मोहविध्वंसनी मुने ॥१५॥
श्रुत्वा व्योमवचनं द्वादशाब्दं प्रयत्नतः। पुनस्तप्तं तपो घोरं द्रष्टुं स्वजनकं तदा ॥१६॥
तदा हि भगवान्विष्णुश्चतुर्बाहुः सुलोचनः। मय्येवानुग्रहं कर्तुं द्रुतमाविर्बभूव ह ॥१७॥
शंखचक्रायुधकरो गदापद्मधरः परः। घनश्यामलसर्वांगः पीताम्बरधरः परः ॥१८॥
मुकुटादिमहाभूषः प्रसन्नमुखपंकजः। कोटिकंदर्पसंकाशः संदृष्टो मोहितेन सः ॥१९॥
दृष्ट्वा सुन्दरं रूपं विस्मयं परमं गतः। कालाभं कांचनाभं च सर्वात्मानं चतुर्भुजम् २०॥

तथाभूतमहं दृष्ट्वा सदसन्मयमात्मना। नारायणं महाबाहुं हर्षितो ह्यभवं तदा।
मायया मोहितश्शंभोस्तदा लीलात्मनः प्रभोः। अविज्ञाय स्वजनकं तमवोचं प्रहर्षितः।

ब्रह्मोवाच

कस्त्वं वदेति हस्तेन समुत्थाप्य सनातनम्। तदा हस्तप्रहारेण तीव्रेण सुदृढ़ेन तु।
प्रबुद्ध्योत्थाय शयनात्समासीनः क्षणं वशी। ददर्श निद्राविक्लिन्ननीरजामललोचनः।
मामत्र संस्थितं भासाध्यासितो भगवान्हरिः। आह चोत्थाय ब्रह्माणं हसन्मां मधुरं सकृत्।

विष्णुरुवाच

स्वागतं स्वागतं वत्स पितामह महाद्युते। निर्भयो भव दास्येऽहं सर्वान्कामान्न संशयः।
तस्य तद्वचनं श्रुत्वा स्मितपूर्वं सुरर्षभः। रजसा बद्धवैरश्च तमवोचं जनार्दनम्।

ब्रह्मोवाच

भाषसे वत्स वत्सेति सर्वसंहारकारणम्। मामिहातिस्मितं कृत्वा गुरुश्शिष्यमिवानघ।
कर्तारं जगतां साक्षात्प्रकृतेश्च प्रवर्तकम्। सनातनमजं विष्णुं विरिंचिं विष्णुसंभवम्।
विश्वात्मानं विधातारं धातारं पंकजेक्षणम्। किमर्थं भाषसे मोहाद्वक्तुमर्हसि सत्वरम्।
वेदो मां वक्ति नियमात्स्वयंभुवमजं विभुम्। पितामहं स्वराजं च परमेष्ठिनमुत्तमम्।
इत्याकर्ण्य हरिर्वाक्यं मम क्रुद्धो रमापतिः। सोऽपि मामाह जाने त्वां कर्तारमिति लोकतः।

विष्णुरुवाच

कर्तुं धर्तुं भवानंगादवतीर्णो ममाव्ययात्। विस्मृतोऽसि जगन्नाथं नारायणमनामयम्।
पुरुषं परमात्मानं पुरुहूतं पुरुष्टुतम्। विष्णुमच्युतमीशानं विश्वस्य प्रभवोद्भवम्।
नारायणं महाबाहुं सर्वव्यापकमीश्वरम्। मन्नाभिपद्मतस्त्वं हि प्रसूतो नात्र संशयः।
तवापराधो नास्त्यत्र त्वयि मायाकृतं मम। शृणु सत्यं चतुर्वक्त्र सर्वदेवेश्वरो ह्यहम्।
कर्ता हर्ता च भर्ता च न मयास्ति समो विभुः। अहमेव परं ब्रह्म परं तत्त्वं पितामह।
अहमेव परं ज्योतिः परमात्मा त्वहं विभुः। अद्य दृष्टं श्रुतं सर्वं जगत्यस्मिञ्चराचरम्।
तत्तद्विद्धि चतुर्वक्त्र सर्वं मन्मयमित्यथ। मया सृष्टं पुरा व्यक्तं चतुर्विंशतितत्त्वकम्।
नित्यं तेष्वणवो बद्धाः सृष्टक्रोधभयादयः। प्रभावाच्च भवानङ्गान्यनेकानीह लीलया।
सृष्टा बुद्धिर्मया तस्यामहंकारस्त्रिधा ततः। तन्मात्रं पंचकं तस्मान्मनोदेहेन्द्रियाणि च।
आकाशादीनि भूतानि भौतिकानि च लीलया। इति बुद्ध्वा प्रजानाथ शरणं व्रज मे विधे।
अहं त्वां सर्वदुःखेभ्यो रक्षिष्यामि न संशयः ।

ब्रह्मोवाच

इति श्रुत्वा वचस्तस्य ब्रह्मा क्रोधसमन्वितः। को वा त्वमिति संभर्त्स्याब्रुवं मायाविमोहितः ॥
किमर्थं भाषसे भूरि बह्वनर्थकरं वचः। नेश्वरस्त्वं परं ब्रह्मकश्चित्कर्ता भवेत्तव ॥४४॥
मायया मोहितश्चाहं युद्धं चक्रे सुदारुणम्। हरिणा तेन वै सार्द्धं शंकरस्य महाप्रभोः ॥४५॥
एवं मम हरेश्चासीत्संगरो रोमहर्षणः। प्रलयार्णवमध्ये तु रजसा बद्धवैरयोः ॥४६॥
एतस्मिन्नंतरे लिंगमभवच्चावयोः पुरः। विवादशमनार्थं हि प्रबोधार्थं तथावयोः ॥४७॥
ज्वालामालासहस्राढ्यं कालानलशतोपमम्। क्षयवृद्धिविनिर्मुक्तमादिमध्यांतवर्जितम् ॥४८॥
अनौपम्यमनिर्देश्यमव्यक्तं विश्वसंभवम्। तस्य ज्वालासहस्रेण मोहितो भगवान्हरिः ॥४९॥
मोहितं चाह मामत्र किमर्थं स्पर्द्धसेऽधुना। आगतस्तु तृतीयोऽत्र तिष्ठतां युद्धमावयोः ॥५०॥
कुत एवात्र संभूतः परीक्षावोऽग्निसंभवम्। अधो गमिष्याम्यनलस्तंभस्यानुपमस्य च ॥५१॥
परीक्षार्थं प्रजानाथ तस्य वै वायुवेगतः। भवानूर्ध्वं प्रयत्नेन गंतुमर्हसि सत्वरम् ॥५२॥

ब्रह्मोवाच

एवं व्याहृत्य विश्वात्मा स्वरूपमकरोत्तदा। वाराहमहमप्याशु हंसत्वं प्राप्तवान्मुने ॥५३॥
तदा प्रभृति मामाहुर्हंसहंसो विराडिति। हंसहंसेति यो ब्रूयात्स हंसोऽथ भविष्यति ॥५४॥
सुश्वेतो ह्यनलप्रख्यो विश्वतः पक्षसंयुतः। मनोऽनिलजवो भूत्वा गतोर्ध्वं चोर्ध्वतः पुरा ॥५५॥
नारायणोऽपि विश्वात्मा सुश्वेतो ह्यभवत्तदा। दशयोजनविस्तीर्णं शतयोजनमायतम् ॥५६॥
मेरुपर्वतवर्ष्माणं गौरतीक्ष्णोग्रदंष्ट्रिणम्। कालादित्यसमाभासं दीर्घघोणं महास्वनम् ॥५७॥
ह्रस्वपादं विचित्रांगं जैत्रं दृढमनौपमम्। वाराहाकारमास्थाय गतवांस्तदधो जवात् ॥५८॥
एवं वर्षसहस्रं च चरन्विष्णुरधो गतः। तदाप्रभृति लोकेषु श्वेतवाराहसंज्ञकः ॥५९॥
कल्पो बभूव देवर्षे नराणां कालसंज्ञकः। बभ्राम बहुधा विष्णुः प्रभविष्णुरधोगतः ॥६०॥
नापश्यदल्पमप्यस्य मूलं लिंगस्य सूकरः। तावत्कालं गतश्चोर्ध्वमहमप्यरिसूदन ॥६१॥
सत्वरं सर्वयत्नेन तस्यान्तं ज्ञातुमिच्छया। श्रान्तो न दृष्ट्वा तस्यांतमहं कालादधोगतः ॥६२॥
तथैव भगवान्विष्णुश्श्रांतं कमललोचनः। सर्वदेवनिभस्तूर्णमुत्थितः स महावपुः ॥६३॥
समागतो मया सार्द्धं प्रणिपत्य भवं मुहुः। मायया मोहितश्शंभोस्तस्थौ संविग्नमानसः ॥६४॥
पृष्ठतः पार्श्वतश्चैव ह्यग्रतः परमेश्वरम्। प्रणिपत्य मया सार्द्धं सस्मार किमिदं त्विति ॥६५॥
अनिर्देश्यं च तद्रूपमनाम कर्मवर्जितम्। अलिंगं लिंगतां प्राप्तं ध्यानमार्गेऽप्यगोचरम् ॥
स्वस्थं चित्तं तथा कृत्वा नमस्कारपरायणौ। बभूवतुरुभावावामहं हरिरपि ध्रुवम् ॥६७॥

जानीवो नहि ते रूपं योऽसि योऽसि महाप्रभो। नमोऽस्तु ते महेशान रूपं दर्शय नौ त्वरन्।
एवं शरच्छतान्यासन्नमस्कारं प्रकुर्वतोः। आवयोर्मुनिशार्दूल मदमास्थितयोस्तदा।

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां सृष्टिखण्डे विष्णुब्रह्मविवादवर्णनं नाम सप्तमोऽध्यायः॥ ७॥

# अथ अष्टमोऽध्यायः

## ( शब्दब्रह्मतनुवर्णनम् )

### ब्रह्मोवाच

एवं तयोर्मुनिश्रेष्ठ दर्शनं कांक्षमाणयोः। विगवयोश्च सुरयोः सदा नौ स्थितयोर्मुने।
दयालुरभवच्छंभुर्दीनानां प्रतिपालकः। गर्विणां गर्वहर्ता च सर्वेषां प्रभुरव्ययः।
तदा समभवत्तत्र नादो वै शब्दलक्षणः। ओमोमिति सुरश्रेष्ठात्सुव्यक्तः प्लुतलक्षणः।
किमिदं त्विति संचित्य मया तिष्ठन्महास्वनः। विष्णुः सर्वसुराराध्यो निर्वैरस्तुष्टचेतसा।
लिंगस्य दक्षिणे भागे तथापश्यत्सनातनम्। आद्यं वर्णमकाराख्यमुकारं चोत्तरे ततः।
मकारं मध्यतश्चैव नादमंतेऽस्य चोमिति। सूर्यमंडलवद्दृष्ट्वा वर्णमाद्यं तु दक्षिणे।
उत्तरे पावकप्रख्यमुकारमृषिसत्तम। शीतांशुमण्डलप्रख्यं मकारं तस्य मध्यतः।
तस्योपरि तदाऽपश्यच्छुद्धस्फटिकसुप्रभम्। तुरीयातीतममलं निष्कलं निरुपद्रवम्।
निर्द्वंद्वं केवलं शून्यं बाह्याभ्यंतरवर्जितम्। स बाह्याभ्यंतरे चैव बाह्याभ्यंतरसंस्थितम्।
आदिमध्यांतरहितमानंदस्यादिकारणम्। सत्यमानन्दममृतं परं ब्रह्म परायणम्।
कुत एवात्र संभूतः परीक्षावोऽग्निसंभवम्। अधो गमिष्याम्यनलस्तंभस्यानुपमस्य च।
वेदशब्दोभयावेशं विश्वात्मानं व्यचिंतयत्। तदाऽभवदृषिस्तत्र ऋषेः सारतमं स्मृतम्।
तेनैव ऋषिणा विष्णुर्ज्ञातवान्परमेश्वरः। महादेवं परं ब्रह्म शब्दब्रह्मतनुं परम्।
चिंतया रहितो रुद्रो वाचो यन्मनसा सह। अप्राप्य तन्निवर्तंते वाच्यस्त्वेकाक्षरेण सः।
एकाक्षरेण तद्वाच्यमृतं परमकारणम्। सत्यमानन्दममृतं परं ब्रह्म परात्परम्।
एकाक्षरादकाराख्याद्भगवान्बीजकोऽण्डजः। एकाक्षरादुकाराख्याद्धरिः परमकारणम्।
एकाक्षरान्मकाराख्याद्भगवान्नीललोहितः। सर्गकर्त्ता त्वकाराख्यो ह्युकाराख्यस्तु मोहकः।
मकाराख्यस्तु यो नित्यमनुग्रहकरोऽभवत्। मकाराख्यो विभुर्बीजी ह्यकारो बीज उच्यते।
उकाराख्यो हरिर्योनिः प्रधानपुरुषेश्वरः। बीजी च बीजं तद्योनिर्नादाख्यश्च महेश्वरः।
बीजी विभज्य चात्मानं स्वेच्छया तु व्यवस्थितः। अस्य लिंगादभूद्बीजमकारो बीजिनः

उकारयोनौ निःक्षिप्तमवर्द्धत समंततः। सौवर्णमभवच्चांडमावेद्यं तदलक्षणम् ॥२१॥
अनेकाब्दं तथा चाप्सु दिव्यमंडं व्यवस्थितम्। ततो वर्षसहस्रांते द्विधा कृतमजोद्भवम् ॥२२॥
अंडमप्सु स्थितं साक्षाद्व्याघातेनेश्वरेण तु। तथाऽस्य सुशुभं हैमं कपालं चोर्ध्वसंस्थितम् ॥
जज्ञे सा द्यौस्तदपरं पृथिवी पञ्चलक्षणा। तस्मादंडाद्भवो जज्ञे ककाराख्यश्चतुर्मुखः ॥२४॥
स स्रष्टा सर्वलोकानां स एव त्रिविधः प्रभुः। एवमोमोमिति प्रोक्तमित्याहुर्यजुषां वराः ॥२५॥
यजुषां वचनं श्रुत्वा ऋचः सामानि सादरम्। एवमेव हरे ब्रह्मन्नित्याहुश्चावयोस्तदा ॥२६॥
ततो विज्ञाय देवेशं यथावच्छक्तिसंभवैः। मंत्रं महेश्वरं देवं तुष्टाव सुमहोदयम् ॥२७॥
एतस्मिन्नंतरेऽन्यच्च रूपमद्भुतसुंदरम्। ददर्श च मया सार्द्धं भगवान्विश्वपालकः ॥२८॥
पंचवक्त्रं दशभुजं गौरकर्पूरवन्मुने। नानाकांतिसमायुक्तं नानाभूषणभूषितम् ॥२९॥
महोदारं महावीर्यं महापुरुषलक्षणम्। तं दृष्ट्वा परमं रूपं कृतार्थोऽभून्मया हरिः ॥३०॥
अथ प्रसन्नो भगवान्महेशः परमेश्वरः। दिव्यं शब्दमयं रूपमाख्याय प्रहसन्स्थितः ॥३१॥
अकारस्तस्य मूर्द्धा हि ललाटो दीर्घ उच्यते। इकारो दक्षिणं नेत्रमीकारो वामलोचनम् ॥३२॥
उकारो दक्षिणं श्रोत्रमूकारो वाम उच्यते। ऋकारो दक्षिणं तस्य कपोलं परमेष्ठिनः ॥३३॥
वामं कपोलमृकारो लृ लॄ नासापुटे उभे। एकारश्चोष्ठ ऊर्ध्वश्च ह्यैकारस्त्वधरो विभोः ॥३४॥
ओकारश्च तथौकारो दन्तपङ्क्तिद्वयं क्रमात्। अमस्तु तालुनी तस्य देवदेवस्य शूलिनः ॥३५॥
कादिपंचाक्षराण्यस्य पञ्च हस्ताश्च दक्षिणे। चादिपंचाक्षराण्येवं पंच हस्तास्तु वामतः ॥३६॥
टादिपंचाक्षरं पादास्तादि पंचाक्षरं तथा। पकार उदरं तस्य फकारः पार्श्व उच्यते ॥३७॥
बकारो वामपार्श्वस्तु भकारः स्कंध उच्यते। मकारो हृदयं शंभोर्महादेवस्य योगिनः ॥३८॥
यकारादिसकारान्ता विभोर्वै सप्तधातवः। हकारो नाभिरूपो हि क्षकारो घ्राण उच्यते ॥३९॥
एवं शब्दमयं रूपमगुणस्य गुणात्मनः। दृष्ट्वा तमुमया सार्द्धं कृतार्थोऽभून्मया हरिः ॥४०॥
एवं दृष्ट्वा ममेशानं शब्दब्रह्मतनुं शिवम्। प्रणम्य च मया विष्णुः पुनश्चापश्यदूर्ध्वतः ॥४१॥
ॐकारप्रभवं मंत्रं कलापंचकसंयुतम्। शुद्धस्फटिकसंकाशं शुभाष्टत्रिंशदक्षरम् ॥४२॥
मेधाकारमभूद्भूयः सर्वधर्मार्थसाधकम् । गायत्रीप्रभवं मंत्रं सहितं वश्यकारकम् ॥४३॥
चतुर्विंशतिवर्णाढ्यं चतुष्कलमनुत्तमम्। अथ पंचसितं मंत्रं कलाष्टकसमायुतम् ॥४४॥
आभिचारिकमत्यर्थं प्रायस्त्रिंशच्छुभाक्षरम्। यजुर्वेदसमायुक्तं पञ्चविंशच्छुभाक्षरम् ॥४५॥
कलाष्टकसमायुक्तं सुश्वेतं शांतिकं तथा। त्रयोदशकलायुक्तं बालाद्यैः सह लेहितम् ॥४६॥
बभूवुरस्य चोत्पत्तिवृद्धिसंहारकारणम्। वर्णा एकाधिकाः षष्टिरस्य मंत्रवरस्य तु ॥४७॥
पुनर्मृत्युंजयं मंत्रं पञ्चाक्षरमतः परम्। चिंतामणिं तथा मंत्रं दक्षिणामूर्तिसंज्ञकम् ॥४८॥

ततस्तत्त्वमसीत्युक्तं महावाक्यं हरस्य च। पञ्चमंत्रांस्तथा लब्ध्वा जजाप भगवान्हरिः॥
अथ दृष्ट्वा कलावर्णमृग्यजुः सामरूपिणम्। ईशानमीशमुकुटं पुरुषाख्यं पुरातनम्॥
अघोरहृदयं हृद्यं सर्वगुह्यं सदाशिवम्। वामपादं महादेवं महाभोगीन्द्रभूषणम्॥
विश्वतः पादवन्तं तं विश्वतोऽक्षिकरं शिवम्। ब्रह्मणोऽधिपतिं सर्गस्थितिसंहारकारणम्॥
तुष्टाव वाग्भिरिष्टाभिः साम्बं वरदमीश्वरम्। मया च सहितो विष्णुर्भगवांस्तुष्टचेतसा॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां सृष्ट्युपाख्याने शब्दब्रह्मतनुवर्णनो नामाष्टमोऽध्यायः॥ ८॥

## अथ नवमोऽध्यायः

### (शिवतत्त्ववर्णनम्)

ब्रह्मोवाच

अथाकर्ण्य नुतिं विष्णुकृतां स्वस्य महेश्वरः। प्रादुर्बभूव सुप्रीतः स वामं करुणानिधिः॥
पञ्चवक्त्रस्त्रिनयनो भालचन्द्रो जटाधरः। गौरवर्णो विशालाक्षो भस्मोद्धूलितविग्रहः॥
दशबाहुर्नीलगलः सर्वाभरणभूषितः। सर्वांगसुन्दरो भस्मत्रिपुण्ड्रांकितमस्तकः॥
तं दृष्ट्वा तादृशं देवं सवामं परमेश्वरम्। तुष्टाव पुनरिष्टाभिर्वाग्भिर्विष्णुर्मया सह॥
निगमं श्वासरूपेण ददौ तस्मै ततो हरः। विष्णवे च प्रसन्नात्मा महेशः करुणाकरः॥
ततो ज्ञानमदात्तस्मै रहस्यं परमात्मने। परमात्मा पुनर्मह्यं दत्तवान्कृपया मुने॥
संप्राप्य निगमं विष्णुः पप्रच्छ पुनरेव तम्। कृतार्थः सांजलिर्नत्वा मया सह महेश्वरम्॥

विष्णुरुवाच

कथं च तुष्यसे देव मया पूज्यः कथं प्रभो। कथं ध्यानं प्रकर्तव्यं कथं व्रजसि वश्यताम्॥
किं कर्तव्यं महादेव ह्यावाभ्यां तव शासनात्। सदा सदाज्ञापय नौ प्रीत्यर्थं कुरु शंकर॥
एतत्सर्वं महाराज कृपां कृत्वाऽवयोः प्रभो। कथनीयं तथान्यच्च विज्ञाय स्वानुगौ शिव॥

ब्रह्मोवाच

इत्येतद्वचनं श्रुत्वा प्रसन्नो भगवान्हरः। उवाच वचनं प्रीत्या सुप्रसन्नः कृपानिधिः॥

श्रीशिव उवाच

भक्त्या च भवतोर्नूनं प्रीतोऽहं सुरसत्तमौ। पश्यतं मां महादेवं भयं सर्वं विमुंचताम्॥
मम लिंगं सदा पूज्यं ध्येयं चैतादृशं मम। इदानीं दृश्यते यद्वत्तथा कार्यं प्रयत्नतः॥
पूजितो लिंगरूपेण प्रसन्नो विविधं फलम्। दास्यामि सर्वलोकेभ्यो मनोऽभीष्टान्यनेकशः॥

यदा दुःखं भवेत्तत्र युवयोः सुरसत्तमौ। पूजिते मम लिंगे च तदा स्याद्दुःखनाशनम् ॥१५॥
युवां प्रसूतौ प्रकृतेर्मदीयाया महाबलौ। गात्राभ्यां सव्यसव्याभ्यां मम सर्वेश्वरस्य हि ॥१६॥
अयं मे दक्षिणात्पार्श्वाद्ब्रह्मा लोक पितामहः। वामपार्श्वाच्च विष्णुस्त्वं समुत्पन्नः परात्मनः ॥१७॥
प्रीतोऽहं युवयोः सम्यग्वरं दद्यां यथेप्सितम्। मयि भक्तिर्दृढा भूयाद्युवयोरभ्यनुज्ञया ॥१८॥
पार्थिवीं चैव मन्मूर्तिं विधाय कुरुतां युवाम्। सेवां च विविधां प्राज्ञौ कृत्वा सुखमवाप्स्यथः ॥
ब्रह्मन्सृष्टिं कुरु त्वं हि मदाज्ञापरिपालकः। वत्स वत्स हरे त्वं च पालयैवं चराचरम् ॥२०॥

ब्रह्मोवाच

इत्युक्त्वा नौ प्रभुस्ताभ्यां पूजाविधिमदाच्छुभाम्। येनैव पूजितः शंभुः फलं यच्छत्यनेकशः ॥२१॥

ब्रह्मोवाच

इत्याकर्ण्य वचः शंभोर्मया च सहितो हरिः। प्रत्युवाच महेशानं प्रणिपत्य कृतांजलिः ॥२२॥

विष्णुरुवाच

यदि प्रीतिः समुत्पन्ना यदि देयो वरश्च नौ। भक्तिर्भवतु नौ नित्यं त्वयि चाव्यभिचारिणी ॥२३॥
त्वमप्यवतरस्वाद्य लीलया निर्गुणोऽपि हि। सहायं कुरु नौ तात त्वं परः परमेश्वरः ॥२४॥
आवयोर्देवदेवेश विवादमपि शोभनम्। इहागतो भवान्यस्माद्विवादशमनाय नौ ॥२५॥

ब्रह्मोवाच

तस्य तद्वचनं श्रुत्वा पुनः प्राह हरो हरिम्। प्रणिपत्य स्थितं मूर्ध्ना कृतांजलिपुटः स्वयम् ॥२६॥

श्रीमहेश उवाच

प्रलयस्थितिसर्गाणां कर्ताहं सगुणोऽगुणः। परब्रह्म निर्विकारी सच्चिदानंदलक्षणः ॥२७॥
त्रिधा भिन्नो ह्यहं विष्णो ब्रह्मविष्णुहराख्यया। सर्गरक्षालयगुणैर्निष्कलोऽहं सदा हरे ॥२८॥
स्तुतोऽहं यत्त्वया विष्णो ब्रह्मणा मेऽवतारणे। प्रार्थनां तां करिष्यामि सत्यां यद्भक्तवत्सलः ॥२९॥
मद्रूपं परमं ब्रह्मन्नीदृशं भवदंगतः। प्रकटीभविता लोके नाम्ना रुद्रः प्रकीर्तितः ॥३०॥
मदंशात्तस्य सामर्थ्यं न्यूनं नैव भविष्यति। योऽहं सोऽहं न भेदोऽस्ति पूजाविधिविधानतः ३१॥
यथा च ज्योतिषस्संगाज्जलादेः स्पर्शता न वै। तथा ममागुणस्यापि संयोगाद्बन्धनं न हि ॥३२॥
शिवरूपं ममैतच्च रुद्रोऽपि शिववत्तदा। न तत्र परभेदो वै कर्त्तव्यश्च महामुने ॥३३॥
वस्तुतो ह्येकरूपं हि द्विधा भिन्नं जगत्युत। अतो न भेदो विज्ञेयः शिवे रुद्रे कदाचन ॥३४॥
सुवर्णस्य तथैकस्य वस्तुत्वं नैव गच्छति। अलंकृतिकृते देव नामभेदो न वस्तुतः ॥३५॥
यथैकस्या मृदो भेदे नानापात्रे न वस्तुतः। कारणस्यैव कार्ये च सन्निधानं निदर्शनम् ॥३६॥

ज्ञातव्यं बुधवर्यैश्च निर्मलज्ञानिभिः सुरैः। एवं ज्ञात्वा भवद्भ्यां तु न दृश्यं भेदकारणम्॥
वस्तुवत् सर्वदृश्यं च शिवरूपं मतम्मम। अहं भवानजश्चैव रुद्रो योऽयं भविष्यति॥
एकरूपा न भेदस्तु भेदे वै बंधनं भवेत्। तथापि च मदीयं हि शिवरूपं सनातनम्॥
मूलीभूतं सदोक्तं च सत्यज्ञानमनंतकम्। एवं ज्ञात्वा सदा ध्येयं मनसा चैव तत्त्वतः॥
श्रूयतां चैव भो ब्रह्मन्यद्गोप्यं कथ्यते मया। भवंतौ प्रकृतेर्यातौ नायं वै प्रकृतेः पुनः॥
मदाज्ञा जायते तत्र ब्रह्मणो भ्रुकुटेरहम्। गुणेष्वपि यथा प्रोक्तस्तामसः प्रकृतो हरः॥
वैकारिकश्च विज्ञेयो योऽहंकार उदाहृतः। नामतो वस्तुतो नैव तामसः परिचक्ष्यते॥
एतस्मात्कारणाद्ब्रह्मन्करणीयमिदं त्वया। सृष्टिकर्ता भव ब्रह्मन्सृष्टेश्च पालको हरिः॥
मदीयश्च तथांऽशो यो लयकर्ता भविष्यति। इयं या प्रकृतिर्देवी ह्युमाख्या परमेश्वरी॥
तस्यास्तु शक्तिर्वाग्देवी ब्रह्माणं सा भजिष्यति। अन्या शक्तिः पुनस्तत्र प्रकृतेः संभविष्यति॥
समाश्रयिष्यते विष्णुं लक्ष्मीरूपेण सा तदा। पुनश्च काली नाम्ना सा मदंशं प्राप्स्यति ध्रु॥
ज्योतीरूपेण सा तत्र कार्यार्थे संभविष्यति। एवं देव्यास्तथा प्रोक्ताः शक्तयः परमाः शुभाः॥
सृष्टिस्थितिलयानां हि कार्यं तासां क्रमाद्ध्रुवम्। एतस्याः प्रकृतेरंशा मत्प्रियायाः सुरोत्तम॥
त्वं च लक्ष्मीमुपाश्रित्य कार्यं कर्तुमिहार्हसि। ब्रह्मंस्त्वं च गिरां देवीं प्रकृत्यंशामवाप्य च॥
सृष्टिकार्यं हृदा कर्तुं मन्निर्देशादिहार्हसि। अहं कालीं समाश्रित्य मत्प्रियांशां परात्पराम्॥
रुद्ररूपेण प्रलयं करिष्ये कार्यमुत्तमम्। चतुर्वर्णमयं लोकं तत्सर्वैराश्रमैर्ध्रुवम्॥
तदन्यैर्विविधैः कार्यैः कृत्वा सुखमवाप्स्यथः। ज्ञानविज्ञानसंयुक्तो लोकानां हितकारकः॥
मुक्तिदोऽत्र भवानद्य भव लोके मदाज्ञया। मद्दर्शने फलं यद्वत्तदेव तव दर्शने॥
इति दत्तो वरस्तेऽद्य सत्यं सत्यं न संशयः। ममैव हृदये विष्णुर्विष्णोश्च हृदये ह्यहम्॥
उभयोरंतरं यो वै न जानाति मनो मम। वामांगजो मम हरिर्दक्षिणांगोद्भवो विधिः॥
महाप्रलयकृद्रुद्रो विश्वात्मा हृदयोद्भवः। त्रिधा भिन्नो ह्यहं विष्णो ब्रह्मविष्णुभवाख्यया॥
सर्गरक्षालयकरस्त्रिगुणै रजआदिभिः। गुणभिन्नः शिवः साक्षात्प्रकृतेः पुरुषात्परः॥
परं ब्रह्माद्वयो नित्योऽनन्तः पूर्णो निरंजनः। अंतस्तमो बहिःसत्त्वस्त्रिजगत्पालको हरिः॥
अंतः सत्त्वस्तमोबाह्यस्त्रिजगल्लयकृद्धरः ॥६०॥
अंतर्बहिरजश्चैव त्रिजगत्सृष्टिकृद्विधिः। एवं गुणास्त्रिदेवेषु गुणभिन्नः शिवः स्मृतः॥
विष्णो सृष्टिकरं प्रीत्या पालयैनं पितामहम्। संपूज्यस्त्रिषु लोकेषु भविष्यसि मदाज्ञया॥
तव सेव्यो विधेश्चापि रुद्र एव भविष्यति। शिवपूर्णावतारो हि त्रिजगल्लयकारकः॥

पाद्मे भविष्यति सुतः कल्पे तव पितामहः। तदा द्रक्ष्यसि मां चैव सोऽपि द्रक्ष्यति पद्मजः ॥६४॥
एवमुक्त्वा महेशानः कृपां कृत्वाऽतुलां हरः। पुनः प्रोवाच सुप्रीत्या विष्णुं सर्वेश्वरः प्रभुः ॥६५॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने शिवतत्त्ववर्णनो नाम नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः

### ( परमशिवतत्त्ववर्णनम् )

### परमेश्वर उवाच

अन्यच्छृणु हरे विष्णो शासनं मम सुव्रत। सदा सर्वेषु लोकेषु मान्यः पूज्यो भविष्यसि ॥ १ ॥
ब्रह्मणा निर्मिते लोके यदा दुःखं प्रजायते। तदा त्वं सर्वदुःखानां नाशाय तत्परो भव ॥ २ ॥
सहायं ते करिष्यामि सर्वकार्ये च दुःसहे। तव शत्रून्हनिष्यामि दुःसाध्यान्परमोत्कटान् ॥ ३ ॥
विविधानवतारांश्च गृहीत्वा कीर्तिमुत्तमाम् ।
विस्तारय हरे लोके तारणाय परो भव। गुणरूपो ह्यहं रुद्रो ह्यनेन वपुषा सदा ॥ ४ ॥
कार्यं करिष्ये लोकानां तवाशक्यं न संशयः ॥५॥
रुद्रध्येयो भवांश्चैव भवद्ध्येयो हरस्तथा। युवयोरन्तरं नैव तव रुद्रस्य किंचन ॥ ६ ॥
वस्तुतश्चापि चैकत्वं वरतोऽपि तथैव च। लीलयापि महाविष्णो सत्यं सत्यं न संशयः ॥ ७ ॥
रुद्रभक्तो नरो यस्तु तव निन्दां करिष्यति। तस्य पुण्यं च निखिलं द्रुतं भस्म भविष्यति ॥ ८ ॥
नरके पतनं तस्य त्वद्द्वेषात्पुरुषोत्तम। मदाज्ञया भवेद्विष्णो सत्यं सत्यं न संशयः ॥ ९ ॥
लोकेऽस्मिन्मुक्तिदो नृणां भुक्तिदश्च विशेषतः। ध्येयः पूज्यश्च भक्तानां निग्रहानुग्रहौ कुरु ॥१०॥
इत्युक्त्वा मां च धातारं हस्ते धृत्वा स्वयं हरिम्। कथयामास दुःखेषु सहायो भव सर्वदा ॥११॥
सर्वाध्यक्षश्च सर्वेषु भुक्तिमुक्तिप्रदायकः। भव त्वं सर्वदा श्रेष्ठः सर्वकामप्रसाधकः ॥१२॥
सर्वेषां प्राणरूपश्च भव त्वं च ममाज्ञया। संकटे भजनीयो हि स रुद्रो मत्तनुर्हरे ॥१३॥
त्वां यः समाश्रितो नूनं मामेव स समाश्रितः। अंतरं यश्च जानाति निरये पतति ध्रुवम् ॥१४॥
आयुर्बलं शृणुष्वाद्य त्रिदशानां विशेषतः। संदेहोऽत्र न कर्त्तव्यो ब्रह्मविष्णुहरात्मनाम् ॥१५॥
चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते। रात्रिश्च तावती तस्य मानमेतत्क्रमेण ह ॥१६॥
तेषां त्रिंशद्दिनैर्मासो द्वादशैस्तैश्च वत्सरः। शतवर्षप्रमाणेन ब्रह्मायुः परिकीर्तितम् ॥१७॥
ब्रह्मणो वर्षमात्रेण दिनं वैष्णवमुच्यते। सोऽपि वर्षशतं यावदात्ममानेन जीवति ॥१८॥
वैष्णवेन तु वर्षेण दिनं रौद्रं भवेद्ध्रुवम्। हरो वर्षशते याते नररूपेण संस्थितः ॥१९॥

यावदुच्छ्वसितं वक्त्रे सदाशिवसमुद्भवम्। पश्चाच्छक्तिं समभ्येति यावन्निःश्वसितं भवेत्॥
निःश्वासोच्छ्वसितानां च सर्वेषामेव देहिनाम्। ब्रह्मविष्णुहराणां च गंधर्वोरगरक्षसाम्॥
एकविंशसहस्राणि शतैः षड्भिः शतानि च। अहोरात्राणि चोक्तानि प्रमाणं सुरसत्तमौ॥
षड्भिरुच्छ्वासनिश्वासैः पलमेकं प्रवर्तितम्। घटी षष्टिपला प्रोक्ता सा षष्ट्या च दिनं निशा॥
निश्वासोच्छ्वासितानां च परिसंख्या न विद्यते। सदाशिवसमुत्थानमेतस्मात्सोऽक्षयः स्मृतः॥
इत्थं रूपं त्वया तावद्रक्षणीयं ममाज्ञया। तावत्सृष्टेश्च कार्यं वै कर्तव्यं विविधैर्गुणैः॥

ब्रह्मोवाच

इत्याकर्ण्य वचः शंभोर्मया च भगवान्हरिः। प्रणिपत्य च विश्वेशं प्राह मंदतरं वशी॥

विष्णुरुवाच

शंकर श्रूयतामेतत्कृपासिंधो जगत्पते। सर्वमेतत्करिष्यामि भवदाज्ञावशानुगः॥
मम ध्येयः सदा त्वं च भविष्यसि न चान्यथा। भवतः सर्वसामर्थ्यं लब्धं चैव पुरा मया॥
क्षणमात्रमपि स्वामिंस्तव ध्यानं परं मम। चेतसो दूरतो नैव संगच्छतु कदाचन॥
मम भक्तश्च यः स्वामिंस्तव निंदां करिष्यति। तस्य वै निरये वासं प्रयच्छ नियतं ध्रुवम्॥

त्वद्भक्तो यो भवेत्स्वामिन्मम प्रियतरो हि सः।
एवं वै यो विजानाति तस्य मुक्तिर्न दुर्लभा॥२१॥

महिमा च मदीयोऽद्य वर्द्धितो भवता ध्रुवम्। कदाचिदगुणश्चैव जायते क्षम्यतामिति॥

ब्रह्मोवाच

तदा शंभुस्तदीयं हि श्रुत्वा वचनमुत्तमम्। उवाच विष्णुं सुप्रीत्या क्षम्या तेऽगुणता॥
एवमुक्त्वा हरिं नौ स कराभ्यां परमेश्वरः। पस्पर्श सकलांगेषु कृपया तु कृपानिधिः॥
आदिश्य विविधान्धर्मान्सर्वदुःखहरो हरः। ददौ वराननेकांश्चावयोर्हितचिकीर्षया॥
ततः स भगवाञ्छंभुः कृपया भक्तवत्सलः। दृष्ट्या संपश्यतोः शीघ्रं तत्रैवांतरधीयत॥
तदाप्रभृति लोकेऽस्मिँल्लिंगपूजाविधिः स्मृतः। लिंगे प्रतिष्ठितः शंभुर्भुक्तिमुक्तिप्रदायकः॥
लिंगवेदिर्महादेवी लिंगं साक्षान्महेश्वरः। लयनाल्लिंगमित्युक्तं तत्रैव निखिलं जगत्॥
यस्तु लैंगं पठेन्नित्यमाख्यानं लिंगसन्निधौ। षण्मासाच्छिवरूपो वै नात्र कार्या विचारणा॥
यस्तु लिङ्गसमीपे तु कार्यं किंचित्करोति च। तस्य पुण्यफलं वक्तुं न शक्नोमि महामुने॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने परमशिवतत्त्ववर्णनं नाम दशमोऽध्यायः॥ १०॥

# अथ एकादशोऽध्यायः

## ( शिवपूजाविधिः )

### ऋषय ऊचुः

सूत सूत महाभाग व्यासशिष्य नमोऽस्तु ते। श्राविताऽद्याद्भुता शैवी कथा परमपावनी ॥ १ ॥
तत्राद्भुता महादिव्या लिंगोत्पत्तिः श्रुता शुभा। श्रुत्वा यस्याः प्रभावं च दुःखनाशो भवेदिह ॥ २ ॥
ब्रह्मनारदसंवादमनुसृत्य दयानिधे। शिवार्चनविधिं ब्रूहि येन तुष्टो भवेच्छिवः ॥ ३ ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैर्वा पूज्यते शिवः। कथं कार्यं च तद् ब्रूहि यथा व्यासमुखाच्छ्रुतम् ॥
तच्छ्रुत्वा वचनं तेषां शर्मदं श्रुतिसंमतम्। उवाच सकलं प्रीत्या मुनिप्रश्नानुसारतः ॥ ५ ॥

### सूत उवाच

साधु पृष्टं भवद्भिश्च तद्रहस्यं मुनीश्वराः। तदहं कथयाम्यद्य यथाबुद्धि यथाश्रुतम् ॥ ६ ॥
भवद्भिः पृच्छ्यते यद्वत्तथा व्यासेन वै पुरा। पृष्टं सनत्कुमाराय तच्छ्रुतं ह्युपमन्युना ॥ ७ ॥
ततो व्यासेन वै श्रुत्वा शिवपूजादिकं च यत्। मह्यं च पाठितं तेन लोकानां हितकाम्यया ॥ ८ ॥
तच्छ्रुतं चैव कृष्णेन ह्युपमन्योर्महात्मनः। तदहं कथयिष्यामि यथा ब्रह्माऽवदत्पुरा ॥ ९ ॥

### ब्रह्मोवाच

शृणु नारद वक्ष्यामि संक्षेपाल्लिंगपूजनम्। वक्तुं वर्षशतेनापि न शक्यं विस्तरान्मुने ॥१०॥
एवं तु शांकरं रूपं सुखं स्वच्छं सनातनम्। पूजयेत्परया भक्त्या सर्वकामफलाप्तये ॥११॥
दारिद्र्यं रोगदुःखं च पीडनं शत्रुसंभवम्। पापं चतुर्विधं तावद्यावन्नार्चयते शिवम् ॥१२॥
सम्पूजिते शिवे देवे सर्वदुःखं विलीयते। संपद्यते सुखं सर्वं पश्चान्मुक्तिरवाप्यते ॥१३॥
ये वै मानुष्यमाश्रित्य मुख्यं संतानतः सुखम्। तेन पूज्यो महादेवः सर्वकार्यार्थसाधकः ॥१४॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च विधिवत्क्रमात्। शंकरार्चां प्रकुर्वंतु सर्वकामार्थसिद्धये ॥१५॥
प्रातःकाले समुत्थाय मुहूर्ते ब्रह्मसंज्ञके। गुरोश्च स्मरणं कृत्वा शंभोश्चैव तथा पुनः ॥१६॥
तीर्थानां स्मरणं कृत्वा ध्यानं चैव हरेरपि। ममापि निर्जराणां वै मुन्यादीनां तथा मुने ॥१७॥
ततः स्तोत्रं शंभुनाम गृह्णीयाद्विधिपूर्वकम्। तथोत्थाय मलोत्सर्गं दक्षिणस्यां चरेद्दिशि ॥१८॥
एकान्ते तु विधिं कुर्यान्मलोत्सर्गस्य तच्छ्रुतम्। तदेव कथयाम्यद्य शृण्वाधाय मनो मुने ॥१९॥
शुद्धां मृदं द्विजो लिप्यात्पंचवारं विशुद्धये। क्षत्रियश्च चतुर्वारं वैश्यो वारत्रयं तथा ॥२०॥
शूद्रो द्विवारं च मृदं गृह्णीयाद्विधिशुद्धये। गुदे वाथ सकृल्लिंगे वारमेकं प्रयत्नतः ॥२१॥
दशवारं वामहस्ते सप्तवारं द्वयोस्तथा। प्रत्येकम्पादयोस्तात त्रिवारं करयोः पुनः ॥२२॥

स्त्रीभिश्च शूद्रवत्कार्यं मृदाग्रहणमुत्तमम्। हस्तौ पादौ च प्रक्षाल्य पूर्ववन्मृदमाहरेत्॥
दंतकाष्ठं ततः कुर्यात्स्ववर्णक्रमतो नरः ॥२४॥
विप्रः कुर्याद्दंतकाष्ठं द्वादशांगुलमानतः। एकादशांगुलं राजा वैश्यः कुर्याद्दशांगुलम्॥
शूद्रो नवांगुलं कुर्यादिति मानमिदं स्मृतम्। कालदोषं विचार्य्यैव मनुदृष्टं विवर्जयेत्॥
षष्ठ्याद्यामश्च नवमीं व्रतमस्तं रवेर्दिनम्। तथा श्राद्धदिनं तात निषिद्धं रदधावने॥
स्नानं तु विधिवत्कार्यं तीर्थादिषु क्रमेण तु। देशकालविशेषेण स्नानं कार्यं समंत्रकम्॥
आचम्य प्रथमं तत्र धौतवस्त्रेण चाधरेत्। एकांते सुस्थले स्थित्वा संध्याविधिमथाचरेत्॥
यथायोग्यं विधिं कृत्वा पूजाविधिमथारभेत्। मनस्तु सुस्थिरं कृत्वा पूजागारं प्रविश्य च॥
पूजाविधिं समादाय स्वासने ह्युपविश्य वै। न्यासादिकं विधायादौ पूजयेत्क्रमशो हरम्॥
प्रथमं च गणाधीशं द्वारपालांस्तथैव च। दिक्पालांश्च सुसंपूज्य पश्चात्पीठं प्रकल्पयेत्॥
अथवाऽष्टदलं कृत्वा पूजाद्रव्यसमीपतः। उपविश्य ततस्तत्र चोपवेश्य शिवं प्रभुम्॥
त्रयमाचमनं कृत्वा प्रक्षाल्य च पुनः करौ। प्राणायामत्रयं कृत्वा मध्ये ध्यायेच्च त्र्यम्बकम्॥
पंचवक्त्रं दशभुजं शुद्धस्फटिकसन्निभम्। सर्वाभरणसंयुक्तं व्याघ्रचर्मोत्तरीयकम्॥
तस्य सारूप्यतां स्मृत्वा दहेत्पापं नरः सदा। शिवं ततः समुत्थाप्य पूजयेत्परमेश्वरम्॥
देहशुद्धिं ततः कृत्वा मूलमंत्रं न्यसेत्क्रमात्। सर्वत्र प्रणवेनैव षडंगन्यासमाचरेत्॥
कृत्वा हृदि प्रयोगं च ततः पूजां समारभेत्। पाद्यार्घाचमनार्थं च पात्राणि च प्रकल्पयेत्॥
स्थापयेद्विविधान्कुंभान्नव धीमान्यथाविधि। दर्भैराच्छाद्य तैरेव संस्थाप्याभ्युक्ष्य वारिणा॥
तेषु तेषु च सर्वेषु क्षिपेत्तोयं सुशीतलम्। प्रणवेन क्षिपेत्तेषु द्रव्याण्यालोक्य बुद्धिमान्॥
उशीरं चन्दनं चैव पाद्ये तु परिकल्पयेत्। जातीकंकोलकर्पूरवटमूलतमालकम्
चूर्णयित्वा यथान्यायं क्षिपेदाचमनीयके। एतत्सर्वेषु पात्रेषु दापयेच्चन्दनान्वितम्॥
पार्श्वयोर्देवदेवस्य नंदीशं तु समर्चयेत्। गंधैर्धूपैस्तथा दीपैर्विविधैः पूजयेच्छिवम्॥
लिंगशुद्धिं ततः कृत्वा मुदायुक्तो नरस्तदा। यथोचितं तु मंत्रौघैः प्रणवादिनमोंतकैः॥
कल्पयेदासनं स्वस्तिपद्मादि प्रणवेन तु। तस्मात्पूर्वदिशं साक्षादणिमामयमक्षरम्॥
लघिमा दक्षिणं चैव महिमा पश्चिमं तथा। प्राप्तिश्चैवोत्तरं पत्रं प्राकाम्यं पावकस्य च॥
ईशित्वं नैर्ऋतं पत्रं वशित्वं वायुगोचरे। सर्वज्ञत्व तथैशान्यं कर्णिका सोम उच्यते॥
सोमस्याधस्तथा सूर्यस्तस्याधः पावकस्त्वयम्। धर्मादीनपि तस्याधो भवतः कल्पयेत्क्रमात्॥
अव्यक्तादि चतुर्दिक्षु सोमस्यांते गुणत्रयम्। सद्योजातं प्रवक्ष्यामीत्यावाह्य परमेश्वरम्॥
वामदेवेन मंत्रेण तिष्ठेच्चैवासनोपरि। सान्निध्यं रुद्रगायत्र्या अघोरेण निरोधयेत्॥

ईशानं सर्वविद्यानामिति मंत्रेण पूजयेत्। पाद्यमाचमनीयं च विधायार्घ्यं प्रदापयेत् ॥५१॥
स्थापयेद्विधिना रुद्रं गंधचन्दनवारिणा। पञ्चगव्यविधानेन गृह्य पात्रेऽभिमंत्र्य च ॥५२॥
प्रणवेनैव गव्येन स्नापयेत्पयसा च तम्। दध्ना च मधुना चैव तथा चेक्षुरसेन तु ॥५३॥
घृतेन तु तथा पूज्य सर्वकामहितावहम्। पुण्यैर्द्रव्यैर्महादेवं प्रणवेनाभिषेचयेत् ॥५४॥
पवित्रजलभाण्डेषु मंत्रैस्तोयं क्षिपेत्ततः। शुद्धीकृत्य यथान्यायं सितवस्त्रेण साधकः ॥५५॥
तावद्दूरं न कर्तव्यं न यावच्चन्दनं क्षिपेत्। तन्दुलैः सुन्दरैस्तत्र पूजयेच्छंकरम्मुदा ॥५६॥
कुशापामार्गकर्पूरजातिचंपकपाटलैः। करवीरैस्सितैश्चैव मल्लिकाकमलोत्पलैः ॥५७॥
अपूर्वपुष्पैर्विविधैश्चन्दनाद्यैस्तथैव च। जलेन जलधाराञ्च कल्पयेत्परमेश्वरे ॥५८॥
पात्रैश्च विविधैर्देवं स्नापयेच्च महेश्वरम्। मंत्रपूर्वं प्रकर्तव्या पूजा सर्वफलप्रदा ॥५९॥
मंत्रांश्च तुभ्यं ताँस्तात सर्वकामार्थसिद्धये। प्रवक्ष्यामि समासेन सावधानतया शृणु ॥६०॥
पाठ्यमानेन मंत्रेण तथा वाङ्मयकेन च। रुद्रेण नीलरुद्रेण सुशुक्लेन शुभेन च ॥६१॥
होतारेण तथा शीर्ष्णा शुभेनाथर्वणेन च। शांत्या वाथ पुनःशांत्या मारुणेनारुणेन च ॥६२॥
अर्थाभीष्टेन साम्ना च तथा देवव्रतेन च ॥६३॥
रथांतरेण पुष्पेण सूक्तेन युक्तेन च। मृत्युंजयेन मंत्रेण तथा पञ्चाक्षरेण च ॥६४॥
जलधाराः सहस्रेण शतेनैकोत्तरेण वा। कर्तव्या वेदमार्गेण नामभिर्वाथ वा पुनः ॥६५॥
ततश्चंदनपुष्पादि रोपणीयं शिवोपरि। दापयेत्प्रणवेनैव मुखवासादिकं तथा ॥६६॥
ततः स्फटिकसंकाशं देवं निष्कलमक्षयम्। कारणं सर्वलोकानां सर्वलोकमयं परम् ॥६७॥
ब्रह्मेन्द्रोपेन्द्रविष्ण्वाद्यैरपि देवैरगोचरम्। वेदविद्भिर्हि वेदांते त्वगोचरमिति स्मृतम् ॥६८॥
आदिमध्यान्तरहितं भेषजं सर्वरोगिणाम्। शिवतत्त्वमिति ख्यातं शिवलिंगं व्यवस्थितम् ॥६९॥
प्रणवेनैव मंत्रेण पूजयेल्लिंगमूर्द्धनि। धूपैर्दीपैश्च नैवेद्यैस्तांबूलैः सुन्दरैस्तथा ॥७०॥
नीराजनेन रम्येण यथोक्तविधिना ततः। नमस्कारैः स्तवैश्चान्यैर्मंत्रैर्नानाविधैरपि ॥७१॥
अर्घ्यं दत्त्वा तु पुष्पाणि पादयोः सुविकीर्य च। प्रणिपत्य च देवेशमात्मनाऽऽराधयेच्छिवम् ॥७२॥
हस्ते गृहीत्वा पुष्पाणि समुत्थाय कृतांजलिः। प्रार्थयेत्पुनरीशानं मंत्रेणानेन शंकरम् ॥७३॥
अज्ञानाद्यदि वा ज्ञानाज्जपपूजादिकं मया। कृतं तदस्तु सफलं कृपया तव शंकर ॥७४॥
पठित्वैवं च पुष्पाणि शिवोपरि मुदा न्यसेत्। ततः स्वस्त्ययनं कृत्वा ह्याशिषो विविधास्तथा ७५॥
मार्जनं तु ततः कार्यं शिवस्योपरि वै पुनः। नमस्कारं ततः क्षांतिं पुनराचमनाय च ॥७६॥
अघोच्चारणमुच्चार्य नमस्कारं प्रकल्पयेत्। प्रार्थयेच्च पुनस्तत्र सर्वभावसमन्वितः ॥७७॥
शिवे भक्तिः शिवे भक्तिः शिवे भक्तिर्भवे भवे। अन्यथा शरणं नास्ति त्वमेव शरणं मम ॥७८॥

इति संप्रार्थ्य देवेशं सर्वसिद्धिप्रदायकम्। पूजयेत्परया भक्त्या गलनादैर्विशेषतः॥
नमस्कारं ततः कृत्वा परिवारगणैः सह। प्रहर्षमतुलं लब्ध्वा कार्यं कुर्याद्यथासुखम्॥
एवं यः पूजयेन्नित्यं शिवभक्तिपरायणः। तस्य वै सकला सिद्धिर्जायते तु पदे पदे॥
वाग्मी स जायते तस्य मनोभीष्टफलं ध्रुवम्। रोगं दुःखं च शोकं च ह्युद्वेगं कृत्रिमं तथा॥
कौटिल्यं च गरं चैव यद्यद्दुःखमुपस्थितम्। तद्दुःखं नाशयत्येव शिवः परः॥
कल्याणं जायते तस्य शुक्लपक्षे यथा शशी। वर्द्धते सद्गुणस्तत्र ध्रुवं शंकरपूजनात्॥
इति पूजाविधिः शंभोः प्रोक्तस्तु मुनिसत्तम। अतः परं च शुश्रूषुः किं प्रष्टासि च नारद॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने शिवपूजाविधिवर्णनो नामैकादशोऽध्यायः ॥११॥

## अथ द्वादशोऽध्यायः

### ( पूजाविधौ सारासारविचारः )

नारद उवाच

ब्रह्मन्प्रजापते तात धन्यस्त्वं शिवसक्तधीः। एतदेव पुनः सम्यग्ब्रूहि मे विस्तराद्विधे॥

ब्रह्मोवाच

एकस्मिन्समये तात ऋषीनाहूय सर्वतः। निर्जरांश्चावदं प्रीत्या सुवचः पद्मसंभवः॥
यदि नित्यसुखे श्रद्धा यदि सिद्धेश्च कामुका। आगंतव्यं मया सार्द्धं तीरं क्षीरपयोनिधेः॥
इत्येतद्वचनं श्रुत्वा गतास्ते हि मया सह। यत्रास्ते भगवान्विष्णुः सर्वेषां हितकारकः॥
तत्र गत्वा जगन्नाथं देवदेवं जनार्दनम्। उपतस्थुः सुरा नत्वा सुकृतांजलयो मुने॥
तान्दृष्ट्वा च तदा विष्णुर्ब्रह्माद्यानमरान्स्थितान्। स्मरञ्छिवपदांभोजमब्रवीत्परमं वचः॥

विष्णुरुवाच

किमर्थमागता यूयं ब्रह्माद्याश्च सुरर्षयः। सर्वं वदत तत्प्रीत्या किं कार्यं विद्यतेऽधुना॥

ब्रह्मोवाच

इति पृष्टास्तदा तेन विष्णुना च मया सुराः।
पुनः प्रणम्य तं प्रीत्या किं कार्यं विद्यतेऽधुना। विनिवेदयितुं कार्यं ह्यब्रुवन्वचनं शुभम्॥

देवा ऊचुः

नित्यं सेवा तु कस्यैव कार्या दुःखापहारिणी ॥ ६ ॥
इत्येतद्वचनं श्रुत्वा भगवान्भक्तवत्सलः। सामरस्य मम प्रीत्या कृपया वाक्यमब्रवीत्॥

श्रीभगवानुवाच

ब्रह्मञ्छृणु सुरैः सम्यक् श्रुतं च भवता पुरा। तथापि कथ्यते तुभ्यं देवेभ्यश्च तथा पुनः ॥११॥
दृष्टं च दृश्यतेऽद्यैव किं पुनः पृच्छ्यतेऽधुना। ब्रह्मन्देवैः समस्तैश्च बहुधा कार्यतत्परैः ॥१२॥
सेव्यः सेव्यः सदा देवः शंकरः सर्वदुःखहा। ममापि कथितं तेन ब्रह्मणोऽपि विशेषतः ॥१३॥
प्रस्तुतं चैव दृष्टं वः सर्वं दृष्टांतमद्भुतम्। त्याज्यं तदर्चनं नैव कदापि सुखमीप्सुभिः ॥१४॥
संत्यज्य देवदेवेशं लिंगमूर्त्तिं महेश्वरम्। तारपुत्रास्तथैवैते नष्टास्तेऽपि सबांधवाः ॥१५॥
मया च मोहितास्ते वै मायया दूरतः कृताः। सर्वे विनष्टाः प्रध्वस्ताः शिवेन रहिता यदा ॥१६॥
तस्मात्सदा पूजनीयो लिंगमूर्तिधरो हरः। सेवनीयो विशेषेण श्रद्धया देवसत्तमः ॥१७॥
शर्वलिङ्गार्चनादेव देवा दैत्याश्च सत्तमाः। अहं त्वं च तथा ब्रह्मन्कथं तद्विस्मृतं त्वया ॥१८॥
तल्लिङ्गमर्चयेन्नित्यं येन केनापि हेतुना। तस्माद्ब्रह्मन्सुरः शर्वः सर्वकामफलेप्सया ॥१९॥
सा हानिस्तन्महाच्छिद्रं सांधता सा च मुग्धता। यन्मुहूर्त्तं क्षणं वापि शिवं नैव समर्चयेत् ॥२०॥
भवभक्तिपरा यं च भवप्रणतचेतसः। भवसंस्मरणा ये च न ते दुःखस्य भाजनाः ॥२१॥
भवनानि मनोज्ञानि मनोज्ञाभरणाः स्त्रियः। धनं च तुष्टिपर्यंतं पुत्रपौत्रादिसंततिः ॥२२॥
आरोग्यं च शरीरं च प्रतिष्ठां चाप्यलौकिकीम्। ये वाञ्छन्ति महाभागाः सुखं वा त्रिदशालयम् ॥
अंते मुक्तिफलं चैव भक्तिं वा परमेशितुः। पूर्वपुण्यातिरेकेण तेऽर्चयंति सदाशिवम् ॥२४॥
योऽर्चयेच्छिवलिंगं वै नित्यं भक्तिपरायणः। तस्य वै सफला सिद्धिर्न स पापैः प्रयुज्यते ॥२५॥

ब्रह्मोवाच

इत्युक्ताश्च तदा देवाः प्रणिपत्य हरिं स्वयम्। लिंगानि प्रार्थयामासुः सर्वकामाप्तये नृणाम् ॥२६॥
तच्छ्रुत्वा च तदा विष्णुर्विश्वकर्माणमब्रवीत्। अहं च मुनिशार्दूल जीवोद्धारपरायणः ॥२७॥
विश्वकर्मन्यथा शंभोः कल्पयित्वा शुभानि च। लिंगानि सर्वदेवेभ्यो देयानि वचनान्मम ॥२८॥
लिंगानि कल्पयित्वैवमधिकारानुरूपतः। विश्वकर्मा ददौ तेभ्यो नियोगान्मम वा हरेः ॥२९॥
तदेव कथयाम्यद्य श्रूयतामृषिसत्तम। पद्मरागमयं शक्रो हैमं विश्रवसः सुतः ॥३०॥
पीतं मणिमयं धर्मो वरुणः श्यामलं शिवम्। इन्द्रं नीलमयं विष्णुर्ब्रह्मा हेममयं तथा ॥३१॥
विश्वेदेवास्तथा रौप्यं वसवश्च तथैव च। आरकूटमयं वापि पार्थिवं ह्यश्विनौ मुने ॥३२॥
लक्ष्मीश्च स्फाटिकं देवी ह्यादित्यास्ताम्रनिर्मितम्। मौक्तिकं सोमराजो वै वज्रलिंगं विभावसुः ॥
तृणमयं चैव विप्रेंद्रा विप्रपत्न्यस्तथैव च। चांदनं च मयो नागः प्रवालमयमादरात् ॥३४॥
नवनीतमयं देवी योगी भस्ममयं तथा। यक्षा दधिमयं लिंगं छाया पिष्टमयं तथा ॥३५॥

शिवलिंगं च ब्रह्माणी रत्नं पूजयति ध्रुवम्। पारदं पार्थिवं बाणः समर्चति परेऽपि वा।
एवंविधानि लिंगानि दत्तानि विश्वकर्मणा। ते पूजयंति सर्वे वै देवा ऋषिगणास्तथा।
विष्णुर्दत्त्वा च लिंगानि देवेभ्यो हितकाम्यया। पूजाविधिं समाचष्ट ब्रह्मणे मे पिनाकिनः।
तच्छ्रुत्वा वचनं तस्य ब्रह्माहं देवसत्तमः। आगच्छं च स्वकं धाम हर्षनिर्भरमानसः।
तत्रागत्य ऋषीन्सर्वादेवांश्चाहं तथा मुने। शिवपूजाविधिं सम्यगब्रुवं सकलेष्टदम्।
श्रूयतामृषयः सर्वे सामराः प्रेमतत्पराः। शिवपूजाविधिं प्रीत्या कथये भुक्तिमुक्तिदम्।
मानुषं जन्म संप्राप्य दुर्लभं सर्वजंतुषु। तत्रापि सत्कुले देवा दुष्प्राप्यं च मुनीश्वराः।
अव्यंगं चैव विप्रेषु साचारेषु सुपुण्यतः। शिवसंतोषहेतोश्च कर्म स्वोक्तं समाचरेत्।
यद्यज्जातिसमुद्दिष्टं तत्तत्कर्म न लंघयेत्। यावद्दानस्य संपत्तिस्तावत्कर्म समाचरेत्।
कर्मयज्ञसहस्रेभ्यस्तपोयज्ञो विशिष्यते। तपोयज्ञसहस्रेभ्यो जपयज्ञो विशिष्यते।
ध्यानयज्ञात्परं नास्ति ध्यानं ज्ञानस्य साधनम्। यतः समरसं स्वेष्टं योगी ध्यानेन पश्यति।

ध्यानयज्ञरतस्यास्य सदा संनिहितश्शिवः।
नास्ति विज्ञानिनां किंचित्प्रायश्चित्तादिशोधनम्॥४७॥

विशुद्धा विद्यया ये च ब्रह्मन्ब्रह्मविदो जनाः। नास्ति क्रिया च तेषां वै सुखं दुःखं विचारतः।
धर्माधर्मौ जपो होमो ध्यानं ध्यानविधिस्तथा। सर्वदा निर्विकारास्ते विद्यया च तथामराः।
परानंदकरं लिंगं विशुद्धं शिवमक्षरम्। निष्कलं सर्वगं ज्ञेयं योगिनां हृदि संस्थितम्।
लिंगं तु द्विविधं प्रोक्तं बाह्यमाभ्यंतरं द्विजाः। बाह्यं स्थूलं समुद्दिष्टं सूक्ष्ममाभ्यंतरं मतम्।
कर्मयज्ञरता ये च स्थूललिंगार्चने रताः। असतां भावनार्थाय सूक्ष्मेण स्थूलविग्रहाः।
आध्यात्मिकं तु यल्लिंगं प्रत्यक्षं यस्य नो भवेत्। स तल्लिंगे तथा स्थूले कल्पयेच्च न चान्यथा।
ज्ञानिनां सूक्ष्मममलं भावात्प्रत्यक्षमव्ययम्। यथा स्थूलमयुक्तानामुत्कृष्टादौ प्रकल्पितम्।
अहो विचारतो नास्ति ह्यन्यत्तत्त्वार्थवादिनः। निष्कलं सकलं चित्ते सर्वं शिवमयं जगत्।
एवं ज्ञानविमुक्तानां नास्ति दोषविकल्पना। विधिश्चैव तथा नास्ति विहिताविहिते तथा।
यथा जलेषु कमलं सलिलैर्नावलिप्यते। तथा ज्ञानी गृहे तिष्ठन्कर्मणा नावबध्यते।
इति ज्ञानं समुत्पन्नं यावन्नैव नरस्य वै। तावच्च कर्मणा देवं शिवमाराधयेन्नरः।
प्रत्ययार्थं च जगतामेकस्थोऽपि दिवाकरः। एकोऽपि बहुधा दृष्टो जलाधारादिवस्तुषु।
दृश्यते श्रूयते लोके यद्यत्सदसदात्मकम्। तत्तत्सर्वं सुरा वित्त परं ब्रह्म शिवात्मकम्।
भेदो जलानां लोकेऽस्मिन्प्रतिभावे विचारतः। एवमाहुस्तथा चान्ये सर्वे वेदार्थतत्त्वगाः।
हृदि संसारिणः साक्षात्सकलः परमेश्वरः। इति विज्ञानयुक्तस्य किं तस्य प्रतिमादिभिः।

इति विज्ञानहीनस्य प्रतिमाकल्पना शुभा। पदमुच्चैः समारोढुं पुंसो ह्यालम्बनं स्मृतम् ॥६३॥
आलम्बनं विना तस्य पदमुच्चैः सुदुष्करम्। निर्गुणप्राप्तये नृणां प्रतिमालम्बनं स्मृतम् ॥६४॥
सगुणान्निर्गुणप्राप्तिर्भवतीति सुनिश्चितम्। एवं च सर्वदेवानां प्रतिमा प्रत्ययावहा ॥६५॥
देवश्चायं महीयान्वै तस्यार्थे पूजनं त्विदम्। गन्धचन्दनपुष्पादि किमर्थं प्रतिमां विना ॥६६॥
तावच्च प्रतिमा पूज्या यावद्विज्ञानसंभवः। ज्ञानाभावे न पूज्येत पतनं तस्य निश्चितम् ॥६७॥
एतस्मात्कारणाद्विप्राः श्रूयतां परमार्थतः। स्वजात्युक्तं तु यत्कर्म कर्तव्यं तत्प्रयत्नतः ॥६८॥
यत्र यत्र यथा भक्तिः कर्तव्यं पूजनादिकम्। विना पूजनदानादि पातकं न च दूरतः ॥६९॥
यावच्च पातकं देहे तावत्सिद्धिर्न जायते। गते च पातके तस्य सर्वं च सफलं भवेत् ॥७०॥
तथा च मलिने वस्त्रे रंगः शुभतरो न हि। क्षालने हि कृते शुद्धे सर्वो रंगः प्रसज्जते ॥७१॥
तथा च निर्मले देहे देवानां सम्यगर्चया। ज्ञानरंगः प्रजायेत तदा विज्ञानसंभवः ॥७२॥
विज्ञानस्य च सन्मूलं भक्तिरव्यभिचारिणी। ज्ञानस्यापि च सन्मूलं भक्तिरेवाभिधीयते ॥७३॥

भक्तेर्मूलं तु सत्कर्म स्वेष्टदेवादिपूजनम्।
तन्मूलं सद्गुरुः प्रोक्तस्तन्मूलं संगतिः सताम् ॥७४॥

संगत्या गुरुराप्येत गुरोर्मंत्रादिपूजनम्। पूजनाज्जायते भक्तिर्भक्त्या ज्ञानं प्रजायते ॥७५॥
विज्ञानं जायते ज्ञानात्परब्रह्मप्रकाशकम्। विज्ञानं च यदा जातं तदा भेदो निवर्तते ॥७६॥
भेदे निवृत्ते सकले द्वंद्वदुःखविहीनता। द्वंद्वदुःखविहीनस्तु शिवरूपो भवत्यसौ ॥७७॥
द्वंद्वाप्राप्तौ न जायेतां सुखदुःखे विजानतः। विहिताविहिते तस्य न स्यातां च सुरर्षयः ॥७८॥
ईदृशो विरलो लोके गृहाश्रमविवर्जितः। यदि लोके भवत्यस्मिन्दर्शनात्पापहारकः ॥७९॥
तीर्थानि श्लाघयंतीह तादृशं ज्ञानवित्तमम्। देवाश्च मुनयः सर्वे परब्रह्मात्मकं शिवम् ॥८०॥
तादृशानि न तीर्थानि न देवा मृच्छिलामयाः। ते पुनंत्युरुकालेन विज्ञानी दर्शनादपि ॥८१॥
यावद्गृहाश्रमे तिष्ठेत्तावदाकारपूजनम्। कुर्याच्छ्रेष्ठस्य सुप्रीत्या सुरेषु खलु पंचसु ॥८२॥
अथवा च शिवः पूज्यो मूलमेकं विशिष्यते। मूले सिक्ते तथा शाखास्तृप्ताः संत्यखिलाः सुराः ॥
शाखासु च सुतृप्तासु मूलं तृप्तं न कर्हिचित्। एवं सर्वेषु तृप्तेषु सुरेषु मुनिसत्तमाः ॥८४॥
सर्वथा शिवतृप्तिर्नो विज्ञेया सूक्ष्मबुद्धिभिः। शिवे च पूजिते देवाः पूजिताः सर्व एव हि ॥८५॥
तस्माच्च पूजयेद्देवं शंकरं लोकशंकरम्। सर्वकामफलावाप्त्यै सर्वभूतहिते रतः ॥८६॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां प्रथमखंडे सृष्ट्युपाख्याने पूजाविधिवर्णने सारासारविचारवर्णनो नाम द्वादशोऽध्यायः ॥१२॥

# अथ त्रयोदशोऽध्यायः

## ( शिवपूजनविधिः )

ब्रह्मोवाच

अतः परं प्रवक्ष्यामि पूजाविधिमनुत्तमम्। श्रूयतामृषयो देवाः सर्वकामसुखावहम्।
ब्राह्मे मुहूर्ते चोत्थाय संस्मरेत्सांबकं शिवम्। कुर्यात्तत्प्रार्थनां भक्त्या सांजलिर्नतमस्तकः।
उत्तिष्ठोत्तिष्ठ देवेश उत्तिष्ठ हृदयेशय। उत्तिष्ठ त्वमुमास्वामिन्ब्रह्माण्डे मंगलं कुरु।
जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः।
त्वया महादेव हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥ ४॥
इत्युक्त्वा वचनं भक्त्या स्मृत्वा च गुरुपादुके। बहिर्गच्छेद्दक्षिणाशां त्यागार्थं मलमूत्रयोः।
देहशुद्धिं ततः कृत्वा समृज्जलविशोधनैः। हस्तौ पादौ च प्रक्षाल्य दंतधावनमाचरेत्।
दिवानाथे त्वनुदिते कृत्वा वै दंतधावनम्। मुखं षोडशवारं तु प्रक्षाल्यांजलिभिस्तथा।
षष्ठ्याद्यमाश्च तिथयो नवम्यर्कदिने तथा। वर्ज्याः सुरर्षयो यत्नाद्भक्तेन रदधावने।
यथावकाशं सुस्नायान्नद्यादिष्वथवा गृहे। देशकालविरुद्धं न स्नानं कार्यं नरेण च।
रवेर्दिने तथा श्राद्धे संक्रान्तौ ग्रहणे तथा। महादाने तथा तीर्थे उपवासदिने तथा।
अशौचेऽप्यथवा प्राप्ते न स्नायादुष्णवारिणा। यथा साभिमुखं स्नायात्तीर्थादौ भक्तिमान्।
तैलाभ्यंगं च कुर्वीत वारान्दृष्ट्वा क्रमेण च। नित्यमभ्यंगके चैव वासितं वा न दूषितम्।
श्राद्धे च ग्रहणे चैवोपवासे प्रतिपद्दिने। अथवा सार्षपं तैलं न दुष्येद्ग्रहणं विना।
देशं कालं विचार्य्यैवं स्नानं कुर्याद्यथाविधि। उत्तराभिमुखश्चैव प्राङ्मुखोऽप्यथवा पुनः।
उच्छिष्टेनैव वस्त्रेण न स्नायात्स कदाचन। शुद्धवस्त्रेण स स्नायात्तद्देवस्मरपूर्वकम्।
परधार्य्यं च नोच्छिष्टं रात्रौ च विधृतं च यत्। तेन स्नानं तथा कार्यं क्षालितं च परित्यजेत्।
तर्पणं च ततः कार्यं देवर्षिपितृतृप्तिदम्। धौतवस्त्रं ततो धार्यं पुनराचमनं चरेत्।
शुचौ देशे ततो गत्वा गोमयाद्यपमार्जिते। आसनं च शुभं तत्र रचनीयं द्विजोत्तमाः।
शुद्धकाष्ठसमुत्पन्नं पूर्णं स्तरितमेव वा। चित्रासनं तथा कुर्यात्सर्वकामफलप्रदम्।
यथायोग्यं पुनर्ग्राह्यं मृगचर्मादिकं च यत्। तत्रोपविश्य कुर्वीत त्रिपुंड्रं भस्मना सुधीः।
जपस्तपस्तथा दानं त्रिपुंड्रात्सफलं भवेत्। अभावे भस्मनस्तत्र जलस्यादि प्रकीर्तितम्।
एवं कृत्वा त्रिपुंड्रं रुद्राक्षान्धारयेन्नरः। संपाद्य च स्वकं कर्म पुनराराधयेच्छिवम्।
पुनराचमनं कृत्वा त्रिवारं मंत्रपूर्वकम्। एकं वाथ प्रकुर्याच्च गंगाबिन्दुरिति ब्रुवन्।

अन्नोदकं तथा तत्र शिवपूजार्थमाहरेत्। अन्यद्वस्तु च यत्किंचिद्यथाशक्ति समीपगम् ॥२४॥
कृत्वा स्थैर्यं च तत्रैव धैर्यमास्थाय वै पुनः। अर्घपात्रं तथा चैकं जलगंधाक्षतैर्युतम् ॥२५॥
दक्षिणांसे तथा स्थाप्यमुपचारस्य क्लृप्तये। गुरोश्च स्मरणं कृत्वा तदनुज्ञामवाप्य च ॥२६॥
संकल्पं विधिवत्कृत्वा कामनां न नियुज्य वै। पूजयेत्परया भक्त्या शिवं सपरिवारकम् ॥२७॥
मुद्रामेकां प्रदर्श्यैव पूजयेद्विघ्नहारकम्। सिंधुरादिपदार्थैश्च सिद्धिबुद्धिसमन्वितम् ॥२८॥
लक्षलाभयुतं तत्र पूजयित्वा नमेत्पुनः। चतुर्थ्यंतैर्नामपदैर्नमोन्तैः प्रणवादिभिः ॥२९॥
क्षमाप्यैनं तदा देवं भ्रात्रा चैव समन्वितम्। पूजयेत्परया भक्त्या नमस्कुर्यात्पुनः पुनः ॥३०॥
द्वारपालं सदा द्वारि तिष्ठंतं च महोदरम्। पूजयित्वा ततः पश्चात्पूजयेद्गिरिजां सतीम् ॥३१॥
चंदनैः कुंकुमैश्चैव धूपैर्दीपैरनेकशः। नैवेद्यैर्विविधैश्चैव पूजयित्वा ततः शिवम् ॥३२॥
नमस्कृत्य पुनस्तत्र गच्छेच्च शिवसन्निधौ। यदि गेहे पार्थिवीं वा राजतीं तथा ॥३३॥
धातुजन्यां तथैवान्यां पारदां वा प्रकल्पयेत्। नमस्कृत्य पुनस्तां च पूजयेद्भक्तितत्परः ॥३४॥
तस्यां तु पूजितायां वै सर्वे स्युः पूजितास्तथा। स्थापयेच्च मृदा लिंगं विधाय विधिपूर्वकम् ॥३५॥
कर्तव्यं सर्वथा तत्र नियमात्स्वगृहे स्थितैः। प्राणप्रतिष्ठां कुर्वीत भूतशुद्धिं विधाय च ॥३६॥
दिक्पालान्पूजयेत्तत्र स्थापयित्वा शिवालये। गृहे शिवः सदा पूज्यो मूलमंत्राभियोगतः ॥३७॥
तत्र तु द्वारपालानां नियमो नास्ति सर्वथा। गृहे लिंगं च मत्पूज्यं तस्मिन्सर्वं प्रतिष्ठितम् ॥३८॥
पूजाकाले च सांगं वै परिवारेण संयुतम्। आवाह्य पूजयेद्देवं नियमोऽत्र न विद्यते ॥३९॥
शिवस्य संनिधिं कृत्वा स्वासनं परिकल्पयेत्। उदङ्मुखस्तदा स्थित्वा पुनराचमनं चरेत् ४०॥
प्रक्षाल्य हस्तौ पश्चाद्वै प्राणायामं प्रकल्पयेत्। मूलमंत्रेण तत्रैव दशावर्तं नयेन्नरः ॥४१॥
पञ्च मुद्राः प्रकर्तव्याः पूजाऽवश्यं करेप्सिताः। एता मुद्राः प्रदर्श्यैव चरेत्पूजाविधिं नरः ॥४२॥
दीपं कृत्वा तदा तत्र नमस्कारं गुरोरथ। बद्ध्वा पद्मासनं तत्र भद्रासनमथापि वा ॥४३॥
उत्तानासनकं कृत्वा पर्यंकासनकं तथा। यथासुखं तथा स्थित्वा प्रयोगं पुनरेव च ॥४४॥
कृत्वा पूजां पुरा जातां वह्नकेनैव तारयेत्। यदि वा स्वयमेवेह गृहे न नियमोऽस्ति च ॥४५॥
पश्चाच्चैवार्घपात्रेण क्षालयेल्लिंगमुत्तमम्। अनन्यमानसो भूत्वा पूजाद्रव्यं निधाय च ॥४६॥
पश्चाच्चावाहयेद्देवं मंत्रेणानेन वै नरः। कैलासशिखरस्थं च पार्वतीपतिमुत्तमम् ॥४७॥
यथोक्तरूपिणं शंभुं निर्गुणं गुणरूपिणम्। पञ्चवक्त्रं दशभुजं त्रिनेत्रं वृषभध्वजम् ॥४८॥
कर्पूरगौरं दिव्यांगं चन्द्रमौलिं कपर्दिनम्। व्याघ्रचर्मोत्तरीयं च गजचर्माम्बरं शुभम् ॥४९॥
वासुक्यादिपरीतांगं पिनाकाद्यायुधान्वितम्। सिद्धयोऽष्टौ च यस्याग्रे नृत्यंतीह निरंतरम् ॥५०॥
जयजयेति शब्दैश्च सेवितं भक्तपुंजकैः। तेजसा दुःसहेनैव दुर्लक्ष्यं देवसेवितम् ॥५१॥

शरण्यं सर्वसत्त्वानां प्रसन्नमुखपंकजम्। वेदैः शास्त्रैर्यथा गीतं विष्णुब्रह्मनुतं सदा।
भक्तवत्सलमानंदं शिवमावाहयाम्यहम्। एवं ध्यात्वा शिवं साम्बमासनं परिकल्पयेत्।
चतुर्थ्यंतपदेनैव सर्वं कुर्याद्यथाक्रमम्। ततः पाद्यं प्रदद्याद्वै ततोऽर्घ्यं शंकराय च।
ततश्चाचमनं कृत्वा शंभवे परमात्मने। पश्चाच्च पंचभिर्द्रव्यैः स्नापयेच्छंकरं मुदा।
वेदमंत्रैर्यथायोग्यं नामभिर्वा समंत्रकैः। चतुर्थ्यंतपदैर्भक्त्या द्रव्याण्येवार्पयेत्तदा।
तथाभिलषितं द्रव्यमर्पयेच्छंकरोपरि। ततश्च वारुणं स्नानं कारणीयं शिवस्य वै।
सुगंधं चंदनं दद्यादन्यलेपानि यत्नतः। ससुगंधजलेनैव जलधारां प्रकल्पयेत्।
वेदमंत्रैः षडंगैर्वा नामभी रुद्रसंख्यया। यथावकाशं तां दत्त्वा वस्त्रेण मार्जयेत्ततः।
पश्चादाचमनं दद्यात्ततो वस्त्रं समर्पयेत्। तिलाश्चैव जवा वापि गोधूमा मुद्गमाषकाः।
अर्पणीयाः शिवायैवं मंत्रैर्नानाविधैरपि। ततः पुष्पाणि देयानि पंचास्याय महात्मने।
प्रतिवक्त्रं यथाध्यानं यथायोग्याभिलाषतः। कमलैः शतपत्रैश्च शंखपुष्पैः परैस्तथा।
कुशपुष्पैश्च धत्तूरैर्मंदारैर्द्रोणसंभवैः। तथा च तुलसीपत्रैर्बिल्वपत्रैर्विशेषतः।
पूजयेत्परया भक्त्या शंकरं भक्तवत्सल। सर्वाभावे बिल्वपत्रमर्पणीयं शिवाय वै।
बिल्वपत्रार्पणेनैव सर्वपूजा प्रसिध्यति। ततः सुगंधचूर्णं वै वासितं तैलमुत्तमम्।
अर्पणीयं च विविधं शिवाय परया मुदा। ततो धूपः प्रकर्तव्यो गुग्गुलागुरुभिर्मुदा।
दीपो देयस्ततस्तस्मै शंकराय घृतप्लुतः। अर्घं दद्यात्पुनस्तस्मै मंत्रेणानेन भक्तितः।
कारयेद्भावतो भक्त्या वस्त्रेण मुखमार्जनम्। रूपं देहि यशो देहि भोगं देहि च शंकर।
भुक्तिमुक्तिफलं देहि गृहीत्वाऽर्घं नमोस्तु ते। ततो देयं शिवायैव नैवेद्यं विविधं शुभम्।
तत आचमनं प्रीत्या कारयेद्वा विलम्बतः। ततश्शिवाय तांबूलं सांगोपांगं विधाय च।
कुर्यादारार्तिकं पञ्चवर्तिकामनुसंख्यया। पादयोश्च चतुर्वारं द्विःकृत्वो नाभिमण्डले।
एककृत्वे मुखे सप्तकृत्वः सर्वांग एव हि। ततो ध्यानं यथोक्तं वै कृत्वा मंत्रमुदीरयेत्।
यथासंख्यं यथाज्ञानं कुर्यान्मन्त्रविधिं नरः। गुरूपदिष्टमार्गेण कृत्वा मंत्रजपं सुधीः।
गुरूपदिष्टमार्गेण कृत्वा मंत्रमुदीरयेत्। यथासंख्यं यथाज्ञानं कुर्यान्मंत्रविधिं नरः।
स्तोत्रैर्नानाविधैः प्रीत्या स्तुवीत वृषभध्वजम्। ततः प्रदक्षिणां कुर्याच्छिवस्य च शनैः शनैः।
नमस्कारांस्ततः कुर्यात्साष्टांगं विधिवत्पुमान्। ततः पुष्पांजलिर्देयो मन्त्रेणानेन भक्तितः।
शंकराय परेशाय शिवसंतोषहेतवे। अज्ञानाद्यदि वा ज्ञानाद्यद्यत्पूजादिकं मया।
कृतं तदस्तु सफलं कृपया तव शंकर। तावकस्त्वद्गतप्राणस्त्वच्चित्तोहं सदा मृड।
इति विज्ञाय गौरीश भूतनाथ प्रसीद मे। भूमौ स्खलितपादानां भूमिरेवावलंबनम्।

स्वात्मजं मुनिवर्यं त्वां सुप्रीत्या देववल्लभम्। समाश्वास्य समादाय प्रत्यपद्यं शुभावहम् ॥ ३
ततः प्रजापतिर्दक्षोऽनुनीतो मे निजस्त्रियाम्। जनयामास दुहितॄः सुभगाः षष्टिसंमिताः ॥ ४
तासां विवाहं कृतवान् धर्मादिभिरतंद्रितः। तदेव शृणु सुप्रीत्या प्रवदामि मुनीश्वर ॥ ५
ददौ दश सुता दक्षो धर्माय विधिवन्मुने। त्रयोदश कश्यपाय मुनये त्रिनवेंदवे ॥ ६
भूतांगिरःकृशाश्वेभ्यो द्वे द्वे पुत्रीः प्रदत्तवान्। तार्क्ष्याय चापराः कन्याः प्रसूतिप्रसवैर्यतः ॥ ७
त्रिलोकाः पूरितास्तन्नो वर्ण्यते व्यासतो भयात् ॥ ८ ॥
केचिद्वदंति तां ज्येष्ठां मध्यमां चापरे शिवाम्। सर्वानन्तरजां केचित्कल्पभेदात्त्रयं च सत् ॥ ९
अनंतरं सुतोत्पत्तेः सपत्नीकः प्रजापतिः। दक्षो दधौ सुप्रीत्या तां मनसा जगदंबिकाम् १०
अतः प्रेम्णा च तुष्टाव गिरा गद्गदया हि सः। भूयो भूयो नमस्कृत्य सांजलिर्विनयान्वितः ॥ ११
सन्तुष्टा सा तदा देवी विचारं मनसीति च। चक्रेऽवतारं वीरिण्यां कुर्यां पणविपूर्तये ॥ १२
अथ सोवाच मनसि दक्षस्य जगदम्बिका। विललास तदातीव स दक्षो मुनिसत्तम ॥ १३
सुमुहूर्तेन दक्षोऽपि स्वपत्न्यां निदधे मुदा। दक्षपत्न्यास्तदा चित्ते शिवोवास दयान्विता १४
आविर्बभूव चिह्नानि दोहदस्याखिलानि वै ॥ १५ ॥
विरेजे वीरिणी तात हृष्टचित्ताधिकं च सा। शिवावासप्रभावात्तु महामङ्गलरूपिणी ॥ १६
कुलस्य संप्रदायैश्च श्रुतेश्चित्तसमुन्नतेः। व्यधत्त सुक्रिया दक्षः प्रीत्या पुंसवनादिकाः १७
उत्सवोऽतीव सञ्जातस्तदा तेषु च कर्मसु। वित्तं ददौ द्विजातिभ्यो यथाकामं प्रजापतिः १८
अथ तस्मिन्नवसरे सर्वे हर्यादयः सुराः। ज्ञात्वा गर्भगतां देवीं वीरिण्यां ते मुदं ययुः १९
तत्रागत्य च सर्वे ते तुष्टुवुर्जगदम्बिकाम्। लोकोपकारकरिणीं प्रणम्य च मुहुर्मुहुः ॥ २०
कृत्वा ततस्ते बहुधा प्रशंसां हृष्टमानसाः। दक्षप्रजापतेश्चैव वीरिण्याः स्वगृहं ययुः ॥ २१
गतेषु नवमासेषु कारयित्वा च लौकिकीम्। गतिं शिवा च पूर्णे सा दशमे मासि नारद ॥ २२
आविर्बभूव पुरतो मातुः सद्यस्तदा मुने। मुहूर्ते सुखदे। चन्द्रग्रहतारानुकूलके ॥ २३
तस्मात्तु जातमात्रायां सुप्रीतोऽसौ प्रजापतिः। शैवदेवीति तां मेने दृष्ट्वा तां तेजसोल्बणाम् २४
तदाऽभूत्पुष्पसद्वृष्टिर्मेघाश्च ववृषुर्जलम्। दिशःशांता द्रुतं तस्यां जातायां च मुनीश्वर २५
अवादयंत त्रिदशाः शुभवाद्यानि खे गताः। जज्वलुश्चाग्नयःशांताः सर्वमासीत्सुमङ्गलम् ॥ २६
वीरिणीसंभवां दृष्ट्वा दक्षस्तां जगदम्बिकाम्। नमस्यकृत्य करौ बद्ध्वा बहु तुष्टाव भक्तितः २७

दक्ष उवाच

महेशानि नमस्तुभ्यं जगदम्बे सनातनि। कृपां कुरु महादेवि सत्ये सत्यस्वरूपिणि ॥ २८
शिवा शांता महामाया योगनिद्रा जगन्मयी। या प्रोच्यते वेदविद्भिर्नमामि त्वां हितावहाम् २९

यया धाता जगत्सृष्टौ नियुक्तस्तां पुराकरोत्। तां त्वां नमामि परमां जगद्धात्रीं महेश्वरीम् ॥३०॥
यया विष्णुर्जगत्स्थित्यै नियुक्तस्तां सदाकरोत्। तां त्वां नमामि परमां जगद्धात्रीं महेश्वरीम् ३१॥
यया रुद्रो जगन्नाशे नियुक्तस्तां सदाकरोत्। तां त्वां नमामि परमां जगद्धात्रीं महेश्वरीम् ॥३२॥
रजः सत्त्वतमोरूपां सर्वकार्यकरीं सदा। त्रिदेवजननीं देवीं त्वां नमामि च तां शिवाम् ॥
यस्त्वां विचिंतयेद्देवि विद्याविद्यात्मिकां पराम्। तस्य भुक्तिश्च मुक्तिश्च सदा करतले स्थिता ३४॥
यस्त्वां प्रत्यक्षतो देवि शिवां पश्यति पावनीम्। तस्यावश्यं भवेन्मुक्तिर्विद्याविद्याप्रकाशिका ॥३५॥
ये स्तुवंति जगन्मातर्भवानीमंबिकेति च। जगन्मायेति दुर्गेति सर्वं तेषां भविष्यति ॥३६॥

ब्रह्मोवाच

इति स्तुता जगन्माता शिवा दक्षेण धीमता। तथोवाच तदा दक्षं यथा माता शृणोति न ३७॥
सर्वं संमोह्य तथ्यं च तथा दक्षः शृणोतु तत्। नान्यस्तथा शिवा प्राह नानोतिः परमेश्वरी ३८॥

देव्युवाच

अहमाराधिता पूर्वं सुतार्थं ते प्रजापते। ईप्सितं तव सिद्धं तु तपो धारय संप्रति ॥३९॥

ब्रह्मोवाच

एवमुक्त्वा तदा देवी दक्षं च निजमायया। आस्थाय शैशवं भावं जनन्यंति रुरोद सा ॥४०॥
अथ तद्रोदनं श्रुत्वा स्त्रियो वाक्यं ससंभ्रमाः। आगतास्तत्र सुप्रीत्या दास्योऽपि च ससंभ्रमाः ॥
दृष्ट्वाऽसिक्नी सुतारूपं ननन्दुः सर्वयोषितः। सर्वे पौरजनाश्चापि चक्रुर्जयरवं तदा ॥४२॥
उत्सवश्च महानासीद्गानवाद्यपुरःसरम्। दक्षोऽसिक्नी मुदं लेभे भीमं दृष्ट्वा सुताननम् ॥४३॥
दक्षः श्रुतिकुलाचारं चक्रे च विधिवत्तदा। दानं ददौ द्विजातिभ्योऽन्येभ्यश्च द्रविणं तथा ४४
बभूव सर्वतो गानं नर्तनं च यथोचितम्। नेदुर्वाद्यानि बहुशः सुमंगलपुरःसरम् ॥४५॥
अथ हर्यादयो देवाः सर्वे चानुचरास्तदा। मुनिवृन्दैः समागत्योत्सवं चक्रुर्यथाविधि ॥४६॥
दृष्ट्वा दक्षसुतामंबां जगतः परमेश्वरीम्। नेमुः सविनयाः सर्वे तुष्टुवुश्च शुभस्तवैः ॥४७॥
ऊचुः सर्वे प्रमुदिता गिरं जयजयात्मिकाम्। प्रशंशसुर्मुदा दक्षं वीरिणीं च विशेषतः ॥४८॥
उमेति नाम चक्रे तस्या दक्षः तदाज्ञया। प्रशस्तायाः सर्वगुणसत्त्वादपि मुदान्वितः ॥४९॥
नामान्यन्यानि तस्यास्तु पश्चाज्जातानि लोकतः। महामंगलदान्येव दुःखघ्नानि विशेषतः ॥५०॥
दक्षस्तदा हरिं नत्वा मां सर्वानमरानपि। मुनीनपि करौ बद्ध्वा स्तुत्वा चानर्च भक्तितः ॥
अथ विष्ण्वादयः सर्वे सुप्रशस्याजनंदनम्। प्रीत्या ययुः स्वधामानि संस्मरन् सशिवं शिवम् ॥
अतस्तां च सुतां माता सुसंस्कृत्य यथोचितम्। शिशुपानेन विधिना तस्यै स्तन्यादिकं ददौ ५३॥
पालिता साथ वीरिण्या दक्षेण च महात्मना। ववृधे शुक्लपक्षस्य यथा शशिकलाऽन्वहम् ॥५४॥

तस्यां सुसद्गुणाः सर्वे विविशुर्द्विजसत्तम। शैशवेऽपि यथा चन्द्रे कलाः सर्वा मनोहराः॥
आचरन्निजभावेन सखीमध्यगता यदा। तदा लिलेख भर्गस्य प्रतिमामन्वहं मुहुः॥
यदा जगौ सुगीतानि शिवा बाल्योचितानि सा। तदा स्थाणुं हरं रुद्रं सस्मार स्मरशासनम्॥
ववृधेऽतीव दंपत्योः प्रत्यहं करुणातुऽला। तस्या बाल्येऽपि भक्तायास्तयोर्नित्यं मुहुर्मुहुः॥
सर्वबालगुणाक्रांतां सदा स्वालयकारिणीम्। तोषयामास पितरौ नित्यं नित्यं मुहुर्मुहुः॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां सतीखण्डे सतीजन्म-
बाललीलावर्णनं नाम चतुर्दशोऽध्यायः ॥१४॥

## अथ पञ्चदशोऽध्यायः

### ( नन्दाव्रतं शिवस्तुतिश्च )

ब्रह्मोवाच

अथैकदा पितुः पार्श्वे तिष्ठंतीं तां सतीमहम्। त्वया सह मुनेऽद्राक्षं सारभूतां त्रिलोकके॥
पित्रा नमस्कृतं वीक्ष्य सत्कृतं त्वां च मां सती। प्रणनाम मुदा भक्त्या लोकलीलानुसारिणी॥
प्रणामांते सतीं वीक्ष्य दक्षदत्तशुभासने। स्थितोऽहं नारद त्वं च विनतामहमागदम्॥
त्वामेव यः कामयते यं तु कामयसे सति। तमाप्नुहि पतिं देवं सर्वज्ञं जगदीश्वरम्॥
यो नान्यां जगृहे नापि गृह्णाति न ग्रहीष्यति। जायां स ते पतिर्भूयादनन्यसदृशः शुभे॥
इत्युक्त्वा सुचिरं तां वै स्थित्वा दक्षालये पुनः। विसृष्टौ तेन संयातौ स्वस्थानं तौ च ना[रद]
दक्षोऽभवच्च सुप्रीतस्तदाकर्ण्य गतज्वरः। आददे तनयां स्वां तां मत्वा हि परमेश्वरीम्॥
इत्थं विहारै रुचिरैः कौमारैर्भक्तवत्सला। जहाववस्थां कौमारीं स्वेच्छाधृतनराकृतिः॥
बाल्यं व्यतीत्य स्म प्राप्य किञ्चियौवनतां सती। अतीव तपसांगेन सर्वांगेषु मनोहरा॥
दक्षस्तां वीक्ष्य लोकेशः प्रोद्भिन्नांतर्वयःस्थिताम्। चिंतयामास भर्गाय कथं दास्य इमां सुता[म्]
अथ सापि स्वयं भर्गं प्राप्तमैच्छत्तदान्वहम्। पितुर्मनोगतिं ज्ञात्वा मातुर्निकटमागता॥
पप्रच्छाज्ञां तपोहेतोः शंकरस्य विशालधीः। मातुः शिवाय वीरिण्याः सा सखी परमेश्वरी॥
ततः सती महेशानं पतिं प्राप्तुं दृढव्रता। सा तमाराधयामास गृहे मातुरनुज्ञया॥
आश्विने मासि नन्दायां तिथावानर्च भक्तितः। गुडौदनैः सलवणैर्हरं नत्वा निनाय तम्॥
कार्तिकस्य चतुर्दश्यामपूपैः पायसैरपि। समाकीर्णैः समाराध्य सस्मार परमेश्वरम्॥
मार्गशीर्षेऽसिताष्टम्यां सतिलैः सयवौदनैः। पूजयित्वा हरं कीलैर्निनाय दिवसान् सती॥
पौषे तु शुक्लसप्तम्यां कृत्वा जागरणं निशि। अपूजयच्छिवं प्रातः कृशरान्नेन सा सती॥

माघे तु पौर्णमास्यां सा कृत्वा जागरणं निशि। आर्द्रवस्त्रा नदीतीरेऽकरोच्छंकरपूजनम् ॥१८॥
तपस्यासितभूतायां कृत्वा जागरणं निशि। विशेषतः समानर्च शैलूषैः सर्वयामसु ॥१९॥
चैत्रे शुक्लचतुर्दश्यां पलाशैर्दमनैः शिवम्। अपूजयद्दिवारात्रौ संस्मरन् सा निनाय तम् ॥२०॥
माघशुक्लतृतीयायां तिलाहारयवौदनैः। पूजयित्वा सती रुद्रं गव्यैर्मासं निनाय तम् ॥२१॥
ज्येष्ठस्य पूर्णिमायां वै रात्रौ संपूज्य शंकरम्। वसनैर्बृहतीपुष्पैर्निराहारा निनाय तम् ॥२२॥
आषाढस्य चतुर्दश्यां शुक्लायां कृष्णवाससा। बृहतीकुसुमैः पूजा रुद्रस्याकारि वै तथा ॥२३॥
श्रावणस्य सिताष्टम्यां चतुर्दश्यां च सा शिवम्। यज्ञोपवीतैर्वासोभिः पवित्रैरप्यपूजयत् ॥२४॥
भाद्रे कृष्णत्रयोदश्यां पुष्पैर्नानाविधैः फलैः। संपूज्य च चतुर्दश्यां चकार जलभोजनम् ॥२५॥
नानाविधैः फलैः पुष्पैः सस्यैस्तत्कालसंभवैः। चक्रे सुनियताहारा जपन्मासे शिवार्चनम् ॥२६॥
सर्वमासे सर्वदिने शिवार्चनरता सती। दृढव्रताऽभवद्देवी स्वेच्छाधृतनराकृतिः ॥२७॥
इत्थं नंदाव्रतं कृत्स्नं समाप्य सुसमाहिता। दध्यौ शिवं सती प्रेम्णा निश्चलाऽभूदनन्यधीः ॥२८॥
एतस्मिन्नंतरे देवा मुनयश्चाखिला मुने। विष्णुं मां च पुरस्कृत्य ययुर्द्रष्टुं सतीतपः ॥२९॥
दृष्टाऽऽगत्य सती देवैर्मूर्ता सिद्धिरिवापरा। शिवध्यानमहामग्ना सिद्धावस्थां गता तदा ॥३०॥
चक्रुः सर्वे सुराः सत्यै मुदा सांजलयो नतिम्। मुनयश्च नतस्कंधा विष्णवाद्याः प्रीतमानसाः ॥३१॥
अथ सर्वे सुप्रसन्नाः विष्णवाद्याश्च सुरर्षयः। प्रशशंसुस्तपस्तस्याः सत्यास्तस्मात्सविस्मयाः ॥३२॥
ततः प्रणम्य तां देवीं पुनस्ते मुनयः सुराः। जग्मुर्गिरिवरं सद्यः कैलासं शिववल्लभम् ॥३३॥
सावित्रीसहितश्चाहं सह लक्ष्म्या मुदान्वितः। वासुदेवोऽपि भगवाञ्जगामाथ हरांतिकम् ॥३४॥
गत्वा तत्र प्रभुं दृष्ट्वा सुप्रणम्य ससंभ्रमाः। तुष्टुवुर्विविधैः स्तोत्रैः करौ बद्ध्वाविनम्रकाः ॥३५॥

देवा ऊचुः

नमो भगवते तुभ्यं यत एतच्चराचरम्। पुरुषाय महेशाय परेशाय महात्मने ॥३६॥
आदिबीजाय सर्वेषां चिद्रूपाय पराय च। ब्रह्मणे निर्विकाराय प्रकृतेः पुरुषस्य च ॥३७॥
य इदं प्रतिपच्येदं येनेदं विचकास्ति हि। यस्मादिदं यतश्चेदं यस्येदं त्वं च यत्रतः ॥३८॥
योऽस्मात्परस्माच्च परो निर्विकारी महाप्रभुः। ईक्षते यः स्वात्मनीदं तं नताः स्म स्वयंभुवम् ॥३९॥
अविद्धदृक् परः साक्षी सर्वात्माऽनेकरूपधृक्। आत्मभूतः परब्रह्म तपंतं शरणं गताः ॥४०॥
न यस्य देवा ऋषयः सिद्धाश्च न विदुः पदम्। कः पुनर्जंतुरपरो ज्ञातुमर्हति वैरितुम् ॥४१॥
दिदृक्षवो यस्य पदं मुक्तसंगाः सुसाधवः। चरंति सुगतिर्नस्त्वं सलोकव्रतमव्रणम् ॥४२॥
सजन्मादि विकारा नो विद्यंते केऽपि दुःखदाः। तथापि मायया त्वं हि गृह्णासि कृपया च तान् ॥
तस्मै नमः परेशाय तुभ्यमाश्चर्यकर्मणे। नमो गिरां विदूराय ब्रह्मणे परमात्मने ॥४४॥

अरूपायोरुरूपाय परायानंतशक्तये। त्रिलोकपतये सर्वसाक्षिणे सर्वगाय च॥
नम आत्मप्रदीपाय निर्वाणसुखसंपदे। ज्ञानात्मने नमस्तेऽस्तु व्यापकायेश्वराय च॥
नैष्कर्म्येण सुलभ्याय कैवल्यपतये नमः। पुरुषाय परेशाय नमस्ते सर्वदाय च॥
क्षेत्रज्ञायात्मरूपाय सर्वप्रत्ययहेतवे॥४८॥
सर्वाध्यक्षाय महते मूलप्रकृतये नमः। पुरुषाय परेशाय नमस्ते सर्वदाय च॥
त्रिनेत्रायेषुवक्त्राय सदाभाषाय ते नमः। सर्वेन्द्रियगुणद्रष्ट्रे निष्कारण नमोऽस्तु ते॥
त्रिलोककारणायाथापवर्गाय नमो नमः। अपवर्गप्रदायाशु शरणागततारिणे॥
सर्वाम्नायागमानां चोदधये परमेष्ठिने। परायणाय भक्तानां गुणानां च नमोऽस्तु ते॥
नमो गुणारणिच्छन्नचिदूष्माय महेश्वर। मूढदुष्प्राप्तरूपाय ज्ञानिहृद्वासिने सदा॥
पशुपाशविमोक्षाय भक्तसन्मुक्तिदाय च। स्वप्रकाशाय नित्यायाव्ययायाजस्रसंविदे॥
प्रत्यग्द्रष्ट्रेऽविकाराय परमैश्वर्यधारिणे।
यं भजन्ति चतुर्वर्गं कामयंतीष्टसद्गतिम्। सोऽभूदकरुणस्त्वं नः प्रसन्नो भव ते नमः॥
एकांतितः कंचनार्थं भक्ता वांछंति यस्य न। केवलं चरितं ते ते गायंति परमंगलम्॥
अक्षरं परमं ब्रह्म तमव्यक्ताकृतिं विभुम्। अध्यात्मयोगगम्यं त्वां परिपूर्णं स्तुमो वयम्॥
अतींद्रियमनाधारं सर्वाधारमहेतुकम्। अनंतमाद्यं सूक्ष्मं त्वां प्रणमामोऽखिलेश्वर॥
हर्यादयोऽखिला देवास्तथा लोकाश्चराचराः। नामरूपविभेदेन फल्ग्व्या च कलया कृताः॥
यथार्चिषोग्नेःसवितुर्याति निर्याति वाऽसकृत्। गभस्तयस्तथायं वै प्रवाहो गौण उच्यते॥
न त्वं देवोऽसुरो मर्त्यो न तिर्यङ् न द्विजः प्रभो। न स्त्री न षंढो न पुमान्कुर्याः सदसन्न किंच
निषेधशेषः सर्वं त्वं विश्वकृद्विश्वपालकः। विश्वलयकृद्विश्वात्मा प्रणताः स्मस्तमीश्वरम्॥
योगरंधितकर्माणो यं प्रपश्यंति योगिनः। योगसंभाविते चित्ते योगेशं त्वां नता वयम्॥
नमोऽस्तु तेऽसह्यवेग शक्तित्रय त्रयीमय। नमः प्रसन्नपालाय नमस्ते भूरिशक्तये॥
कदिंद्रियाणां दुर्गेशानवाप्य परवर्त्मने। भक्तोद्धाररतायाथ नमस्ते गूढवर्चसे॥
यच्छक्त्याऽहंधियात्मानं हंत वेद न मूढधीः। तं दुरत्ययमाहात्म्यं त्वां नताः स्मो महाप्रभु

ब्रह्मोवाच

इति स्तुत्वा महादेवं सर्वे विष्ण्वादिकाः सुराः। तूष्णीमासन्प्रभोरग्रे सद्भक्तिनतकंधराः॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे नंदाव्रतविधानशिवस्तुतिवर्णनं नाम पंचदशोऽध्यायः ॥१५॥

# अथ षोडशोऽध्यायः

## ( ब्रह्मविष्णुकृता शिवप्रार्थना )

### ब्रह्मोवाच

इति स्तुतिं च हर्यादिकृतामाकर्ण्य शंकरः। बभूवातिप्रसन्नो हि विजहास च सूतिकृत् ॥ १ ॥
ब्रह्मविष्णू तु दृष्ट्वा तौ सस्त्रीकौ संगतौ हरः। यथोचितं समाभाष्य पप्रच्छागमनं तयोः ॥ २ ॥

### रुद्र उवाच

हे हरे हे विधे देवा मुनयश्चाद्य निर्भयाः। निजागमनहेतुं हि कथयध्वं सुतत्त्वतः ॥ ३ ॥
किमर्थमागता यूयं किं कार्यं चेह विद्यते। तत्सर्वं श्रोतुमिच्छामि भवत्स्तुत्या प्रसन्नधीः ॥ ४ ॥

### ब्रह्मोवाच

इति पृष्टे हरेणाहं सर्वलोकपितामहः। मुनेऽवोचं महादेवं विष्णुना परिचोदितः ॥ ५ ॥
देवदेव महादेव करुणासागर प्रभो। यदर्थमागतावावां तच्छृणु त्वं सुरर्षिभिः ॥ ६ ॥
विशेषतस्तवैवार्थमागता वृषभध्वज। सहार्थिनः सदायोग्यमन्यथा न जगद्भवेत् ॥ ७ ॥
केचिद्भविष्यंत्यसुरा मम वध्या महेश्वर। हरेर्वध्यास्तथा केचिद्भवतश्चापि केचन ॥८॥
केचित्त्वद्वीर्यजातस्य तनयस्य महाप्रभो। मया वध्याः प्रभो केचिद्भविष्यंत्यसुराः सदा ॥ ९ ॥
तवैव कृपया शंभोः सुराणां सुखमुत्तमम्। नाशयित्वा सुरान् घोराञ्जगत्स्वास्थ्यं सदाभयम् ॥
योगयुक्ते त्वयि सदा रागद्वेषविवर्जिते। दयामात्रैकनिरते न वध्या ह्यथवा तव ॥११॥
आराधितेषु तेष्वीश कथं सृष्टिस्तथा स्थितिः। अतश्च भविता युक्तं नित्यं नित्यं वृषध्वज ॥१२॥
सृष्टिस्थित्यंतकर्माणि न कार्याणि यदा तदा। शरीरभेदमस्माकं मायायाश्च न युज्यते ॥१३॥
एकस्वरूपा हि वयं भिन्नाः कार्यस्य भेदतः। कार्यभेदो न सिद्धेश्चेद्रूपभेदोऽप्रयोजनः ॥१४॥
एक एव त्रिधा भिन्नः परमात्मा महेश्वरः। माया स्वा कारणादेव स्वतंत्रो लीलया प्रभुः ॥
वामाङ्गजो हरिस्तस्य दक्षिणांगभवो ह्यहम्। शिवस्य हृदयाज्जातस्त्वं हि पूर्णतनुः शिवः ॥१६॥
इत्थं वयं त्रिधाभूताः प्रभो भिन्नस्वरूपिणः। शिवाशिवसुतास्तत्त्वं हृदा विद्धि सनातन ॥१७॥
अहं विष्णुश्च सस्त्रीकौ संजातौ कार्यहेतुतः। लोककार्यकरौ प्रीत्या तव शासनतः प्रभो ॥१८॥
तस्माद्विश्वहितार्थाय सुराणां सुखहेतवे। परिगृह्णीष्व भार्यार्थे रामामेकां सुशोभनाम् ॥१९॥
अन्यच्छृणु महेशान पूर्ववृत्तं स्मृतं मया। यन्नः पुरः पुरा प्रोक्तं त्वयैव शिवरूपिणा ॥२०॥
मद्रूपं परमं ब्रह्मन्नीदृशं भवदंगतः। प्रकटीभविता लोके नाम्ना रुद्रः प्रकीर्तितः ॥२१॥
सृष्टिकर्ताऽभवद्ब्रह्मा हरिः पालनकारकः। लयकारी भविष्यामि रुद्ररूपो गुणाकृतिः ॥२२॥

स्त्रियं विवाह्य लोकस्य करिष्ये कार्यमुत्तमम्। इति संस्मृत्य स्वप्रोक्तं पूर्णं कुरु निजं पणम्॥
निदेशस्तव च स्वामिन्नहं सृष्टिकरो हरिः। पालको लयहेतुस्त्वमाविर्भूतः स्वयं शिव॥
त्वां विना न समर्थौ हि आवां च स्वस्वकर्मणि। लोककार्यरतां तस्मादेकां गृह्णीष्व कामिनीं॥
यथा पद्मालया विष्णोःसावित्री च यथा मम। तथा सहचरीं शंभो कांतां गृह्णीष्व संप्रति॥
इति श्रुत्वा वचो मे हि ब्रह्मणः पुरतो हरेः। स मां जगाद लोकेशः स्मेराननमुखो हरः॥

## ईश्वर उवाच

हे ब्रह्मन् हे हरे मे हि युवां प्रियतरौ सदा। दृष्ट्वा वां च ममानंदो भवत्यतितरां खलु॥
युवां सुरविशिष्टौ हि त्रिभवस्वामिनौ किल। कथनं वा गरिष्ठेति भवकार्यरतात्मनोः॥
उचितं न सुरश्रेष्ठौ विवाहकरणं मम। तपोरतविरक्तस्य सदा विदितयोगिनः॥
यो निवृत्तिसुमार्गस्थः स्वात्मारामो निरंजनः। अवधूततनुर्ज्ञानी स्वद्रष्टा कामवर्जितः॥
अविकारी ह्यभोगी च सदाशुचिरमंगलः। तस्य प्रयोजनं लोके कामिन्या किं वदाधुना॥
केवलं योगलग्नस्य ममानंदः सदास्ति वै। ज्ञानहीनस्तु पुरुषो मनुते बहुकामकम्॥
विवाहकरणं लोके विज्ञेयं परबंधनम्। तस्मात्तस्य रुचिर्नो मे सत्यं सत्यं वदाम्यहम्॥
न स्वार्थे मे प्रवृत्तिर्हि सम्यक्स्वार्थविचिंतनात्। तथापि तत्करिष्यामि भवदुक्तं जगद्धितम्॥
मत्वा वचो गरिष्ठं वा नियोक्तिपरिपूर्त्तये। करिष्यामि विवाहं वै भक्तवश्यः सदा ह्यहम्॥
परंतु यादृशीं कांतां ग्रहीष्यामि यथापणम्। तच्छृणुष्व हरे ब्रह्मन् युक्तमेव वचो मम॥
या मे तेजः समर्था हि ग्रहीतुं स्याद्विभागशः। तां निदेशय भार्यार्थे योगिनीं कामरूपिणीम्॥
योगयुक्ते मयि तथा योगिन्येव भविष्यति। कामासक्ते मयि तथा कामिन्येव भविष्यति॥
यमक्षरं वेदविदो निगदंति मनीषिणः। ज्योतीरूपं शिवं ते च चिंतयिष्ये सनातनम्॥
तच्चिंतायां यदासक्तो ब्रह्मन् गच्छामि भाविनीम्। तत्र या विघ्नजननी न भवित्री हताऽस्तु मे॥
त्वं वा विष्णुरहं वापि शिवस्य ब्रह्मरूपिणः। अंशभूता महाभागा योग्यं तदनुचिंतनम्॥
तच्चिंतया विनोद्वाहं स्थास्यामि कमलासन। तस्माज्जायां प्रादिश त्वं मत्कर्मानुगतां सदा॥
तत्राप्येकं पणं मे त्वं शृणु ब्रह्मंश्च मां प्रति। अविश्वासो मदुक्ते चेन्मया त्यक्ता भविष्यति॥

## ब्रह्मोवाच

इति तस्य वचः श्रुत्वाहं स विष्णुर्हरस्य च। सस्मितं मोदितमनोऽवोचं चेति विनम्रकः॥
शृणु नाथ महेशान मार्गिता यादृशी त्वया। निवेदयामि सुप्रीत्या तां स्त्रियं तादृशीं प्रभो॥
उमा सा भिन्नरूपेण संजाता कार्यसाधिनी। सरस्वती तथा लक्ष्मी द्विधारूपा पुरा प्रभो॥
पद्मा कांताऽभवद्विष्णोस्तथा मम सरस्वती। तृतीयरूपा सा नोऽभूल्लोककार्यहितैषिणी॥

दक्षस्य तनया याऽभूत्सती नाम्ना तु सा विभो। सैवेदृशी भवेद्भार्या भवेद्धि हितकारिणी ॥४९॥
सा तपस्यति देवेश त्वदर्थं हि दृढव्रता। त्वां पतिं प्राप्तुकामा वै महातेजोवती सती ॥५०॥
दातुं गच्छ वरं तस्यै कृपां कुरु महेश्वर। तां विवाहय सुप्रीत्या वरं दत्त्वा च तादृशम् ॥५१॥
हरेर्मम च देवानामियं वाञ्छाऽस्ति शंकर। परिपूरय सद्दृष्ट्या पश्यामोत्सवमादरात् ॥५२॥
मंगलं परमं भूयात्त्रिलोकेषु सुखावहम्। सर्वज्वरो विनश्येद्वै सर्वेषां नात्र संशयः ॥५३॥
अथवाऽस्मद्वचःशेषे वदंतं मधुसूदनः। लीलाजाकृतिमीशानं भक्तवत्सलमच्युतः ॥५४॥

### विष्णुरुवाच

देवदेव महादेव करुणाकर शंकर। यदुक्तं ब्रह्मणा सर्वं मदुक्तं तन्न संशयः ॥५५॥
तत्कुरुष्व महेशान कृपां कृत्वा ममोपरि। सनाथं कुरु सद्दृष्ट्या त्रिलोकं सुविवाह्य ताम् ॥५६॥

### ब्रह्मोवाच

इत्युक्त्वा भगवान् विष्णुस्तूष्णीमास मुने सुधीः। तथा स्तुतिं विहस्याह स प्रभुर्भक्तवत्सलः ॥५७॥
ततस्त्वावां च संप्राप्य चाज्ञां स मुनिभिः सुरैः। अगच्छाव स्वेष्टदेशं सस्त्रीकौ परहर्षितौ ॥५८॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे विष्णु-ब्रह्मकृतशिवप्रार्थनावर्णनं नाम षोडशोऽध्यायः ॥१६॥

## अथ सप्तदशोऽध्यायः

### ( सतीवरलाभः )

### ब्रह्मोवाच

इत्युक्ता सर्वदेवैश्च कृता शंभोर्नुतिः परा। शिवाच्च सा वरं प्राप्ता शृणु ह्यादरतो मुने ॥ १ ॥
अथो सती पुनः शुक्लपक्षेऽष्टम्यामुपोषिता। आश्विने मासि सर्वेशं पूजयामास भक्तितः ॥ २ ॥
इति नंदाव्रते पूर्णे नवम्यां दिनभागतः। तस्यास्तु ध्यानमग्नायाः प्रत्यक्षमभवद्धरः ॥ ३ ॥
सर्वाङ्गसुन्दरो गौरः पंचवक्त्रस्त्रिलोचनः। चंद्रभालः प्रसन्नात्मा शितिकंठश्चतुर्भुजः ॥ ४ ॥
त्रिशूलब्रह्मकवराभयधृग् भस्मभास्वरः। स्वर्धुन्या विलसच्छीर्षः सकलाङ्गमनोहरः ॥ ५ ॥
महालावण्यधामा च कोटिचन्द्रसमाननः। कोटिस्मरसमा कांतिः सर्वथा स्त्रीप्रियाकृतिः ॥ ६ ॥
प्रत्यक्षतो हरं वीक्ष्य सती सेहग्विधं प्रभुम्। ववन्दे चरणौ तस्य सुलज्जावनतानना ॥ ७ ॥
अथ प्राह महादेवः सतीं तद्व्रतधारिणीम्। तामिच्छन्नपि भार्यार्थं तपश्चर्याफलप्रदः ॥ ८ ॥

### महादेव उवाच

दक्षनंदिनि प्रीतोऽस्मि व्रतेनानेन सुव्रते। वरं वरय संदास्ये यत्र वाऽभिमतं भवेत् ॥ ९ ॥

ब्रह्मोवाच

जानन्नपीह तद्भावं महादेवो जगत्पतिः। जगौ वरं वृणीष्वेति तद्वाक्यश्रवणेच्छया ॥
सापि त्रपावशा युक्ता वक्तुं नो हृदि यत्स्थितम्। शशाक सा त्वभीष्टं यत्तल्लज्जाच्छादितं पुनः
प्रेममग्नाऽभवत्साति श्रुत्वा शिववचः प्रियम्। तज्ज्ञात्वा सुप्रसन्नोऽभूच्छंकरो भक्तवत्सलः ॥
वरं ब्रूहि वरं ब्रूहि प्राहेति स पुनर्द्रुतम्। सतीभक्तिवशः शंभुरंतर्यामी सतां गतिः ॥
अथ त्रपां स्वां संधाय यदा प्राह हरं सती। यथेष्टं देहि वरद वरमित्यनिवारकम् ॥
तदा वाक्यस्यावसानमनवेक्ष्य वृषध्वजः। भव त्वं मम भार्येति प्राह तां भक्तवत्सलः ॥
एतच्छ्रुत्वा वचस्तस्य साऽभीष्टफलभावनम्। तूष्णीं तस्थौ प्रमुदिता वरं प्राप्य मनोगतम् ॥
सकामस्य हरस्याग्रे स्थिता सा चारुहासिनी। अकरोन्निजभावांश्च हावान्कामविवर्द्धनान् ॥
ततो भावान्समादाय शृंगाराख्यो रसस्तदा। तयोश्चित्ते विवेशाशु कला हावा यथोदितम् ॥
तत्प्रवेशात्तु देवर्षे लोकलीलानुसारिणीः। काऽप्यभिख्या तयोरासीच्चित्राचन्द्रमसोर्यथा ॥
रेजे सती हरं प्राप्य स्निग्धभिन्नांजनप्रभा। चन्द्राभ्यासेऽभ्रलेखेव स्फटिकोज्ज्वलवर्ष्मणः ॥
अथ सा तमुवाचेदं हरं दाक्षायणी मुहुः। सुप्रसन्ना करौ बद्ध्वाऽऽनतका भक्तवत्सलम् ॥

सत्युवाच

देवदेव महादेव विवाहविधिना प्रभो। पितुर्मे गोचरीकृत्य मां गृहाण जगत्पते ॥

ब्रह्मोवाच

एवं सतीवचः श्रुत्वा महेशो भक्तवत्सलः। तथाऽस्त्विति वचः प्राह निरीक्ष्य प्रेमतश्च ताम्
दाक्षायण्यपि तं नत्वा शंभुं विज्ञाप्य भक्तितः। प्राप्याज्ञा मातुरभ्याशमगान्मोहमुदान्विता ॥
हरोऽपि हिमवत्प्रस्थं प्रविश्य च निजाश्रमम्। दाक्षायणीवियोगाद्वै कृच्छ्रं ध्यानपरोऽभवत् ॥
समाधाय मनः शंभुर्लौकिकीं गतिमाश्रितः। चिंतयामास देवर्षे मनसा मां वृषध्वजः ॥
ततः संचिंत्यमानोऽहं महेशेन त्रिशूलिना। पुरस्तात्प्राविशत्तूर्णं हरसिद्धिप्रचोदितः ॥
यत्रासौ हिमवत्प्रस्थे तद्वियोगी हरः स्थितः। सरस्वतीयुतस्तात तत्रैव समुपस्थितः ॥
सरस्वतीयुतं मां च देवर्षे वीक्ष्य स प्रभुः। उत्सुकः प्रेमबद्धश्च सत्या शंभुरुवाच ह ॥

शंभुरुवाच

अहं ब्रह्मन्स्वार्थपरः परिग्रहकृतौ च यत्। तदा स्वत्वमिव स्वार्थे प्रतिभाति ममाधुना ॥
अहमाराधितः सत्यादाक्षायण्याथ भक्तितः। तस्यै वरो मया दत्तो नंदाव्रतप्रभावतः ॥
भर्ता भवेति च तया मत्तो ब्रह्मन् वरो वृतः। मम भार्या भवेत्युक्तं मया तुष्टेन सर्वथा ॥
अथावदत्तदा मां सा सती दाक्षायणी त्विति। पितुर्मे गोचरीकृत्य मां गृहाण जगत्पते ॥

तदप्यंगीकृतं ब्रह्मन्मया तद्भक्तितुष्टितः। सा गता भवनं मातुरहमत्रागतो विधे ॥३४॥
तस्मात्त्वं गच्छ भवनं दक्षस्य मम शासनात्। तां दक्षोऽपि यथा कन्यां दद्यान्मेऽरं तथा वद ॥
सतीवियोगभंगः स्याद्यथा मे त्वं तथा कुरु। समाश्वासय तं दक्षं सर्वविद्याविशारद ॥३६॥

ब्रह्मोवाच

इत्युदीर्य महादेवः सकाशे मे प्रजापतेः। सरस्वतीं विलोक्याशु वियोगवशगोऽभवत् ॥३७॥
तेनाहमपि चाज्ञप्तः कृतकृत्यो मुदान्वितः। प्रावोचं चेति जगतां नाथं तं भक्तवत्सलम् ॥३८॥
यदात्थ भगवञ्शम्भो तद्विचार्य सुनिश्चितम्। देवानां मुख्यः स्वार्थो हि ममापि वृषभध्वज ॥३९॥
दक्षस्तुभ्यं सुतां स्वां च स्वयमेव प्रदास्यति। अहं चापि वदिष्यामि त्वद्वाक्यं तत्समक्षतः ॥४०॥
इत्युदीर्य्य महादेवमहं सर्वेश्वरं प्रभुम्। अगमं दक्षनिलयं स्यंदनेनातिवेगिना ॥४१॥

नारद उवाच

विधे प्राज्ञ महाभाग वद नो वदतां वर। सत्यै गृहागतायै स दक्षः किमकरोत्ततः ॥४२॥

ब्रह्मोवाच

तपस्तप्त्वा वरं प्राप्य मनोऽभिलषितं सती। गृहं गत्वा पितुर्मातुः प्रणाममकरोत्तदा ॥४३॥
मात्रे पित्रेऽथ तत्सख्यं समाचख्यौ महेश्वरात्। वरप्राप्तिः स्वसख्या वै सत्यास्तुष्टास्तु भक्तितः ॥
माता पिता च वृत्तांतं सर्वं श्रुत्वा सखीमुखात्। आनन्दं परमं लेभे चक्रे च परमोत्सवम् ॥४५॥
द्रव्यं ददौ द्विजातिभ्यो यथाभीष्टमुदारधीः। अन्येभ्यश्चांधदीनेभ्यो वीरिणी च महामनाः ॥४६॥
वीरिणी तां समालिंग्य स्वसुतां प्रीतिवर्द्धिनीम्। मूर्ध्न्युपाघ्राय मुदिता प्रशशंसुर्मुहुर्मुहुः ॥४७॥
अथ दक्षः कियत्काले व्यतीते धर्मवित्तमः। चिंतयामास देयेयं स्वसुता शम्भवे कथम् ॥४८॥
आगतोऽपि महादेवः प्रसन्नः स जगाम ह। पुनरेव कथं सोऽपि सुतार्थेऽत्रागमिष्यति ॥४९॥
प्रस्थाप्योऽथ मया कश्चिच्छंभोर्निकटमंजसा। नैतद्योग्यं न गृह्णीयाद्यद्येवं विफलार्दना ॥५०॥
अथवा पूजयिष्यामि तमेव वृषभध्वजम्। मदीयतनयाभक्त्या स्वयमेव यथा भवेत् ॥५१॥
तथैव पूजितः सोऽपि वाञ्छत्यार्यप्रयत्नतः। शंभुर्भवतु मद्भर्त्तेत्येवं दत्तवरेण तत् ॥५२॥
इति चिंतयतस्तस्य दक्षस्य पुरतोऽन्वहम्। उपस्थितोऽहं सहसा सरस्वत्यन्वितस्तदा ॥५३॥
मां दृष्ट्वा पितरं दक्षः प्रणम्यावनतः स्थितः। आसनं च ददौ मह्यं स्वभवाय यथोचितम् ॥५४॥
ततो मां सर्वलोकेशं तत्रागमनकारणम्। दक्षः पप्रच्छ स क्षिप्रं चिंताविष्टोऽतिहर्षितः ॥५५॥

दक्ष उवाच

तवात्रागमने हेतुः कः प्रवेशे स सृष्टिकृत्। ममोपरि सुप्रसादं कृत्वाऽऽचक्ष्व जगद्गुरो ॥५६॥

पुत्रस्नेहात्कार्यवशादथवा लोककारक। ममाश्रमं समायातो रुष्टस्य तव दर्शनात्॥

ब्रह्मोवाच

इति पृष्टः स्वपुत्रेण दक्षेण मुनिसत्तम। विहसन्नब्रुवं वाक्यं मोदयंस्तं प्रजापतिम्॥
शृणु दक्ष यदर्थं त्वत्समीपमहमागतः। त्वत्तो कस्य हितं मेऽपि भवतोऽपि तदीप्सितम्
तव पुत्री समाराध्य महादेवं जगत्पतिम्। यो वरः प्रार्थितस्तस्य समयोऽयमुपागतः॥
शंभुना तव पुत्र्यर्थं त्वत्सकाशमहं ध्रुवम्। प्रस्थापितोऽस्मि यत्कृत्यं श्रेयस्तदवधारय॥
वरं दत्त्वा गतो रुद्रस्तावत्प्रभृति शंकरः। त्वत्सुताया वियोगेन न शर्म लभतेंऽजसा॥
अलब्धच्छिद्रमदनो जिगाय गिरिशं न यम्। सर्वैः पुष्पमयैर्बाणैर्यत्नं कृत्वापि भूरिशः॥
स कामबाणाविद्धोऽपि परित्यज्यात्मचिंतनम्। सतीं विचिंतयन्नास्ते व्याकुलः प्राकृतो यथा
विस्मृत्य प्रश्रुतां वाणीं गणाग्रे विप्रयोगतः। क्व सतीत्येवमभितो भाषते नक्तावपि॥
मया यद्वांछितं पूर्वं त्वया च मदनेन च। मरीच्याद्यैर्मुनिवरैस्तत्सिद्धमधुना सुत॥
त्वत्पुत्र्याराधितः शंभुः सोऽपि तस्या विचिंतनात्। अनुशोधयितुं प्रेप्सुर्वर्त्तते हिमवद्गिरौ॥
यथा नानाविधैर्भावैः सत्त्वात्तेन व्रतेन च। शंभुराराधितस्तेन तथैवाराध्यते सती॥
तस्मात्तु दक्ष तनयां शंभ्वर्थं परिकल्पिताम्। तस्मै देह्यविलंबेन कृता ते कृतकृत्यता॥
अहं तमानयिष्यामि नारदेन त्वदालयम्। तस्मै त्वमेनां संयच्छ तदर्थे परिकल्पिताम्॥
श्रुत्वा मम वचश्चेति स मे पुत्रोऽतिहर्षितः। एवमेवेति मां दक्ष उवाच परहर्षितः॥
ततः सोऽहं मुने तत्रागममत्यंतहर्षितः। उत्सुको लोकनिरतो गिरिशो यत्र संस्थितः॥
गते नारद दक्षोऽपि सदारतनयो ह्यपि। अभवत्पूर्णकामस्तु पीयूषैरिव पूरितः॥

इति श्रीशैवे महापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे सतीवरलाभो नाम सप्तदशोऽध्यायः ॥१७॥

## अथाष्टादशोऽध्यायः

### ( शिवसतीविवाहः )

नारद उवाच

रुद्रपार्श्वे त्वयि गते किमभूच्चरितं ततः। का वार्ता ह्यभवत्तात किं चकार हरः स्वयम्॥

ब्रह्मोवाच

अथाहं शिवमानेतुं प्रसन्नः परमेश्वरम्। आसदं हि महादेवं हिमवद्गिरिसंस्थितम्॥
मां वीक्ष्य लोकस्रष्टारमायांतं वृषभध्वजः। मनसा संशयं चक्रे सतीप्राप्तौ मुहुर्मुहुः॥

अथ प्रीत्या हरो लोके गतिमाश्रित्य लीलया। सत्या भक्त्या च मां क्षिप्रमुवाच प्राकृतो यथा॥

ईश्वर उवाच

किमकार्षीत्सुरज्येष्ठ सत्यर्थे त्वत्सुतः स माम्। कथयस्व यथा स्वांतं न दीर्येन्मन्मथेन हि॥ ५॥
धावमानो विप्रयोगो मामेव च सतीं प्रति। अभिहंति सुरज्येष्ठ त्यक्त्वाऽन्यां प्राणधारिणीम्॥
सतीति सततं ब्रह्मन् वद कार्यं करोम्यहम्। अभेदान्मम सा प्राप्या तद्विधे क्रियतां तथा ७॥

ब्रह्मोवाच

इति रुद्रोक्तवचनं लोकाचारसुगर्भितम्। श्रुत्वाऽहं नारदमुने सांत्वयन्नगदं शिवम्॥ ८॥
सत्यर्थं यन्मम सुतो वदतिस्म वृषध्वज। तच्छृणुष्व निजासाध्यं सिद्धमित्यवधारय॥ ९॥
देया तस्मै मया पुत्री तदर्थं परिकल्पिता। ममाभीष्टमिदं कार्यं त्वद्वाक्यादधिकं पुनः॥१०॥
मत्पुत्र्याऽऽराधितः शंभुरेतदर्थं स्वयं पुनः। सोऽप्यन्विष्यति मां यस्मात्तदा देय मया हरे॥
शुभे लग्ने सुमुहूर्ते समागच्छतु सेति किम्। तदा दास्यामि तनयां भिक्षार्थं शंभवे विधे॥१२॥
इत्युवाच स मां दक्षस्तस्मात्त्वं वृषभध्वज। शुभे मुहूर्ते तद्वेश्म गच्छ तामानयस्व च॥१३॥
इति श्रुत्वा मम वचो लौकिकीं गतिमाश्रितः। उवाच विहसन्रुद्रो मुने मां भक्तवत्सलः॥१४॥

रुद्र उवाच

गमिष्ये भवता सार्द्धं नारदेन च तद्गृहम्। अयमेव जगत्स्रष्टस्तस्मात्त्वं नारदं स्मर॥१५॥
मरीच्यादीन् स्वपुत्रांश्च मानसानपि संस्मर। तैः सार्द्धं दक्षनिलयं गमिष्ये सगणो विधे॥१६॥

ब्रह्मोवाच

इत्याज्ञप्तोऽहमीशेन लोकाचारपरेण ह। संस्मरं नारदं त्वां च मरीच्यादीन्सुतांस्तथा॥१७॥
ततः समागताः सर्वे मानसास्तनयास्त्वया। मम स्मरणमात्रेण हृष्टास्ते द्रुतमादरात्॥१८॥
विष्णुः समागतस्तूर्णं स्मृतो रुद्रेण शैवराट्। सस्वसैन्यः कमलया गरुडारूढ एव च॥१९॥
अथ चैत्रसिते पक्षे नक्षत्रे भगदैवते। त्रयोदश्यां दिने भानौ निर्गच्छत्स महेश्वरः॥२०॥
सर्वैः सुरगुणैः सार्द्धं ब्रह्मविष्णुपुरःसरैः। तथा तैर्मुनिभिर्गच्छन् स बभौ पथि शंकरः॥२१॥
मार्गे समुत्सवो जातो देवादीनां च गच्छताम्। तथा हरगणानां च सानंदमनसामति॥२२॥
गजगोव्याघ्रसर्पाश्च जटाचन्द्रकला तथा। जग्मुः सर्वे भूषणत्वं यथायोग्यं शिवेच्छया॥२३॥
ततः क्षणेन बलिना बलीवर्देन वेगिना। सविष्णुप्रमुखः प्रीत्या प्राप दक्षालयं हरः॥२४॥
ततो दक्षो विनीतात्मा संप्रहृष्टतनूरुहः। प्रययौ सम्मुखं तस्य संयुक्तः सकलैर्निजैः॥२५॥
सर्वे सुरगणास्तत्र स्वयं दक्षेण सत्कृताः। पार्श्वे श्रेष्ठं च मुनिभिरुपविष्टा यथाक्रमम्॥२६॥

परिवार्याखिलान्देवान्गणांश्च मुनिभिर्यथा। दक्षः समानयामास गृहाभ्यंतरतश्शिवम्॥
अथ दक्षः प्रसन्नात्मा स्वयं सर्वेश्वरं हरम्। समानर्च विधानेन दत्त्वासनमनुत्तमम्॥
ततो विष्णुं च मां विप्रान्सुरान्सर्वान्गणांस्तथा। पूजयामास सद्भक्त्या यथोचितविधानतः॥
कृत्वा यथोचितां पूजां तेषां पूज्यादिभिस्तथा। चकार संविदं दक्षो मुनिभिर्मानसः पुनः॥
ततो मां पितरं प्राह दक्षः प्रीत्या हि मत्सुतः। प्रणिपत्य त्वया कर्म कार्यं वैवाहिकं विभो॥
बाढमित्यहमप्युक्त्वा प्रहृष्टेनांतरात्मना। समुत्थाय ततोऽकार्षं तत्कार्यमखिलं तथा॥
ततः शुभे मुहूर्ते हि लग्ने ग्रहबलान्विते। सतीं निजसुतां दक्षो ददौ हर्षेण शंभवे॥
उद्वाहविधिना सोऽपि पाणिं जग्राह हर्षितः। दाक्षायण्या वरतनोस्तदानीं वृषभध्वजः॥
अहं हरिस्त्वदाद्या वै मुनयश्च सुरा गणाः। नेमु सर्वैः संस्तुतिभिस्तोषयामासुरीश्वरम्॥
समुत्सवो महानासीन्नृत्यगानपुरःसरः। आनन्दं परमं जग्मुः सर्वे मुनिगणाः सुराः॥
कन्यां दत्त्वा कृतार्थोऽभूत्तदा दक्षो हि मत्सुतः। शिवाशिवौ प्रसन्नौ च निखिलं मंगलालयः॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे कन्यादानवर्णनं नामाष्टादशोऽध्यायः ॥१८॥

## अथैकोनविंशोऽध्यायः

### ( शिवलीलावर्णनम् )

ब्रह्मोवाच

कृत्वा दक्षः सुतादानं यौतुकं विविधं ददौ। हराय सुप्रसन्नश्च द्विजेभ्यो विविधं धनम्॥
अथ शंभुमुपागत्य समुत्थाय कृतांजलिः। सार्द्धं कमलया चेदमुवाच गरुडध्वजः॥

विष्णुरुवाच

देवदेव महादेव करुणासागर प्रभो। त्वं पिता जगतां तात सती माताखिलस्य च॥
युवां लीलावतारौ वै सतां क्षेमाय सर्वदा। खलानां निग्रहार्थाय श्रुतिरेषा सनातनी॥
स्निग्धनीलांजनश्यामशोभया शोभसे हर। दाक्षायण्या यथा चाहं प्रतिलोमेन पद्मया॥
देवानां वा नृणां रक्षां कुरु सत्याऽनया सताम्। संसारसारिणां शम्भो मंगलं सर्वदा तथा॥
य एनां साभिलाषो वै दृष्ट्वा श्रुत्वाथवा भवेत्। तं हन्याः सर्वभूतेश विज्ञप्तिरिति मे प्रभो॥

ब्रह्मोवाच

इति श्रुत्वा वचो विष्णोर्विहस्य परमेश्वरः। एवमस्त्विति सर्वज्ञ प्रोवाच मधुसूदनम्॥
स्वस्थानं हरिरागत्य स्थित आसीन्मुनीश्वर। उत्सवं कारयामास जुगोप चरितं च तत्॥

अहं देवीं समागत्य गृह्योक्तविधिनाऽखिलम्। अग्निकार्यं यथोद्दिष्टमकार्षं च सुविस्तरम् ॥१०॥
ततश्शिवा शिवश्चैव यथाविधि प्रहृष्टवत्। अग्नेः प्रदक्षिणं चक्रे मदाचार्यद्विजाज्ञया ॥११॥
तदा महोत्सवस्तत्राद्भुतोऽभूद्द्विजसत्तम। सर्वेषां सुखदं वाद्यं गीतनृत्यपुरःसरम् ॥१२॥
तदानीमद्भुतं तत्र चरितं समभूदति। सुविस्मयकरं तात तच्छृणु त्वं वदामि ते ॥१३॥
दुर्ज्ञेया शांभवी माया तया संमोहितं जगत्। सचराचरमत्यंतं सदेवासुरमानुषम् ॥१४॥
योऽहं शंभुं मोहयितुं पुरेच्छं कपटेन ह। मां च तं शंकरस्तात मोहयामास लीलया ॥१५॥
इच्छेत्परापकारं यः स तस्यैव भवेद्ध्रुवम्। इति मत्वाऽपकारं नो कुर्यादन्यस्य पूरुषः ॥१६॥
प्रदक्षिणां प्रकुर्वंत्या वह्नेः सत्याः पदद्वयम्। आविर्बभूव वसनात्तदद्राक्षमहं मुने ॥१७॥
मदनाविष्टचेताश्च भूत्वांगानि व्यलोकयम्। अहं सत्या द्विजश्रेष्ठ शिवमायाविमोहितः ॥१८॥
यथा यथाहं रम्याणि व्यैक्षमंगानि कौतुकात्। सत्या बभूव संहृष्टः कामार्तो हि यथा तथा ॥१९॥
अहमेवं तथा दृष्ट्वा दक्षजां च पतिव्रताम्। स्मराविष्टमना वक्त्रं द्रष्टुकामोऽभवं मुने ॥२०॥
न शंभोर्लज्जया वक्त्रं प्रत्यक्षं च विलोकितम्। न च सा लज्जयाविष्टा करोति प्रकटं मुखम् ॥२१॥
ततस्तद्दर्शनार्थाय सदुपायं विचारयन्। धूम्रघोरेण कामार्तोऽकार्षं तच्च ततः परम् ॥२२॥
आर्द्रेन्धनानि भूरीणि क्षिप्त्वा तत्र विभावसौ। स्वल्पाज्याहुतिविन्यासादार्द्रद्रव्योद्भवस्तथा ॥२३॥
प्रादुर्भूतस्ततो धूमो भूयांस्तत्र समंततः। तादृग् येन तमोभूतं वेदीभूमिविनिर्मितम् ॥२४॥
तमो धूमाकुले नेत्रे महेशः परमेश्वरः। हस्ताभ्यां छादयामास बहुलीलाकरः प्रभुः ॥२५॥
ततो वस्त्रं समुत्क्षिप्य सतीवक्त्रमहं मुने। अवेक्षं किल कामार्तः प्रहृष्टेनांतरात्मना ॥२६॥
मुहुर्मुहुरहं तात पश्यामि स्म सतीमुखम्। अथेन्द्रियविकारं च प्राप्तवानस्मि सोऽवशः ॥२७॥
मम रेतः प्रचस्कंद ततस्तद्वीक्षणाद्द्रुतम्। चतुर्बिन्दुमितं भूमौ तुषारचयसंनिभम् ॥२८॥
तपोऽहं शंकितो मौनी तत्क्षणं विस्मितो मुने। आच्छादये स्म तद्रेतो यथा कश्चिद्बुबोध न ॥२९॥
अथ तद्भगवाञ्छंभुर्ज्ञात्वा दिव्येन चक्षुषा। रेतोऽवस्कंदनात्तस्य कोपादेतदुवाच ह ॥३०॥

## रुद्र उवाच

किमेतद्विहितं पाप त्वया कर्म विगर्हितम्। विवाहे मम कांताया वक्त्रं दृष्टं न रागतः ॥३१॥
त्वं वेत्सि शंकरेणैतत्कर्म ज्ञातं न किंचन। त्रैलोक्येऽपि न मेऽज्ञातं गूढं तस्मात्कथं विधे ॥३२॥
यत्किंचित्त्रिषु लोकेषु जंगमं स्थावरं तथा। तस्याहं मध्यगो मूढ तैलं यद्वत्तिलांतिगम् ॥३३॥

## ब्रह्मोवाच

इत्युक्त्वा प्रियविष्णुर्मां तदा विष्णुवचः स्मरन्। इयेष हंतुं ब्रह्माणं शूलमुद्यम्य शंकरः ॥३४॥

शंभुनोद्यमिते शूले मां च हंतुं द्विजोत्तम। मरीचिप्रमुखास्ते वै हाहाकारं च चक्रिरे॥
ततो देवगणाः सर्वे मुनयश्चाखिलास्तथा। तुष्टुवुः शंकरं तत्र प्रज्वलन्तं भयातुराः॥

## देवा ऊचुः

देव देव महादेव शरणागतवत्सल। ब्रह्माणं रक्ष रक्षेश कृपां कुरु महेश्वर॥
जगत्पिता महेश त्वं जगन्माता सती मता। हरिब्रह्मादयः सर्वे तव दासाः सुरप्रभो॥
अद्भुताकृतिलीलस्त्वं तव मायाऽद्भुता प्रभो। तया विमोहितं सर्वं विना त्वद्भक्तिमीश्वर॥

## ब्रह्मोवाच

इत्थं बहुतरं दीना निर्जरा मुनयश्च ते। तुष्टुवुर्देवदेवेशं क्रोधाविष्टं महेश्वरम्॥
दक्षो मैवं मैवमिति पाणिमुद्यम्य शंकितः। वारयामास भूतेशं क्षिप्रमेत्य पुरोगतः॥
अथाग्रेशं गतं वीक्ष्य तदा दक्षं महेश्वरः। प्रत्युवाचाप्रियमिदं संस्मरन्प्रार्थनां हरेः॥

## महेश्वर उवाच

विष्णुना मेऽतिभक्तेन यदिदानीमुदीरितम्। मयाप्यंगीकृतं कर्तुं तदिहैव प्रजापते॥
सतीं यः साभिलाषः सन् वीक्षेत वध तं प्रभो। इति विष्णुवचः सत्यं विधिं हत्वा करोम्यहम्॥
साभिलाषः कथं ब्रह्मा सतीं समवलोकयत्। अभवत्त्यक्तरेतास्तु ततो हन्मि कृतागसम्॥

## ब्रह्मोवाच

इत्युक्तवति देवेशे महेशे क्रोधसंकुले। चकंपिरे जनाः सर्वे सदेवमुनिमानुषाः॥
हाहाकारो महानासीदौदासीन्यं च सर्वशः। अभूवं विकलोऽतीव तदाहं तद्विमोहकः॥
अथ विष्णुर्महेशातिप्रियकार्यविचक्षणः। तमेवंवादिनं रुद्रं तुष्टाव प्रणतः सुधीः॥
स्तुत्वा च विविधैः स्तोत्रैः शंकरं भक्तवत्सलम्। इदमूचे वारयंस्तं क्षिप्रं भूत्वाः पुरःसरः॥

## विष्णुरुवाच

विधिं न जहि भूतेश स्रष्टारं जगतां प्रभुम्। अयं शरणगस्तेऽद्य शरणागतवत्सल॥
अहं तेऽतिप्रियो भक्तो भक्तराज इतीरितः। विज्ञप्तिं हृदि मे मत्वा कृपां कुरु ममोपरि॥
अन्यच्च शृणु मे नाथ वचनं हेतुगर्भितम्। तन्मनुष्व महेशान कृपां कृत्वा ममोपरि॥
प्रजाः स्रष्टुमयं शंभो प्रादुर्भूतश्चतुर्मुखः। अस्मिन् हते प्रजास्रष्टा नास्त्यन्यः प्राकृतोऽधुना॥
सृष्टिस्थित्यंतकर्माणि करिष्यामः पुनः पुनः। त्रयो देवा वयं नाथ शिवरूप त्वदाज्ञया॥
एतस्मिन्निहते शम्भो कस्त्वत्कर्म करिष्यति। तस्मान्न वध्यो भवता सृष्टिकृल्लयकृद्विभो॥
अनेनैव सती कन्या दक्षस्य च शिवा विभो। सदुपायेन वै भार्या भवदर्थे प्रकल्पिता॥

ब्रह्मोवाच

इत्याकर्ण्य महेशस्तु विज्ञप्तिं विष्णुना कृताम्। प्रत्युवाचाखिलांस्तांश्च श्रावयंश्च दृढव्रतः ॥५७॥

महेश उवाच

देवदेव रमेशान विष्णो मत्प्राणवल्लभ। न निवारय मां तात वधादस्य खलस्त्वयम् ॥५८॥
पूरयिष्यामि विज्ञप्तिं पूर्वोक्तेंऽगीकृतां मया। महापापकरं दुष्टं हन्म्येनं चतुराननम् ॥५९॥
अहमेव प्रजाः स्रक्ष्ये सर्वाः स्थिरचरा अपि। अन्यं स्रक्ष्ये सृष्टिकरमथवाऽहं स्वतेजसा ॥६०॥
हत्वैनं विधिमेवाहं स्वपणं पूरयन् कृतम्। स्रष्टारमेकं स्रक्ष्यामि न निवारय मश मां माम् ॥६१॥

ब्रह्मोवाच

इति तस्य वचः श्रुत्वा गिरीशस्याह चाच्युतः। स्मितप्रभिन्नहृदयः पुनर्मैवमितीरयन् ॥६२॥

अच्युत उवाच

प्रतिज्ञापूरणं योग्यं परस्मिन्पुरुषेऽस्ति वै। विचारयस्व वध्येश भवत्यात्मनि न प्रभो ॥६३॥
त्रयो देवा वयं शंभो त्वदात्मानः परा नहि। एकरूपा न भिन्नाश्च तत्त्वतः सुविचारय ॥६४॥
ततस्तद्वचनं श्रुत्वा विष्णोः स्वातिप्रियस्य सः। शंभूरूचे पुनस्तं वै ख्यापयन्नात्मनो गतिम् ॥६५॥

शम्भुरुवाच

हे विष्णो सर्वभक्तेश कथमात्मा विधिर्मम। लक्ष्यते भिन्न एवायं प्रत्यक्षेणाग्रतः स्थितः ॥६६॥

ब्रह्मोवाच

इत्याज्ञप्तो महेशेन सर्वेषां पुरतस्तदा। इदमूचे महादेवं तोषयन् गरुडध्वजः ॥६७॥

विष्णुरुवाच

न ब्रह्मा भवतो भिन्नो न त्वं तस्मात्सदाशिव। न वाहं भवतो भिन्नो न मत्त्वं परमेश्वर ॥६८॥
सर्वं जानासि सर्वज्ञ परमेश सदाशिव। मन्मुखादखिलात्सर्वं संश्रावयितुमिच्छसि ॥६९॥
त्वदाज्ञया वदामीश शृण्वंतु निखिलाः सुराः। मुनयश्चापरे शैवं तत्त्वं संधार्य स्वं मनः ॥७०॥
प्रधानस्याऽप्रधानस्य भागाभागस्य रूपिणः। ज्योतिर्मयस्य भागास्ते वयं देवाः प्रभोस्त्रयः ॥७१॥
कस्त्वं कोऽहं च को ब्रह्मा तवैव परमात्मनः। अंशत्रयमिदं भिन्नं सृष्टिस्थित्यंतकारणम् ॥७२॥
चिंतयस्वात्मनात्मानं स्वलीलाधृतविग्रहः। एकस्त्वं ब्रह्म सगुणो ह्यंशभूता वयं त्रयः ॥७३॥
शिरोग्रीवादिभेदेन यथैकस्यैव वर्ष्मणः। अंगानि ते तथेशस्य तस्य भागत्रयं हर ॥७४॥

यज्ज्योतिरभ्रं स्वपुरं पुराणं कूटस्थमव्यक्तमनंतरूपम्।
नित्यं च दीर्घादिविशेषणाद्यैर्हीनं शिवस्त्वं तत एव सर्वम् ॥७५॥

### ब्रह्मोवाच

एतच्छ्रुत्वा वचस्तस्य महादेवो मुनीश्वर। बभूव सुप्रसन्नश्च न जघान स मां ततः॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखण्डे
सतीविवाहशिवलीलावर्णनं नामैकोनविंशोऽध्यायः ॥१६॥

## अथ विंशोऽध्यायः

### ( सतीविवाहोत्सवः )

### नारद उवाच

ब्रह्मन् विधे महाभाग शिवभक्त वरप्रभो। श्रावितं चरितं शंभोरद्भुतं मंगलायनम्॥१
ततः किमभवत्तात कथ्यतां शशिमौलिना। सत्याश्च चरितं दिव्यं सर्वाघौघविनाशनम्॥२

### ब्रह्मोवाच

निवृत्ते शंकरे चास्मद्वधाद्भक्तानुकंपिनि। अभवन्निर्भयाः सर्वे सुखिनः सुप्रसन्नकाः॥३
नतस्कंधाः सांजलयः प्रणेमुर्निखिलाश्च ते। तुष्टुवुः शंकरं भक्त्या चक्रुर्जयरवं मुदा॥४
एतस्मिन्नेव कालेऽहं प्रसन्नो निर्भयो मुने। अस्तवं शंकरं भक्त्या विविधैश्च शुभस्तवैः॥५
ततस्तुष्टमनाः शंभुर्बहुलीलाकरः प्रभुः। मुने मां समुवाचेदं सर्वेषां शृण्वतां तदा॥६

### रुद्र उवाच

ब्रह्मन् तात प्रसन्नोऽहं निर्भयस्त्वं भवाधुना। स्वशीर्षं स्पृश हस्तेन मदाज्ञां कुर्वसंशयम्॥७

### ब्रह्मोवाच

इत्याकर्ण्य वचः शंभोर्बहुलीलाकृतः प्रभोः। स्पृशन् स्वं कं तथा भूत्वा प्राणमं वृषभध्वजम्॥८
यावदेवमहं स्वं कं स्पृशामि निजपाणिना। तावत्तत्र स्थितं सद्यः तद्रूपवृषवाहनम्॥६
ततो लज्जापरीतांगः स्थितश्चाहमधोमुखः। इन्द्राद्यैरमरैः सर्वैः सुदृष्टः सर्वतः स्थितैः॥१
अथाहं लज्जयाऽऽविष्टः प्रणिपत्य महेश्वरम्। प्रावोचं संस्तुतिं कृत्वा क्षम्यतां क्षम्यतामिति॥१
अस्य पापस्य शुद्ध्यर्थं प्रायश्चित्तं वद प्रभो। निग्रहं च तथा न्यायं येन पापं प्रयातु मे॥१
इत्युक्तस्तु मया शंभुरुवाच प्रणतं हि तम्। सुप्रसन्नतरो भूत्वा सर्वेशो भक्तवत्सलः॥१

### शंभुरुवाच

अनेनैव स्वरूपेण मदधिष्ठितकेन हि। तपः कुरु प्रसन्नात्मा मदाराधनतत्परः॥१
ख्यातिं यास्यसि सर्वत्र नाम्ना रुद्रशिरः क्षितौ। साधकः सर्वकृत्यानां तेजोभाजां द्विजन्मनाम्॥
मनुष्याणामिदं कृत्यं यस्माद्वीर्यं त्वयाऽधुना। तस्मात्त्वं मानुषो भूत्वा विचरिष्यसि भूतले॥१
यस्त्वां चानेन रूपेण दृष्ट्वा कौ विचरिष्यति। किमेतद्ब्रह्मणो मूर्ध्नि वदन्निति पुरान्तकः॥१

ततस्ते चेष्टितं सर्वं कौतुकाच्छ्रोष्यतीति यः। परदारकृतात्त्यागान्मुक्तिं सद्यः स यास्यति ॥१८॥
यथा यथा जनश्चैतत्कृत्यन्ते कीर्तयिष्यति। तथा तथा विशुद्धिस्ते पापस्यास्य भविष्यति ॥१९॥
एतदेव हि ते ब्रह्मन् प्रायश्चित्तं मयेरितम्। जनहास्यकरं लोके तव गर्हाकरं परम् ॥२०॥
एतच्च तव वीर्य्यं हि पतितं वेदिमध्यगम्। कार्मातस्य मया दृष्टं नैतद्धार्यं भविष्यति ॥२१॥
चतुर्बिन्दुमितं रेतः पतितं यत्क्षितौ तव। तन्मितास्तोयदा व्योम्नि भवेयुः प्रलयंकराः ॥२२॥
एतस्मिन्नंतरे तत्र देवर्षीणां पुरो द्रुतम्। तद्रेतसः समभवंस्तन्मिताश्च बलाहकाः ॥२३॥
संवर्तकस्तथाऽऽवर्त्तः पुष्करो द्रोण एव च। एते चतुर्विधास्तात महामेघा लयंकराः ॥२४॥
गर्जंतश्चाथ मुंचंतस्तोयानीषच्छिवेच्छया। फेलुर्व्योम्नि मुनिश्रेष्ठ तोयदास्ते कदारवाः ॥२५॥
तैस्तु संछादिते व्योम्नि सुगर्जद्भिश्च शंकरः। प्रशान् दाक्षायणी देवी भृशं शांतोऽभवद्द्रुतम् २६॥
अथ चाहं वीतभयः शंकरस्याज्ञया तदा। शेषं वैवाहिकं कर्म समाप्तिमनयं मुने ॥२७॥
पपात पुष्पवृष्टिश्च शिवाशिवशिरस्कयोः। सर्वत्र च मुनिश्रेष्ठ मुदा देवगणोज्झिता ॥२८॥
वाद्यमानेषु वाद्येषु गायमानेषु तेषु च। पठत्सु विप्रवर्गेषु वादान् भक्त्यान्वितेषु च ॥२९॥
रंभादिषु पुरंध्रीषु नृत्यमानासु सादरम्। महोत्सवो महानासीद्देवपत्नीषु नारद ॥३०॥
अथ कर्मवितानेशः प्रसन्नः परमेश्वरः। प्राह मां प्रांजलिं प्रीत्या लौकिकीं गतिमाश्रितः ॥३१॥

## ईश्वर उवाच

हे ब्रह्मन् सुकृतं कर्म सर्वं वैवाहिकं च यत्। प्रसन्नोऽस्मि त्वमाचार्यो दद्यां ते दक्षिणां च काम् ॥
याचस्व तां सुरज्येष्ठ यद्यपि स्यात्सुदुर्लभा। ब्रूहि शीघ्रं महाभाग नादेयं विद्यते मम ॥३३॥

## ब्रह्मोवाच

इत्याकर्ण्य वचः सोऽहं शंकरस्य कृतांजलिः। मुनेऽवोचं विनीतात्मा प्रणम्येशं मुहुर्मुहुः ॥३४॥
यदि प्रसन्नो देवेश वरयोग्योऽस्म्यहं यदि। तत्कुरु त्वं महेशान सुप्रीत्या यद्वदाम्यहम् ॥३५॥
अनेनैव तु रूपेण वेद्यामस्यां महेश्वर। त्वया स्थेयं सदैवात्र नृणां पापविशुद्धये ॥३६॥
येनास्य संनिधौ कृत्वा स्वाश्रमं शशिशेखर। ततः कुर्यां विनाशाय स्वपापस्यास्य शंकर ॥३७॥
चैत्रशुक्लत्रयोदश्यां नक्षत्रे भगदैवते। सूर्यवारे च यो भक्त्या वीक्षेत भुवि मानवः ॥३८॥
तदैव तस्य पापानि प्रयांतु हर संक्षयम्। वर्द्धतां विपुलं पुण्यं रोगा नश्यंतु सर्वशः ॥३९॥
या नारी दुर्भगा वंध्या काणा रूपविवर्जिता। सापि त्वद्दर्शनादेव निर्दोषा संभवेद्ध्रुवम् ॥४०॥
इत्याकर्ण्य वचो मे हि स्वात्मसर्वसुखावहम्। तथाऽस्त्विति शिवः प्राह सुप्रसन्नेन चेतसा ॥४१॥

## शिव उवाच

हिताय सर्वलोकस्य वेद्यां तस्यां व्यवस्थितः। स्थास्यामि सहितः पत्न्या सत्या त्वद्वचनाद्विधे ॥४२॥

ब्रह्मोवाच

इत्युक्त्वा भगवांस्तत्र सभार्यो वृषभध्वजः। उवाच वेदिमध्यस्थो मूर्तिं कृत्वांशरूपिणीम् ॥४४
ततो दक्षं समामंत्र्य शंकरः परमेश्वरः। पत्न्या सत्या गंतुमना अभूत्स्वजनवत्सलः ॥४५
एतस्मिन्नंतरे दक्षो विनयावनतः सुधीः। सांजलिर्नतकः प्रीत्या तुष्टाव वृषभध्वजम् ॥४६
विष्ण्वादयः सुराः सर्वे मुनयश्च गणास्तदा। नत्वा संस्तूय विविधं चक्रुर्जयरवं मुदा ॥४७
आरोप्य वृषभे शंभुः सतीं दक्षाज्ञया मुदा। जगाम हिमवत्प्रस्थं वृषभस्थः स्वयं प्रभुः ॥४८
अथ सा शंकराभ्यासे सुदती चारुहासिनी। विरेजे वृषभस्था वै चन्द्रांते कालिका यथा ॥४९
विष्ण्वादयः सुराः सर्वे मरीच्याद्यास्तथर्षयः। दक्षोऽपि मोहितश्चासीत्तथान्ये निश्चला जनाः ॥५०
केचिद्वाद्यान्वादयन्तो गायंतः सुस्वरं परे। शिवं शिवयशः शुद्धमनुजग्मुः शिवं मुदा ॥५१
मध्यमार्गाद्विसृष्टो हि दक्षः प्रीत्याऽथ शंभुना। स्वधाम प्राप सगणः शम्भुः प्रेमसमाकुलः ॥५२
विसृष्टा अपि विष्ण्वाद्याः शम्भुना पुनरेव ते। अनुजग्मुः शिवं भक्त्या सुराः परमया मुदा ॥५३
तैः सर्वैः सगणैः शंभुः सत्या च स्वस्त्रिया युतः। प्राप स्वं धाम संहृष्टो हिमवद्गिरिशोभितम् ॥५४
तत्र गत्वाऽखिलान्देवान्मुनीनपि परांस्तथा। मुदा विसर्जयामास बहु सामान्य सादरम् ॥५५
शंभुमाभाष्य ते सर्वे विष्ण्वाद्या मुदिताननाः। स्वं स्वं धाम ययुर्नत्वा स्तुत्वा च मुनयः सुराः।
शिवोऽपि मुदितोऽत्यर्थं स्वपत्न्या दक्षकन्यया। हिमवत्प्रस्थसंस्थो हि विजहार भवानुगः ॥५६
ततः स शंकरः सत्या सगणः सूतिकृन्मुने। प्राप स्वं धाम संहृष्टः कैलासं पर्वतोत्तमम् ॥५७
एतद्वः सर्वमाख्यातं यथा तस्य पुराऽभवत्। विवाहो वृषयानस्य मनुस्वायंभुवान्तरे ॥५८
विवाहसमये यज्ञे प्रारंभे वा शृणोति यः। एतदाख्यानमव्यग्रः संपूज्य वृषभध्वजम् ॥५९
तस्याविघ्नं भवेत्सर्वं कर्म वैवाहिकं च यत्। शुभाख्यमपरं कर्म निर्विघ्नं सर्वदा भवेत् ॥६०
कन्या च सुखसौभाग्यशीलाचारगुणान्विता। साध्वी स्यात्पुत्रिणी प्रीत्या श्रुत्वाख्यानमिदं शुभ

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखण्डे
सतीविवाहवर्णनं नाम विंशोऽध्यायः ॥ २० ॥

## अथैकविंशोऽध्यायः

### ( सती शिवक्रीडा )

नारद उवाच

समीचीनं वचस्तात सर्वज्ञस्य तवानघ। महाद्भुतं श्रुतं नो वै चरितं शिवयोःशुभम् ॥
विवाहश्च श्रुतः सम्यक् सर्वमोहापकारकः। परमज्ञानसंपन्नो मंगलालय उत्तमः ॥

भूय एव विवित्सा मे चरितं शिवयोः शुभम्। तद्वर्णय महाप्राज्ञ कृपां कृत्वाऽतुलामरम् ॥ ३ ॥

ब्रह्मोवाच

सम्यक्कारुणिकस्यैव मुने ते विचिकित्सितम्। यदहं नोदितः सौम्य शिवलीलानुवर्णने ॥ ४ ॥
विवाह्य दक्षजां देवीं सतीं त्रैलोक्यमातरम्। गत्वा स्वधाम सुप्रीत्या यदकार्षीन्निबोध मे ॥ ५ ॥
ततो हरः सस्वगणःस्वस्थानं प्राप्य मोदनम्। देवर्षे तत्र वृषभादवातरदतिप्रियात् ॥ ६ ॥
यथायोग्यं निजस्थानं प्रविश्य स सतीसखः। मुमुदेऽतीव देवर्षे भवाचारकरः शिवः ॥ ७ ॥
ततो विरूपाक्ष इमां प्राप्य दाक्षायणीं गणान्। स्वीयान्निर्यापयामास नंद्यादीन् गिरिकंदरात् ८॥
उवाच चैतांस्तान् सर्वान्नंद्यादीनतिसूनृतम्। लौकिकीं रीतिमाश्रित्य करुणासागरः प्रभुः ॥९॥

महेश उवाच

यदाऽहं च स्मराम्यत्र स्मरणादरमानसाः। समागमिष्यथ तदा मत्पार्श्वं मे गणा द्रुतम् १०॥
इत्युक्ते वामदेवेन नंद्याद्याः स्वगणाश्च ते। महावेगा महावीरा नानास्थानेषु संययुः ॥११॥
ईश्वरोऽपि तया सार्द्धं तेषु यातेषु विभ्रमी। दाक्षायण्या समं रेमे रहस्ये मुदितो भृशम् ॥१२॥
कदाचिद्वन्यपुष्पाणि समाहृत्य मनोहराम्। मालां विधाय सत्यास्तु हारस्थाने स योजयत् १३॥
कदाचिद्दर्पणे चैव वीक्षंतीमात्मनः सतीम्। अनुगम्य हरो वक्त्रं स्वीयमप्यवलोकयत् ॥१४॥
कदाचित्कुंडलं तस्या उल्लास्योल्लास्य सङ्गतः। बध्नाति मोचयत्येव सा स्वयं मार्जयत्यपि ॥१५॥
सरागौ चरणावस्याः पावकेनोज्ज्वलेन च। निसर्गरक्तौ कुरुते पूर्णरागौ वृषध्वजः ॥१६॥
उच्चैरपि यदाख्येयमन्येषां पुरतो बहु। तत् कर्णे कथयत्यस्या हरो द्रष्टुं तदाननम् ॥१७॥
न दूरमपि गन्ताऽसौ समागत्य प्रयत्नतः। अनुबध्नाति नामाक्षी पृष्ठदेशेऽन्यमानसाम् ॥१८॥
अंतर्हितस्तु तत्रैव मायया वृषभध्वजः। तामालिलिंग भीत्या स्वं चकिता व्याकुलाऽभवत्॥
सौवर्णपद्मकलिकातुल्ये तस्याः कुचद्वये। चकार भ्रमराकारं मृगनाभिविशेषकम् ॥२०॥
हारमस्याः कुचयुगाद्वियोज्य सहसा हरः। न्ययोजयच्च तत्रैव स्वकरस्पर्शनं मुहुः ॥२१॥
अंगदान्वलयानूर्मान्विश्लेष्य च पुनः पुनः। तत्स्थानात्पुनरेवाशौ तत्स्थाने प्रत्ययोजयत् ॥२२॥
कालिकेति समायाति सवर्णा ते सखी त्विमाम्। यास्यत्वस्यास्तथेक्षंत्याः प्रोत्तुङ्गौ सा हसं कुचौ २३॥
कदाचिन्मदनोन्मादचेतनः प्रमथाधिपः। चकार नर्म शर्माणि तथाकृत्प्रियया मुदा ॥२४॥
आहृत्य पद्मपुष्पाणि रम्यपुष्पाणि शंकरः। सर्वांगेषु करोति स्म पुष्पाभरणमादरात् ॥२५॥
गिरिकुंजेषु रम्येषु सत्या सह महेश्वरः। विजहार समस्तेषु प्रियया भक्तवत्सलः ॥२६॥
तया विना स्म नो याति नास्थितो न स्म चेष्टते। तया विना क्षणमपि शर्म लेभे न शंकरः ॥२७॥
विहृत्य सुचिरं कालं कैलासगिरिकुंजरे। अगमद्धिमवत्प्रस्थं सस्मार स्वेच्छया स्मरम् ॥२८॥

तस्मिन्प्रविष्टे कामे तु वसंतः शंकरांतिके। वितस्तार निजं भावं हार्दं विज्ञाय यत्प्रभोः ॥२९॥
सर्वे च पुष्पिता वृक्षा लताश्चान्याश्च पुष्पिताः। अंभांसि फुल्लपद्मानि पद्माः सभ्रमरास्तथा ॥३०॥
प्रविष्टे तत्र सहतौ ववौ समलयो मरुत्। सुगंधिगंधपुष्पेण मोदकश्च सुगंधियुक् ॥३१॥
संध्यार्द्रचन्द्रसंकाशः पलाशाश्च विरेजिरे। कामास्त्रवत्सुमनसः प्रमोदात्पादपाधरः ॥३२॥
बभुः पंकजपुष्पाणि सरःसु सकलाङ्गनान्। संमोहयितुमुद्युक्ता सुमुखी वायुदेवता ॥३३॥
नागकेशरवृक्षाश्च स्वर्णवर्णैः प्रसूनकैः। बभुर्मदनकेत्वाभ्रा मनोज्ञाः शंकरांतिके ॥३४॥
लवंगवल्ली सुरभिगंधेनोद्वास्य मारुतम्। मोहयामास चेतांसि भृशं कामिजने पुरा ॥३५॥
चारुपावकचर्चित्सु सुस्वराश्चूतशालिनः। बभुर्मदनबाणौघपर्यंकमदनावृताः ॥३६॥
अंभांसि मलहीनानि रेजुः फुल्लकुशाशयाः। मुनीनामिव चेतांसि प्रव्यक्तज्योतिरुद्गमम् ॥३७॥
तुषाराः सूर्यरश्मीनां सङ्गमादगमन् बहिः। प्रमत्वानोक्ष्यतेक्षाश्च सलिलीहृदयास्तदा ॥३८॥
प्रसन्नाः सह चन्द्रेण निनिषारास्तदाऽभवन्। विभावर्यः प्रियेणैवं कामिन्यः सुमनोहराः ॥३९॥
तस्मिन्काले महादेवः सह सत्या धरोत्तमे। रेमे स सुचिरं छन्दं निकुञ्जेषु नदीषु च ॥४०॥
तथा तेन समं रेजे तदा दाक्षायणी मुने। यथा हरः क्षणमपि शांतिमाप तया विना ॥४१॥
संभोगविषये देवी सती तस्य मनःप्रिया। विशतीव हरस्यांगे पाययन्निव तद्रसम् ॥४२॥
तस्याः कुसुममालाभिर्भूषयन्सकलां तनुम्। स्वहस्तरचिताभिस्तु नवशर्माकरोच्च सः ॥४३॥
आलपैर्वीक्षितैर्हास्यैस्तथा संभाषणैर्हरः। तस्यादिदेश गिरिजां सपतीवात्मसंविदम् ॥४४॥
तद्वक्त्रचंद्रपीयूषपानस्थिरतनुर्हरः। नानावैशेषिकीं तन्वीमवस्थां स कदाचन ॥४५॥
तद्वक्त्राम्बुजवासेन तत्सौन्दर्य्यैश्च नर्मभिः। गुणैरिव महादंती बद्धो नान्यविचेष्टितः ॥४६॥
इति हिमगिरिकुंजप्रस्थभागे दरीषु प्रतिदिनमभिरेमे दक्षपुत्र्या महेशः।
ऋतुभुजपरिमाणैः क्रीडतस्तस्य जाता दश दश च सुरर्षे वत्सराः पंच चान्ये ॥४७॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखंडे सतीशिवक्रीडावर्णनं नामैकविंशोऽध्यायः ॥२१॥

## अथ द्वाविंशोऽध्यायः

### ( हिमवति शिवाशिवयोर्विहारः )

ब्रह्मोवाच

कदाचिदथ दक्षस्य तनया जलदागमे। कैलासद्मभृतः प्राह प्रस्थस्थं वृषभध्वजम् ॥१॥

सत्युवाच

देवदेव महादेव शंभो मत्प्राणवल्लभ। शृणु मे वचनं नाथ श्रुत्वा तत्कुरु मानद ॥२॥

घनागमोऽयं संप्राप्तः कालः परमदुःसहः। अनेकवर्णमेघौघः संगीतांबरदिक्चयः ॥ ३ ॥
विवांति वाता हृदयं हारयंतीति वेगिनः। कदंबरजसा धौताः पाथोबिन्दुविकर्षणाः ॥ ४ ॥
मेघानां गर्जितैरुच्चैर्धारासारं विमुंचताम्। विद्युत्पताकिनां तीव्रैः क्षुब्धं स्यात्कस्य नो मनः ॥
न सूर्यो दृश्यते नापि मेघच्छन्नो निशापतिः। दिवापि रात्रिवद्भाति विरहिव्यसनाकरः ॥ ६ ॥
मेघा नैकत्र तिष्ठन्तो ध्वनंतः पवनेरिताः। पतंत इव लोकानां दृश्यंते मूर्ध्नि शंकर ॥ ७ ॥
वाताहता महावृक्षा नर्तंत इव चांबरे। दृश्यंते हर भीरूणां त्रासदाः कामुकेप्सिताः ॥ ८ ॥
स्निग्धनीलांजनस्याशु सद्विवौघस्य पृष्ठतः। बलाकराजी वात्युच्चैर्यमुनापृष्ठफेनवत् ॥ ९ ॥
क्षपाक्षयेषु वलयं दृश्यते पलिकागता। अंबुधाविव सदीप्तपावको वडवामुखः ॥१०॥
प्ररोहंतीह सस्यानि मंदिरं प्राङ्गणेष्वपि। किमन्यत्र विरूपाक्ष सस्योद्भूतिं वदाम्यहम् ॥११॥
श्यामलै राजतै रक्तैर्विशदोऽयं हिमाचलः। मंदराश्रयमेघौघः पत्रैर्दुग्धाम्बुधिर्यथा ॥१२॥
असमश्रीश्च कुटिलं भेजे यस्याथ किंशुकान्। उच्चावचान् कलौ लक्ष्मीर्गन्ता संत्यज्य सज्जनान् १३॥
मंदारस्तनपीलूनां शब्देन हृषिता मुहुः। केकायंते प्रतिवने सततं पृष्ठसूचकम् ॥१४॥
मेघोत्सुकानां मधुरश्चातकानां मनोहरः। धारासारशरैस्तापं पेतुः प्रतिपथोद्गतम् ॥१५॥
मेघानां पश्य मद्देहे दुर्नयं करकोत्करैः। ये छादयंत्यनुगते मयूरांश्चातकांस्तथा ॥१६॥
शिखिसारंगयोर्दृष्ट्वा मित्रादपि पराभवम्। हर्षं गच्छंति गिरिशं विदूरमपि मानसम् ॥१७॥
एतस्मिन्विषमे काले नीडं काकाश्चकोरकाः। कुर्वंति त्वां विना गेहान् कथं शांतिमवाप्स्यसि १८
महतीवाद्य नो भीतिर्मा मेघोत्था पिनाकधृक्। यतस्व यस्माद्वासाय माचिरं वचनान्मम ॥१९॥
कैलासे वा हिमाद्रौ वा महाकोश्यामथ क्षितौ। तत्रोपयोग्यं संवासं कुरु त्वं वृषभध्वज ॥२०॥

## ब्रह्मोवाच

एवमुक्तस्तया शंभुर्दाक्षायण्या तथाऽसकृत्। संजहास च शीर्षस्थचन्द्ररश्मिस्मितालयम् ॥२१॥
अथोवाच सतीं देवीं स्मिताभिन्नौष्ठसंपुटः। महात्मा सर्वतत्त्वज्ञस्तोषयन्परमेश्वरः ॥२२॥

## ईश्वर उवाच

यत्र प्रीत्यै मया कार्यो वासस्तव मनोहरे। मेघास्तत्र न गंतारः कदाचिदपि मत्प्रिये ॥२३॥
मेघा निबंतपर्यंतं संचरंति महीभृतः। सदा प्रालेयसानोस्तु वर्षास्वपि मनोहरे ॥२४॥
कैलासस्य तथा देवि पादगाः प्रायशो घनाः। संचरंति न गच्छंति तत ऊर्ध्वं कदाचन ॥२५॥
सुमेरोर्वा गिरेरूर्ध्वं न गच्छंति बलाहकाः। जम्बूमूलं समासाद्य पुष्करावर्तकादयः ॥२६॥
इत्युक्तेषु गिरीन्द्रेषु यस्योपरि भवेद्धि ते। मनोरुचिर्निवासाय तमाचक्ष्व द्रुतं हि मे ॥२७॥

स्वेच्छाविहारैस्तव कौतुकानि सुवर्णपक्षानिलवृन्दवृन्दैः।
शब्दोत्तरंगैर्मधुरस्वनैस्तैर्मुदोपगेयानि गिरौ हिमोत्थे ॥२८॥
सिद्धाङ्गनास्ते रचितासना भुवमिच्छंति चैवोपहृतं सकौतुकम्।
स्वेच्छाविहारे मणिकुट्टिमे गिरौ कुर्वन्ति चेष्यंति फलादिदानकैः ॥२९॥
फणीन्द्रकन्या गिरिकन्यकाश्च या नागकन्याश्च तुरंगमुख्यः।
सर्वास्तु तास्ते सततं सहायतां समाचरिष्यंत्यनुमोदविभ्रमैः ॥३०॥
रूपं तदेवमतुलं वदनं सुचारु दृष्ट्वांगना निजवपुर्निजकांतिसह्यम्।
हेला निजे वपुषि रूपगणेषु नित्यं कर्तार इत्यनिमिषेक्षणचारुरूपाः ॥३१॥
या मेनका पर्वतराजजाया रूपैर्गुणैः ख्यातवती त्रिलोके।
सा चापि ते तत्र मनोऽनुमोदं नित्यं करिष्यत्यनुनाथनाद्यैः ॥३२॥
पुरं हि वर्गैर्गिरिराजवंद्यैः प्रीतिं विचिन्वद्भिरुदाररूपा।
शिक्षा सदा ते खलु शोचितापि कार्याऽन्वहं प्रीतियुता गुणाद्यैः ॥३३॥

विचित्रैः कोकिलालापामोदैः कुंजगणावृतम्। सदा वसंतप्रभवं गंतुमिच्छसि किं प्रिये ॥३
नानाबहुजलापूर्णसरः शीतसमावृतम्। पद्मिनीशतशोयुक्तमचलेन्द्रं हिमालयम् ॥३
सर्वकामप्रदैर्वृक्षैः शाद्वलैः कल्पसंज्ञकैः। सक्षणं पश्य कुसुमान्यथाश्वकरिगोव्रजे ॥३
प्रशांतश्वापदगणं मुनिभिर्यतिभिर्वृतम्। देवालये महामाये नानामृगगणैर्युतम् ॥३
स्फटिकस्वर्णवप्राद्यै राजतैश्च विराजितम्। मानसादिसरोरंगैरभितः परिशोभितम् ॥३
हिरण्मयै रत्ननालैः पंकजैर्मुकुलैर्वृतम्। शिशुमारैस्तथाऽसंख्यैः कच्छपैर्मकरैः करैः ॥३
निषेवितं मंजुलैश्च तथा नीलोत्पलादिभिः। देवेशि तस्मान्मुक्तैश्च सर्वगंधैश्च कुंकुमैः ॥४
लसद्गंधजलैः शुभ्रैरापूर्णैः स्वच्छकांतिभिः। शाद्वलैस्तरुणैस्तुंगैस्तीरस्थैरुपशोभितम् ॥४
नृत्यद्भिरिव शाखोटैर्वर्जयंतं स्वसंभवम्। कामदेवैः सारसैश्च मत्तचक्रांगशोभितैः ॥४
मधुराराविभिर्मोदकारिभिर्भ्रमरादिभिः। शब्दायमानं च मुदा कामोद्दीपनकारकम् ॥४
वासवस्य कुवेरस्य यमस्य वरुणस्य च। अग्नेः कोणपराजस्य मारुतस्य परस्य च ॥४
पुरीभिः शोभिशिखरं मेरोरुच्चैः सुरालयम्। रंभाशचीमेनकादिरंभोरुगणसेवितम् ॥४
किं त्वमिच्छसि सर्वेषां पर्वतानां हि भूभृताम्। सारभूते महारम्ये संविहर्तुं महागिरौ ॥४
तत्र देवी सखियुता साप्सरोगणमंडिता। नित्यं करिष्यति शची तव योग्यां सहायताम्
अथवा मम कैलासे पर्वतेंद्रे सदाश्रये। स्थानमिच्छसि वित्तेशपुरीपरिविराजिते ॥४

गङ्गाजलौघप्रयते पूर्णचन्द्रसमप्रभे। दरीषु सानुषु सदा ब्रह्मकन्याभ्युदीरिते ॥४९॥
नानामृगगणैर्युक्ते पद्माकरशतावृते। सर्वैर्गुणैश्च सद्वस्तु सुमेरोरपि सुंदरि ॥५०॥
स्थानेष्वेतेषु यत्रापि तवांतःकरणे स्पृहा। तं द्रुतं मे समाचक्ष्व वासकर्तास्मि तत्र ते ॥५१॥

ब्रह्मोवाच

इतीरिते शंकरेण तदा दाक्षायणी शनैः। इदमाह महादेवं लक्षणं स्वप्रकाशनम् ॥५२॥

सत्युवाच

हिमाद्रावेव वसतुमहमिच्छे त्वया सह। नचिरात्कुरु संवासं तस्मिन्नेव महागिरौ ॥५३॥

ब्रह्मोवाच

अथ तद्वाक्यमाकर्ण्य हरः परममोहितः। हिमाद्रिशिखरं तुङ्गं दाक्षायण्या समं ययौ ॥५४॥
सिद्धांगनागणयुतमगम्यं चैव पक्षिभिः। अगमच्छिखरं रम्यं सरसीवनराजितम् ॥५५॥
विचित्ररूपैः कमलैः शिखरं रत्नकर्बुरम्। बालार्कसदृशं शंभुराससाद सतीसखः ॥५६॥
स्फटिकाभ्रमये तस्मिन् शाद्वलद्रुमराजिते। विचित्रपुष्पावलिभिः सरसीभिश्च संयुते ॥५७॥
प्रफुल्लतरुशाखाग्रं गुञ्जद्भ्रमरसेवितम्। पंकेरुहैः प्रफुल्लैश्च नीलोत्पलचयैस्तथा ॥५८॥
शोभितं चक्रवाकाद्यैः कादंबैर्हंसशंकुभिः। प्रमत्तसारसैः क्रौंचैर्नीलस्कन्धैश्च शब्दितैः ॥५९॥
पुंस्कोकिलानां निनदैर्मधुरैर्गणसेवितैः। तुरंगवदनैः सिद्धैरप्सरोभिश्च गुह्यकैः ॥६०॥
विद्याधरीभिर्देवीभिः किन्नरीभिर्विहारितम्। पुरंध्रीभिः पार्वतीभिः कन्याभिरभिसंगतम् ॥६१॥
विपंचीतांत्रिकामत्तमृदंगपटहस्वनैः। नृत्यद्भिरप्सरोभिश्च कौतुकोत्थैश्च शोभितम् ॥६२॥
देविकाभिर्दीर्घिकाभिर्गंधिभिः सुसमावृतम्। प्रफुल्लकुसुमैर्नित्यं सुकुंजैरुपशोभितम् ॥६३॥
शैलराजपुराभ्यर्णे शिखरे वृषभध्वजः। सह सत्या चिरं रेमे एवंभूतेषु शोभनम् ॥६४॥
तस्मिन् स्वर्गसमे स्थाने दिव्यमानेन शंकरः। दशवर्षसहस्राणि रेमे सत्या समं मुदा ॥६५॥
स कदाचित्ततः स्थानादन्यद्याति स्थलं हरः। कदाचिन्मेरुशिखरं देवीदेववृतं सदा ॥६६॥
द्वीपान्नाना तथोद्यानवनानि वसुधातलम्। गत्वा गत्वा पुनस्तत्राभ्येत्य रेमे सतीसुखम् ॥६७॥
न यज्ञे स दिवारात्रौ न ब्रह्मणि तपःसमम्। सत्यां हि मनसा शंभुः प्रीतिमेव चकार ह ॥६८॥
एवं महादेवमुखं सत्यपश्यत्स्म सर्वदा। महादेवोऽपि सर्वत्र सदाऽद्राक्षीत्सतीमुखम् ॥६९॥
एवमन्योन्यसंसर्गादनुरागमहीरुहम् । वर्द्धयामासतुः कालीशिवौ भावांबुसेचनैः ॥७०॥

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां द्वितीये सतीखण्डे
शिवाशिवविहारवर्णनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

ऋषीन्संतर्प्य च सुरान्पितॄंश्च तिलतण्डुलैः। तीरमागत्य सम्प्रोक्ष्य वाससी परिधाय च ॥ ७ ॥
द्विराचम्य समादाय भस्म सद्यादिमंत्रतः। उद्धूलनादिक्रमतो विधिवद्यथ मुनीश्वरः ॥ ८ ॥
रुद्राक्षमालाभरणः कृतनित्यक्रियः सुधीः। यथोक्तांगेषु विधिना त्रिपुण्ड्रं रचति स्म ह ॥९॥
विश्वेश्वरमुमाकान्तं ससुतं सगणाधिपम्। पूजयामास सद्भक्त्या ह्यस्तौन्नत्वा मुहुर्मुहुः १०॥
कालभैरवनाथं च संपूज्याथ विधानतः। प्रदक्षिणीकृत्य पुनस्त्रेधा नत्वा च पञ्चधा ॥११॥
पुनः प्रदक्षिणीकृत्य प्रणम्य भुवि दण्डवत्। तुष्टाव परया स्तुत्या संस्मरंस्तत्पदाम्बुजम् ॥१२॥
श्रीमत्पञ्चाक्षरीं विद्यामष्टोत्तरसहस्रकम्। संजप्य पुरतः स्थित्वा क्षमापय्य महेश्वरम् ॥१३॥
चण्डेशं सम्प्रपूज्याथ मुक्तिमण्डपमध्यतः। निर्द्दिष्टमासनं भेजे मुनिभिर्वेदपारगैः ॥१४॥
एवं स्थितेषु सर्वेषु नमस्कृत्य समंत्रकम्। अथ प्राह मुनीन्द्राणां भाववृद्धिकरं वचः ॥१५॥

सूत उवाच

धन्या यूयं महाप्राज्ञ मुनयः शंसितव्रताः। भवदर्थमिह प्राप्तोऽहं तद्वृत्तमिदं शृणु ॥१६॥
यदाऽहमुपदिश्याथ भवतः प्रणवार्थकम्। गतस्तीर्थाटनार्थाय तद्वृत्तान्तं ब्रवीमि वः ॥१७॥
इतो निर्गत्य सम्प्राप्य तीरं दक्षपयोनिधेः।
स्नात्वा सम्पूज्य विधिवद्देवीं कन्यामयीं शिवाम्। पुनरागत्य विप्रेन्द्राः सुवर्णमुखरीतटम् ॥१८॥
श्रीकालहस्तिशैलाख्यनगरे परमाद्भुते। सुवर्णमुखरीतोये स्नात्वा देवानृषीनपि ॥१९॥
सन्तर्प्य विधिवद्भक्त्या समुद्रं गिरिशं स्मरन्। समर्च्य कालहस्तीशं चन्द्रकान्तसमप्रभम् ॥२०॥
पश्चिमाभिमुखं पञ्चशिरसं परमाद्भुतम्। सकृद्दर्शनमात्रेण सर्वाघत्रयकारणम् ॥२१॥
सर्वसिद्धिप्रदं भुक्तिमुक्तिदं त्रिगुणेश्वरम्। ततश्च परया भक्त्या तस्य दक्षिणगां शिवाम् २२
ज्ञानप्रसूनकलिकां समर्च्य हि जगत्प्रसूम्। श्रीमत्पञ्चाक्षरीं विद्यामष्टोत्तरसहस्रकम् ॥२३॥
जप्त्वा प्रदक्षिणीकृत्य स्तुत्वा नत्वा मुहुर्मुहुः ॥२४॥
ततः प्रदक्षिणीकृत्य गिरिं प्रत्यहमादरात्। आमोदतीव मनसि प्रत्यहं नियमस्थितः ॥२५॥
अनयञ्चतुरो मासानेवं तत्र मुनीश्वराः। ज्ञानप्रसूनकलिकामहादेव्याः प्रसादतः ॥२६॥
एकदा तु समास्तीर्य चैलाजिनकुशोत्तरम्। आसनं परमं तस्मिन्स्थित्वा रुद्धेन्द्रियो मुनिः ॥
समाधिमास्थाय सदा परमानंदचिद्घनः। परिपूर्णः शिवोस्मीति निर्व्यग्रहृदयोऽभवम् ॥२८॥
एतस्मिन्नेव समये मद्गुरुः करुणानिधिः। नीलजीमूतसंकाशो विद्युत्पिङ्गजटाधरः ॥२९॥
प्रांशुः कमण्डलुद्दण्डकृष्णाजिनधरः स्वयम्। भस्मावदातसर्वाङ्गः सर्वलक्षणलक्षितः ॥३०॥
त्रिपुण्ड्रविलसद्भालो रुद्राक्षालंकृताकृतिः। पद्मपत्रारुणायामविस्तीर्णनयनद्वयः ॥३१॥
प्रादुर्भूय हृदम्भोजे तदानीवमेव सत्वरम्। विमोहितस्तदैवासमेतदद्भुतमास्तिकाः ॥३२॥

तत उन्मील्य नयने विलापं कृतवानहम्। आसीन्ममाश्रुपातश्च गिरिनिर्झरसन्निभः ॥३३॥
एतस्मिन्नेव समये श्रुता वागशरीरिणी। व्योम्नो महाद्भुता विप्रास्तामेव शृणुतादरात् ॥
सूतपुत्र महाभाग गच्छ वाराणसीं पुरीम्। तत्रासन्मुनयः पूर्वमुपदिष्टास्त्वयाऽधुना ॥३५॥
त्वदुपागमकल्याणं कांक्षंते विवशा भृशम्। तिष्ठंति ते निराहारा इत्युक्त्वा विरराम सा ३६॥
तत उत्थाय तरसा देवं देवीञ्च भक्तितः। प्रदक्षिणीकृत्य पुनः प्रणम्य भुवि दण्डवत् ॥३७॥
द्विषड्वारं गुरोराज्ञां विज्ञाय शिवयोरथ। क्षेत्रान्निर्गत्य तरसा चत्वारिंशद्दिनान्तरे ॥३८॥
आगतोऽस्मि मुनिश्रेष्ठा अनुगृह्णन्तु मामिह। मया किमद्य वक्तव्यं भवन्तस्तद्ब्रुवंतु मे ॥३९॥
इति सूतवचः श्रुत्वा ऋषयो हृष्टमानसाः। अवोचन्मुनिशार्दूलं व्यासं नत्वा मुहुर्मुहुः ॥४०॥

इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां सूतोपदेशो नाम दशमोऽध्यायः ॥ १० ॥

## अथैकादशोऽध्यायः

### ( वामदेवब्रह्मवर्णनम् )

ऋषय ऊचुः

सूत सूत महाभाग त्वमस्मद्गुरुरुत्तमः। अतस्त्वां परिपृच्छामो भवतोऽनुग्रहो यदि ॥ १ ॥
श्रद्धालुषु च शिष्येषु त्वादृशा गुरवः सदा। स्निग्धभावा इतीदं नो दर्शितं भवताऽधुना २ ॥
विरजाहोमसमये वामदेवमतं पुरा। सूचितं भवताऽस्माभिर्न श्रुतं विस्तरान्मुने ॥ ३ ॥
तदिदानीं श्रोतुकामाः श्रद्धया परमादरात्। वयं सर्वे कृपासिंधो प्रीत्या तद्वक्तुमर्हसि ॥ ४ ॥
इति तेषां वचः श्रुत्वा सूतो हृष्टतनूरुहः। नमस्कृत्य महादेवं गुरोः परतरं गुरुम् ॥ ५ ॥
महादेवीं त्रिजननीं गुरुं व्यासञ्च भक्तितः। प्राह गम्भीरया वाचा मुनीनाह्लादयन्निदम् ॥६॥

सूत उवाच

स्वस्त्यस्तु मुनयः सर्वे सुखिनः संतु सर्वदा। शिवभक्ताः स्थिरात्मानः शिवभक्तिप्रवर्तकाः ॥७॥
तदतीव विचित्रं हि श्रुतं गुरुमुखाम्बुजात्। इतः पूर्वं मया नोक्तं गुह्यप्राकट्यशंकया ॥८॥
यूयं खलु महाभागाः शिवभक्ता दृढव्रताः। इति निश्चित्य युष्माकं वक्ष्यामि श्रूयतां मुदा ९॥
पुरा रथन्तरे कल्पे वामदेवो महामुनिः। गर्भमुक्तः शिवज्ञानविदां गुरुतमः स्वयम् ॥१०॥
वेदागमपुराणादिसर्वशास्त्रार्थतत्त्ववित्। देवासुरमनुष्यादिजीवानां जन्मकर्मवित् ॥११॥
भस्मावदातसर्वाङ्गो जटामण्डलमण्डितः। निराश्रमो निःस्पृहश्च निर्द्वन्द्वो निरहंकृतिः ॥१२॥
दिगंबरो महाज्ञानी महेश्वर इवापरः। शिष्यभूतैर्मुनीन्द्रैश्च तादृशैः परिवारितः ॥१३॥

पवि पृथिवीमेतां स्वपादस्पर्शपुण्यतः। पवित्रयन्परे धाम्नि निमग्नहृदयोऽन्वहम् ॥१४॥
कु शिखरं मेरोर्दक्षिणं प्राविशन्मुदा। यत्रास्ते भगवानीशतनयः शिखिवाहनः ॥१५॥
शक्तिधरो वीरः सर्वासुरविमर्दनः। गजवल्लीसमायुक्तः सर्वैर्देवैर्नमस्कृतः ॥१६॥
तत्र स्कन्दसरो नाम सरः सागरसन्निभम्। शिशिरस्वादुपानीयं स्वच्छागाधबहूदकम् ॥१७॥
सर्वाश्चर्यगुणोपेतं विद्यते स्वामिसन्निधौ। तत्र स्नात्वा वामदेवः सहशिष्यैर्महामुनिः ॥१८॥
कुमारं शिखरासीनं मुनिवृन्दनिषेवितम्। उद्यदादित्यसंकाशं मयूरवरवाहनम् ॥१९॥
चतुर्भुजमुदारांगं मुकुटादिविभूषितम्। शक्तिरत्नद्वयोपास्यं शक्तिकुक्कुटधारिणम् ॥२०॥
वरदाभयहस्तञ्च दृष्ट्वा स्कन्दं मुनीश्वरः। सम्पूज्य परया भक्त्या स्तोतुं समुपचक्रमे ॥२१॥

वामदेव उवाच

ॐ नमः प्रणवार्थाय प्रणवार्थविधायिने। प्रणवाक्षरबीजाय प्रणवाय नमोनमः ॥२२॥
वेदान्तार्थस्वरूपाय वेदान्तार्थविधायिने। वेदान्तार्थविदे नित्यं विदिताय नमोनमः ॥२३॥
नमो गुहाय भूतानां गुहासु निहिताय च। गुह्याय गुह्यरूपाय गुह्यागमविदे नमः ॥२४॥
अणोरणीयसे तुभ्यं महतोऽपि महीयसे। नमः परावरज्ञाय परमात्मस्वरूपिणे ॥२५॥
स्कन्दाय स्कन्दरूपाय मिहिरारुणतेजसे। नमो मन्दारमालोद्यन्मुकुटादिभृते सदा ॥२६॥
शिवशिष्याय पुत्राय शिवस्य शिवदायिने। शिवप्रियाय शिवयोरानन्दनिधये नमः ॥२७॥
गांगेयाय नमस्तुभ्यं कार्तिकेयाय धीमते। उमापुत्राय महते शरकाननशायिने ॥२८॥
षडक्षरशरीराय षड्विधार्थविधायिने। षडध्वातीतरूपाय षण्मुखाय नमोनमः ॥२९॥
द्वादशायतनेत्राय द्वादशोद्यतबाहवे। द्वादशायुधधाराय द्वादशात्मन्नमोऽस्तु ते ॥३०॥
चतुर्भुजाय शान्ताय शक्तिकुक्कुटधारिणे। वरदाय विहस्ताय नमोऽसुरविदारिणे ॥३१॥
गजवल्लीकुचालिप्तकुंकुमांकितवक्षसे। नमो गजाननानन्दमहिमानंदितात्मने ॥३२॥

ब्रह्मादिदेवमुनिकिन्नरगीयमानगाथाविशेषशुचिचिंतितकीर्तिधाम्ने।
वृन्दारकामलकिरीटविभूषणस्रक्पूज्याभिरामपदपंकज ते नमोऽस्तु ॥३३॥

इति स्कन्दस्तवं दिव्यं वामदेवेन भाषितम्। यः पठेच्छृणुयाद्वापि स याति परमां गतिम् ॥३४॥
महाप्रज्ञाकरं ह्येतच्छिवभक्तिविवर्द्धनम्। आयुरारोग्यधनकृत्सर्वकामप्रदं सदा ॥३५॥
इति स्तुत्वा वामदेवो देवं सेनापतिं प्रभुम्। प्रदक्षिणात्रयं कृत्वा प्रणम्य भुवि दण्डवत् ॥३६॥
साष्टांगं च पुनः कृत्वा प्रदक्षिणनमस्कृतम्। अभवत्पार्श्वतस्तस्य विनयावनतो द्विजाः ॥३७॥
वामदेवकृतं स्तोत्रं परमार्थविजृम्भितम्। श्रुत्वाऽभवत्प्रसन्नो हि महेश्वरसुतः प्रभुः ॥३८॥
तमुवाच महासेनः प्रीतोऽस्मि तव पूजया। भक्त्या स्तुत्या च भद्रं ते किमद्य करवाण्यहम् ॥

मुने त्वं योगिनां मुख्यः परिपूर्णश्च निःस्पृहः। भवादृशां हि लोकेऽस्मिन्प्रार्थनीयं न विद्यते ॥४१
तथापि धर्मरक्षायै लोकानुग्रहकांक्षया। त्वादृशाः साधवः सन्तो विचरन्ति महीतले ॥४२
श्रोतव्यमस्ति चेद्ब्रह्मन् वक्तुमर्हसि साम्प्रतम्। तदिदानीमहं वक्ष्ये लोकानुग्रहहेतवे ॥४३
इति स्कन्दवचः श्रुत्वा वामदेवो महामुनिः। प्रश्रयावनतः प्राह मेघगम्भीरया गिरा ॥४४

वामदेव उवाच

भगवन् परमेशस्त्वं परावरविभूतिदः। सर्वज्ञः सर्वकर्त्ता च सर्वशक्तिधरः प्रभुः ॥४५
जीवा वयं तु ते वक्तुं सन्निधौ परमेशितुः। तथाप्यनुग्रहोऽयं ते यत्त्वं वदसि मां प्रति ॥४६
कृतार्थोऽहं महाप्राज्ञ विज्ञानकणमात्रतः। प्रेरितः परिपृच्छामि क्षन्तव्योऽतिक्रमो मम ॥४७
प्रणवो हि परः साक्षात्परमेश्वरवाचकः। वाच्यः पशुपतिर्देवः पशूनां पाशमोचकः ॥४८
वाचकेन समाहूतः पशून्मोचयते क्षणात्। तस्माद्वाचकतासिद्धिः प्रणवेन शिवं प्रति ॥४९
ॐमितीदं सर्वमिति श्रुतिराह सनातनी। ओमिति ब्रह्म सर्वं हि ब्रह्मेति च समब्रवीत् ॥५०
देवसेनापते तुभ्यं देवानां पतये नमः। नमो यतीनां पतये परिपूर्णाय ते नमः ॥५१
एवं स्थिते जगत्यस्मिञ्छिवादन्यन्न विद्यते। सर्वरूपधरः स्वामी शिवो व्यापी महेश्वरः ॥५२
समष्टिव्यष्टिभावेन प्रणवार्थः श्रुतो मया। न जातुचिन्महासेन संप्राप्तस्त्वादृशो गुरुः ॥५३
अतः कृत्वाऽनुकंपां वै तमर्थं वक्तुमर्हसि। उपदेशविधानेन सदाचारक्रमेण च ॥५४
स्वाम्येकः सर्वजन्तूनां पाशच्छेदकरो गुरुः। अतस्त्वत्कृपया सोऽर्थः श्रोतव्यो हि मया गुरो ५५
इति स मुनिना पृष्टः स्कन्दः प्रणम्य सदाशिवं प्रणववपुषं साष्टत्रिंशत्कलावरलक्षितम्।
सहितमुमया शश्वत्पार्श्वे मुनिप्रवरान्वितं गदितुमुपचक्राम श्रेयः श्रुतिष्वपि गोपितम् ॥५५
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां वामदेवब्रह्मवर्णनं नामैकादशोऽध्यायः ॥११

## अथ द्वादशोऽध्यायः

### ( संन्यासविधिः )

श्रीब्रह्मण्य उवाच

साधु साधु महाभाग वामदेव मुनीश्वर। त्वमतीव शिवे भक्तः शिवज्ञानवतां वरः ॥ १ ॥
त्वया त्वविदितं किंचिन्नास्ति लोकेषु कुत्रचित्। तथापि तव वक्ष्यामि लोकानुग्रहकारिणः ॥२॥
लोकेस्मिन्पशवः सर्वे नानाशास्त्रविमोहिताः। वञ्चिताः परमेशस्य माययाऽतिविचित्रया ॥ ३ ॥
न जानन्ति परं साक्षात्प्रणवार्थं महेश्वरम्। सगुणं निर्गुणं ब्रह्म त्रिदेवजनकं परम् ॥ ४ ॥
दक्षिणं बाहुमुद्धृत्य शपथं प्रब्रवीमि ते। सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः ॥ ५ ॥

प्रणवार्थः शिवः साक्षात्प्राधान्येन प्रकीर्तितः। श्रुतिषु स्मृतिशास्त्रेषु पुराणेष्वागमेषु च ॥ ६ ॥
यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह। आनन्दं यस्य वै विद्वान्न बिभेति कुतश्चन ॥ ७ ॥
यस्माज्जगदिदं सर्वं विधिविष्ण्विन्द्रपूर्वकम्। सह भूतेन्द्रियग्रामैः प्रथमं संप्रसूयते॥ ८ ॥
येन सम्प्रसूयते यो वै कुतश्चन कदाचन। यस्मिन्न भासते विद्युन्न च सूर्यो न चन्द्रमाः ॥
यस्य भासा विभातीदं जगत्सर्वं समन्ततः। सर्वैश्वर्येण सम्पन्नो नाम्ना सर्वेश्वरः स्वयम् ॥१०॥
यो वै मुमुक्षुभिर्ध्येयः शम्भुराकाशमध्यगः। सर्वव्यापी प्रकाशात्मा भासरूपो हि चिन्मयः ॥
यस्य पुंसां परा शक्तिर्भावगम्या मनोहरा। निर्गुणा स्वगुणैरेव निगूढा निष्कला शिवा ॥१२॥
तदीयं त्रिविधं रूपं स्थूलं सूक्ष्मं परं ततः। ध्येयं मुमुक्षुभिर्नित्यं क्रमतो योगिभिर्मुने ॥१३॥
निष्कलः सर्वदेवानामादिदेवः सनातनः। ज्ञानक्रियास्वभावो यः परमात्मेति गीयते ॥१४॥
तस्य देवाधिदेवस्य मूर्त्तिः साक्षात्सदाशिवः। पञ्चमंत्रतनुर्देवः कलापञ्चकविग्रहः ॥१५॥
शुद्धस्फटिकसंकाशः प्रसन्नः शीतलद्युतिः। पंचवक्त्रो दशभुजस्त्रिपंचनयनः प्रभुः ॥१६॥
ईशानमुकुटोपेतः पुरुषास्यः पुरातनः। अघोरहृदयो वामदेवगुह्यप्रदेशवान् ॥१७॥
सद्यपादश्च तन्मूर्तिः साक्षात्सकलनिष्कलः। सर्वज्ञत्वादिषट्शक्तिषडंगीकृतविग्रहः ॥१८॥
शब्दादिशक्तिस्फुरितहृत्पंकजविराजितः। स्वशक्त्या वामभागे तु मनोमन्या विभूषितः १९॥
मन्त्रादिषड्विधार्थानामर्थोपन्यासमागतः। समष्टिव्यष्टिभावार्थं वक्ष्यामि प्रणवात्मकम् ॥२०॥
उपदेशक्रमो ह्यादौ वक्तव्यः श्रूयतामयम्। चातुर्वर्ण्यं हि लोकेऽस्मिन्प्रसिद्धं मानुषे मुने ॥
त्रैवर्णिकानामेवात्र श्रुत्याचारसमन्वयः। शुश्रूषामात्रसारा हि शूद्राः श्रुतिबहिष्कृताः ॥२२॥
त्रैवर्णिकानां सर्वेषां स्वस्वाश्रमरतात्मनाम्। श्रुतिस्मृत्युदितो धर्मोऽनुष्ठेयो नापरः क्वचित् २३॥
श्रुतिस्मृत्युदितं कर्म कुर्वन्सिद्धिमवाप्स्यति। इत्युक्तं परमेशेन वेदमार्गप्रदर्शिना ॥२४॥
वर्णाश्रमाचारपुण्यैरभ्यर्च्य परमेश्वरम्। तत्सायुज्यं गताः सर्वे बहवो मुनिसत्तमाः ॥२५॥
ब्रह्मचर्येण मुनयो देवा यज्ञक्रियाऽध्वना। पितरः प्रजया तृप्ता इति हि श्रुतिरब्रवीत् ॥२६॥
एवं ऋणत्रयान्मुक्तो वानप्रस्थाश्रमं गतः। शीतोष्णसुखदुःखादिसहिष्णुर्विजितेन्द्रियः ॥२७॥
तपस्वी विजिताहारो यमाद्यं योगमभ्यसेत्। यथा दृढतरा बुद्धिरविचाल्या भवेत्तथा ॥२८॥
एवं क्रमेण शुद्धात्मा सर्वकर्माणि विन्यसेत्। संन्यस्य सर्वकर्माणि ज्ञानपूजापरो भवेत् ॥२९॥
सा हि साक्षाच्छिवैक्येन जीवन्मुक्तिफलप्रदा। सर्वोत्तमा हि विज्ञेया निर्विकारा यतात्मनाम् ॥
तत्प्रकारमहं वक्ष्ये लोकानुग्रहकाम्यया। तव स्नेहान्महाप्राज्ञ सावधानतया शृणु ॥३१॥
सर्वशास्त्रार्थतत्त्वज्ञं वेदांतज्ञानपारगम्। आचार्यमुपगच्छेत्स यतिर्मतिमतां वरम् ॥३२॥
तत्समीपमुपव्रज्यं यथाविधि विचक्षणः। दीर्घदण्डप्रणामाद्यैस्तोषयेद्यत्नतः सुधीः ॥३३॥

यो गुरुः स शिवः प्रोक्तो यः शिवः स गुरुः स्मृतः। इति निश्चित्य मनसा स्वविचारं निवेदयेत्
लब्धानुज्ञस्तु गुरुणा द्वादशाहं पयोव्रती। शुक्लपक्षे चतुर्थ्यां वा दशम्यां वा विधानतः ॥३
प्रातः स्नात्वा विशुद्धात्मा कृतनित्यक्रियः सुधीः। गुरुमाहूय विधिना नांदीश्राद्धं समारभेत्
विश्वेदेवाः सत्यवसुसंज्ञावंतः प्रकीर्त्तिताः। देवश्राद्धे ब्रह्मविष्णुमहेशाः कथितास्त्रयः ॥३
ऋषिश्राद्धे तु सम्प्रोक्ता देवक्षेत्रमनुष्यजाः। देवश्राद्धे तु वसुरुद्रादित्याः सम्प्रकीर्त्तिताः ३
चत्वारो मानुषश्राद्धे सनकाद्या मुनीश्वराः। भूतश्राद्धे पञ्च महाभूतानि च ततः परम् ॥३
चक्षुरादीन्द्रियग्रामो भूतग्रामश्चतुर्विधः। पितृश्राद्धे पिता तस्य पिता तस्य पिता त्रयः ४
मातृश्राद्धे मातृपितामह्यौ च प्रपितामही। आत्मश्राद्धे तु चत्वार आत्मा पितृपितामहौ ४
प्रपितामहनामा च सपत्नीकाः प्रकीर्त्तिताः। मातामहात्मकश्राद्धे त्रयो मातामहादयः ॥४
प्रतिश्राद्धं ब्राह्मणानां युग्मं कृत्वोपकल्पितान्। आहूय पादौ प्रक्षाल्य स्वयमाचम्य यत्नतः

समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः।
अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादरेणवः ॥४४॥
अपाढनध्वान्तसहस्रभानवः समीहितार्थार्पणकामधेनवः।
समस्ततीर्थाम्बुपवित्रमूर्त्तयो रक्षंतु मां ब्राह्मणपादपांसवः ॥४५॥
इति जप्त्वा नमस्कृत्य साष्टांगं भुवि दण्डवत्।
स्थित्वा तु प्राङ्मुखः शम्भोः पादाब्जयुगलं स्मरन् ॥४६॥

सपवित्रकरः शुद्ध उपवीती दृढासनः। प्राणायामत्रयं कुर्याच्छ्रुत्वा तिथ्यादिकं पुनः ॥४
मत्संन्यासांगभूतं यद्विश्वेदेवादिकं तथा। श्राद्धमष्टविधं मातामहान्तं पार्वणेन वै ॥४
विधानेन करिष्यामि युष्मदाज्ञापुरःसरम्। एवं विधाय संकल्पं दर्भानुत्तरतस्त्यजेत् ॥४
उपस्पृश्याप उत्थाय वरणक्रममारभेत्। पवित्रपाणिः संस्पृश्य वाणीं ब्राह्मणयोर्वदेत् ॥५
विश्वेदेवार्थं इत्यादि भवद्भ्यां क्षण इत्यपि ॥५१॥
प्रसादनीय इत्यन्तं सर्वत्रैवं विधिक्रमः। एवं समाप्य वरणं मण्डलानि प्रकल्पयेत् ॥५
उदगारभ्य दश च कृत्वाऽभ्यर्चनमक्षतैः। तेषु क्रमेण संस्थाप्य ब्राह्मणान्पादयोः पुनः ॥५
विश्वेदेवादिनामानि ससंबोधनमुच्चरेत्। इदं वः पाद्यमिति सकुशपुष्पाक्षतोदकैः ॥५
पाद्यं दत्त्वा स्वयमपि क्षालितांघ्रिरुदङ्मुखः। आचम्य युग्मक्लृप्तांस्तानासनेषूपवेश्य च ॥५
विश्वेदेवस्वरूपस्य ब्राह्मणस्येदमासनम्। इति दर्भासनं दत्त्वा दर्भपाणिः स्वयं स्थितः ॥५
अस्मिन्नान्दीमुखश्राद्धे विश्वेदेवार्थं इत्यपि। भवद्भ्यां क्षण इत्युक्त्वा क्रियतामिति संवदेत्
प्राप्नुतामिति सम्प्रोच्य भवन्ताविति संवदेत्। वदेतां प्राप्नुयावेति तौ च ब्राह्मणपुंगवौ ॥५

संपूर्णमस्तु संकल्पसिद्धिरस्त्विति तान्प्रति। भवन्तोऽनुगृह्णंत्विति प्रार्थयेद्द्विजपुंगवान् ॥५६॥
ततः शुद्धकदल्यादिपात्रेषु क्षालितेषु च। अन्नादिभोज्यद्रव्याणि दत्त्वा दर्भैः पृथक्पृथक् ॥
परिस्तीर्य स्वयं तत्र परिषिच्योदकेन च। हस्ताभ्यामवलम्ब्याथ पात्रं प्रत्येकमादरात् ॥६१॥
पृथिवी ते पात्रमित्यादि कृत्वा तत्र व्यवस्थितान्। देवादींश्च चतुर्थ्यन्तानन्नूद्याक्षतसंयुतान् ॥६२॥
उदग्गृहीत्वा स्वाहेति देवार्थेऽन्नं यजेत्पुनः। न ममेति वदेदन्ते सर्वत्रायं विधिक्रमः ॥६३॥
यत्पादपद्मस्मरणाद्यस्य नामजपादपि। न्यूनं कर्म भवेत्पूर्णं तं वन्दे साम्बमीश्वरम् ॥६४॥
इति जप्त्वा ततो ब्रूयान्मया कृतमिदं पुनः। नान्दीमुखश्राद्धमिति यथोक्तं च वदेत्ततः ॥६५॥
अस्त्विति ब्रूतेति च तान्प्रसाद्य द्विजपुंगवान्। विसृज्य स्वकरस्थोदं प्रणम्य भुवि दण्डवत् ॥६६॥
उत्थाय च ततो ब्रूयादमृतं भवतु द्विजान्। प्रार्थयेच्च परं प्रीत्या कृतांजलिरुदारधीः ॥६७॥
श्रीरुद्रं चमकं सूक्तं पौरुषं च यथाविधि। चित्ते सदाशिवं ध्यात्वा जपेद्ब्रह्माणि पञ्च च ६८॥
भोजनान्ते रुद्रसूक्तं क्षमापय्य द्विजान्पुनः। तन्मन्त्रे च ततो दद्यादुत्तरापोशनं पुरः ॥६९॥
प्रक्षालितांघ्रिराचम्य पिण्डस्थानं व्रजेत्ततः। आसीनः प्राङ्मुखो मौनी प्राणायामत्रयं चरेत् ७०॥
नान्दीमुखोक्तश्राद्धांगं करिष्ये पिण्डदानकम्। इति संकल्प्य दक्षादि समारभ्योदकान्तिकम् ७१॥
नव रेखाः समालिख्य प्रागग्रान्द्वादश क्रमात्। संस्तीर्य दर्भान्दक्षादिदेवादिस्थानपञ्चकम् ७२॥
तूष्णीं दद्यात्साक्षतोदं त्रिषु स्थानेषु च क्रमात्। स्थानेष्वन्येषु मातृषु मार्जयंस्तास्ततः परम् ७३॥
अत्रेति पितरः पश्चात्साक्षतोदं समर्च्य च। दद्यात्ततः क्रमेणैव देवादिस्थानपञ्चके ॥७४॥
तत्तद्देवादिनामानि चतुर्थ्यन्तान्युदीर्य्य च। पिण्डत्रयं ततो दद्यात्प्रत्येकं स्थानपञ्चके ॥७५॥
स्वगृह्योक्तेन मार्गेण दद्यात्पिण्डान्पृथक्पृथक्। दद्यादिदं साक्षतं च पितृसाद्गुण्यहेतवे ॥७६॥
ध्यायेत्सदाशिवं देवं हृदयाम्भोजमध्यतः। तत्पादपद्मस्मरणादिति श्लोकं पठन् पुनः ॥७७॥
नमस्कृत्य ब्राह्मणेभ्यो दक्षिणां च स्वशक्तितः। दत्त्वा क्षमापय्य च तान्विसृज्य च ततः क्रमात् ७८
पिण्डानुत्सृज्य गोग्रासं दद्यान्नोचेज्जले क्षिपेत्। पुण्याहवाचनं कृत्वा भुंजीत स्वजनैः सह ॥७९॥
अन्येद्युः प्रातरुत्थाय कृतनित्यक्रियः सुधीः। उपोष्य क्षौरकर्मादि कक्षोपस्थविवर्जितम् ॥८०॥
केशश्मश्रुनखानेव कर्मावधि विसृज्य च। समष्टिकेशान्विधिवत्कारयित्वा विधानतः ॥८१॥
स्नात्वा धौतपटः शुद्धो द्विराचम्याथ वाग्यतः। भस्म संधार्य विधिना कृत्वा पुण्याहवाचनम् ८२
तेन संप्रोक्ष्य संप्राप्य शुद्धदेहस्वभावतः। होमद्रव्यार्थमाचार्यदक्षिणार्थं विहाय च ॥८३॥
द्रव्यजातं महेशाय द्विजेभ्यश्च विशेषतः। भक्तेभ्यश्च प्रदायाथ शिवाय गुरुरूपिणे ॥८४॥
वस्त्रादिदक्षिणां दत्त्वा प्रणम्य भुवि दण्डवत्। दोरकौपीनवसनं दण्डाद्यं क्षालितं भुवि ॥८५॥
आदाय होमद्रव्याणि समिधादीनि च क्रमात्। समुद्रतीरे नद्यां वा पर्वते वा शिवालये ॥८६॥

अरण्ये चापि गोष्ठे वा विचार्य स्थानमुत्तमम्। स्थित्वाचम्य ततः पूर्वं कृत्वा मानसमञ्जरीम् ८७
ब्राह्ममोंकारसहितं नमो ब्रह्मण इत्यपि। जपित्वा त्रिस्ततो ब्रूयादग्निमीले पुरोहितम् ॥८८
अथ महाव्रतमिति अग्निर्वै देवनामतः। तथैतस्य समाम्नायमिषे त्वोर्ज्जे त्वा वेति तत् ॥८९
अग्न आयाहि वीतये शन्नो देवीरभीष्टये। पश्चात्प्रोच्य मयरसतजभनलगैः सह ॥९०
संमितं च ततः पञ्चसंवत्सरमयं ततः। समाम्नायः समाम्नातः अथ शिक्षां वदेत्पुनः ॥९१
अथातो धर्मजिज्ञासेत्युच्चार्य पुनरंजसा। अथातो ब्रह्मजिज्ञासा देवादीनपि संजपेत् ॥९२
ब्रह्माणमिन्द्रं सूर्यञ्च सोमं चैव प्रजापतिम्। आत्मानमन्तरात्मानं ज्ञानात्मानमतः परम् ॥९३
परमात्मानमपि च प्रणवाद्यं नमोंतकम्। चतुर्थ्यन्तं जपित्वाऽथ सक्तुमुष्टिं प्रगृह्य च ॥९४
प्राश्याथ प्रणवेनैव द्विराचम्याथ संस्पृशेत्। माभिमन्त्रं वक्ष्यमाणं प्रणवाद्यान्नमोन्तकान् ९५
आत्मानमन्तरात्मानं ज्ञानात्मानं परं पुनः। आत्मानं च समुच्चार्य प्रजापतिमतः परम् ॥९६
स्वाहांतान्प्रजपेत्पश्चात्पयोदधिघृतं पृथक्। त्रिवारं प्रणवेनैव प्राश्याचम्य द्विधा पुनः ॥९७
प्रागास्य उपविश्याथ दृढचित्तः स्थिरासनः। यथोक्तविधिना सम्यक् प्राणायामत्रयञ्चरेत् ॥९८

इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां संन्यासविधिवर्णनं नाम द्वादशोऽध्यायः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः

### (संन्यासविधिः)

सुब्रह्मण्य उवाच

अथ मध्याह्नसमये स्नात्वा नियतमानसः। गन्धपुष्पाक्षतादीनि पूजाद्रव्याण्युपाहरेत् ॥१
नैर्ऋत्ये पूजयेद्देवं विघ्नेशं देवपूजितम्। गणानां त्वेति मन्त्रेणावाहयेत्सुविधानतः ॥२
रक्तवर्णं महाकायं सर्वाभरणभूषितम्। पाशांकुशाक्षाभीष्टञ्च दधानं करपंकजैः ॥३
एवमावाह्य सन्ध्यायां शम्भुपुत्रं गजाननम्। अभ्यर्च्य पायसापूपनारिकेलगुडादिभिः ॥४
नैवेद्यमुत्तमं दद्यात्ताम्बूलादिमथापरम्। परितोष्य नमस्कृत्य निर्विघ्नं प्रार्थयेत्ततः ॥५
औपासनाग्नौ कर्त्तव्यं स्वगृह्योक्तविधानतः। आज्यभागान्तमाग्नेयं मखतन्त्रमतः परम् ॥६
भूः स्वाहेतित्र्यृचा पूर्णाहुतिं हुत्वा समाप्य च। गायत्रीं प्रजपेद्यावदपराह्णमतंद्रितः ॥७
अथ सायन्तनीं सन्ध्यामुपास्य स्नानपूर्वकम्। सायमौपासनं हुत्वा मौनी विज्ञापयेद्गुरुम् ॥८
अर्पयित्वा चरुं तस्मिन्समिदन्नाज्यभेदतः। जुहुयाद्रौद्रसूक्तेन सद्योजातादिपञ्चभिः ॥९
ब्रह्मभिश्च महादेवं सांबं वह्नौ विभावयेत्। गौरीर्मिमाय मन्त्रेण हुत्वा गौरीमनुस्मरन् ॥१०

ततोऽग्नये स्विष्टकृते स्वाहेति जुहुयात्सकृत्। हुत्वोपरिष्टात्तन्त्रं तु ततोऽग्नेरुत्तरे बुधः ॥११॥
स्थित्वासने जयेन्मौनी चैलाजिनकुशोत्तरे। आब्राह्मं च मुहूर्तं तु गायत्रीं दृढमानसः ॥१२॥
ततः स्नात्वा त्वशक्तश्चेच्छुद्धमना वा विधानतः। श्रपयित्वा चरुं तस्मिन्नग्नावेवाभिघारितम् ॥१३॥
उदगुद्वास्य बर्हिष्यासाद्याज्येन चरुं ततः। अभिघार्य व्याहृतीश्च रौद्रसूक्तञ्च पञ्च च ॥१४॥
जपेद्ब्रह्माणि सन्धार्य चित्तं शिवपदांबुजे। प्रजापतिमथेन्द्रञ्च विश्वेदेवास्ततः परम् ॥१५॥
ब्रह्माणं सचतुर्थ्यन्तं स्वाहांतान् प्रणवादिकान्। संजप्य वाचयित्वाऽथ पुण्याहं च ततःपरम् ॥१६॥
परस्तात्तंत्रमग्नये स्वाहेत्यग्निमुखावधि। निर्वर्त्य पश्चात्प्राणाय स्वाहेत्यारभ्य पञ्चभिः १७॥
साज्येन चरुणा पश्चादग्निं स्विष्टकृतं हुनेत्। पुनश्च प्रजपेत्सूक्तं रौद्रं ब्रह्माणि पञ्च च ॥१८॥
महेशादि चतुर्व्यूहमन्त्रांश्च प्रजपेत्पुनः। हुत्वोपरिष्टात्तन्त्रं तु स्वशाखोक्तेन वर्त्मना ॥१९॥
तत्तद्देवान्समुद्दिश्य सांगं कुर्याद्विचक्षणः। एवमग्निमुखाद्यं यत्कर्मतन्त्रं प्रवर्तितम् ॥२०॥
अतः परं प्रजुहुयाद्विरजाहोममात्मनः। षड्विंशत्तत्त्वरूपेऽस्मिन्देहे लीनस्य शुद्धये ॥२१॥
तत्त्वान्येतानि मद्देहे शुध्यन्तामित्यनुस्मरन्। तत्रात्मतत्त्वशुद्ध्यर्थं मन्त्रैरारुणकेतुकैः ॥२२॥
पठ्यमानैः पृथिव्यादिपुरुषांतं क्रमान्मुने। साज्येन चरुणा मौनी शिवपादाम्बुज स्मरन् २३॥
पृथिव्यादि च शब्दादि वागाद्यं पञ्चकं पुनः। श्रोत्राद्यञ्च शिरःपार्श्वपृष्ठोदरचतुष्टयम् ॥२४॥
जंघां च योजयेत्पश्चात्त्वगाद्यं धातुसप्तकम्। प्राणाद्यं पञ्चकं पश्चादन्नाद्यं कोशपञ्चकम् ॥२५॥
मनश्चित्तं च बुद्धिश्चाहंकृतिः ख्यातिरेव च। संकल्प तु गुणाः पश्चात्प्रकृतिः पुरुषस्ततः ॥२६॥
पुरुषस्य तु भोक्तृत्वं प्रतिपन्नस्य भोजने। अन्तरंगतया तत्त्वपञ्चकं परिकीर्तितम् ॥२७॥
नियतिः कालरागश्च विद्या च तदनन्तरम्। कला च पञ्चकमिदं मायोत्पन्नं मुनीश्वर ॥२८॥
मायां तु प्रकृतिं विद्यादिति माया श्रुतीरिता। तज्जान्येतानि तत्त्वानि श्रुत्युक्तानि न संशयः २९
कालस्वभावो नियतिरिति च श्रुतिरब्रवीत्। एतत्पञ्चकमेवास्य पञ्चकञ्चकमुच्यते ॥३०॥
अजानन्पञ्च तत्त्वानि विद्वानपि च मूढधीः। निपत्याधस्तात्प्रकृतेरुपरिष्टात्पुमानयम् ॥३१॥
काकाक्षिन्यायमाश्रित्य वर्त्तते पार्श्वताऽन्वहम्। विद्यातत्त्वमिदं प्रोक्तं शुद्धविद्यामहेश्वरौ ॥३२॥
सदाशिवश्च शक्तिश्च शिवश्चेदं तु पञ्चकम्। शिवतत्त्वमिदं ब्रह्मन्प्रज्ञानब्रह्मवाग्यतः ॥३३॥
पृथिव्यादिशिवांतं यत्तत्त्वजातं मुनीश्वर। स्वकारणलयद्वारा शुद्धिरस्य विधीयताम् ॥३४॥
एकादशानां मन्त्राणां परस्मैपदपूर्वकम्। शिवज्योतिश्चतुर्थ्यंतमिदं पदमथोच्चरेत् ॥३५॥
न ममेति वदेत्पश्चादुद्देशत्याग ईरितः। अतः परं विविद्येति कषोत्केति मन्त्रयोः ॥३६॥
व्यापकाय पदस्यान्ते परमात्मन इत्यपि। शिवज्योतिश्चतुर्थ्यन्तं विश्वभूतपदं पुनः ॥३७॥
घसनोत्सुकशब्दश्च चतुर्थ्यंतमथो वदेत्। परस्मैपदमुच्चार्य देवाय पदमुच्चरेत् ॥३८॥

उत्तिष्ठस्वेति मन्त्रस्य विश्वरूपाय शब्दतः। पुरुषाय पदं ब्रूयादोंस्वाहेत्यस्य संवदेत् ॥३९॥
लोकत्रयपदस्यान्ते व्यापिने परमात्मने। शिवायेदं न मम पदं ब्रूयादतः परम् ॥४०॥
स्वशाखोक्तप्रकारेण पुरस्तात्तन्त्रकर्म च। निर्वर्त्य सर्पिषा मिश्रं चरुं प्राश्य पुरोधसे ॥४१॥
प्रदद्याद्दक्षिणां तस्मै हेमादिपरिवृंहिताम्। ब्रह्माणमुद्वास्य ततः प्रातरौपासनं हुनेत् ॥४२॥
संमांसिञ्चन्तु मरुत इति मन्त्रञ्जपेन्नरः। याते अग्न इत्यनेन मन्त्रेणाग्नौ प्रताप्य च ॥४३॥
हस्तमग्नौ समारोप्य स्वात्मन्यद्वैतधामनि। प्राभातिकीं ततः सन्ध्यामुपास्यादित्यमप्यथ ॥४४॥
उपस्थाय प्रविश्याप्सु नाभिदघ्नं प्रवेशयन्। तन्मन्त्रान्प्रजपेत्प्रीत्या निश्चलात्मा समुत्सुकः ॥४५॥
आहिताग्निस्तु यः कुर्यात्प्राजापत्येष्टिमाहिते। श्रौते वैश्वानरे सम्यक् सर्ववेदसदक्षिणाम् ॥४६॥
अथाग्निमात्मन्यारोप्य ब्राह्मणः प्रव्रजेद्‌गृहात्। सावित्रीं प्रथमं पादं सावित्रीमित्युदीर्य च ॥४७॥
प्रवेशयामि शब्दान्ते भूरोमिति च संवदेत्। द्वितीयं पादमुच्चार्य सावित्रीमिति पूर्ववत् ॥४८॥
प्रवेशयामि शब्दान्ते भुवरोमिति संवदेत्। तृतीयं पादमुच्चार्य सावित्रीमित्यतः परम् ॥४९॥
प्रवेशयामि शब्दान्ते सुवरोमित्युदीरयेत्। त्रिपादमुच्चरेत्पूर्वं सावित्रीमित्यतः परम् ॥५०॥
प्रवेशयामि शब्दान्ते भूर्भुवः सुवरोमिति। उदीरयेत्परं प्रीत्या निश्चलात्मा मुनीश्वर ॥५१॥
इयम्भगवती साक्षाच्छंकरार्द्धशरीरिणी। पञ्चवक्त्रा दशभुजा त्रिपञ्चनयनोज्ज्वला ॥५२॥
नवरत्नकिरीटोद्यच्चन्द्रलेखावतंसिनी। शुद्धस्फटिकसंकाशा दशायुधधरा शुभा ॥५३॥
हारकेयूरकटककिंकिणीनूपुरादिभिः। भूषितावयवा दिव्यवसना रत्नभूषणा ॥५४॥
विष्णुना विधिना देवऋषिगन्धर्वनायकैः। मानवैश्च सदा सेव्या सर्वात्मव्यापिनी शिवा ॥५५॥
सदाशिवस्य देवस्य धर्मपत्नी मनोहरा। जगदम्बात्रिजननी त्रिगुणा निर्गुणाप्यजा ॥५६॥
इत्येवं संविचार्याथ गायत्रीं प्रजपेत्सुधीः। आदिदेवीं च त्रिपदां ब्राह्मणत्वादिदामजाम् ॥५७॥
यो ह्यन्यथा जपेत्पापो गायत्रीं शिवरूपिणीम्। स पच्यते महाघोरे नरके कल्पसंख्यया ॥५८॥
सा व्याहृतिभ्यः संजाता तास्वेव विलयं गता। ताश्च प्रणवसम्भूताः प्रणवे विलयं गताः ॥५९॥
प्रणवः सर्ववेदादिः प्रणवः शिववाचकः। मन्त्राधिराजराजश्च महाबीजं मनुः परः ॥६०॥
शिवो वा प्रणवो ह्येष प्रणवो वा शिवः स्मृतः। वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते यतः ॥६१॥
एनमेव महामन्त्रञ्जीवानाञ्च तनुत्यजाम्। काश्यां संश्राव्य मरणे दत्ते मुक्तिं परां शिवः ॥६२॥
तस्मादेकाक्षरं देवं शिवं परमकारणम्। उपासते यतिश्रेष्ठा हृदयांभोजमध्यगम् ॥६३॥
मुमुक्षवोऽपरे धीरा विरक्ता लौकिका नराः। विषयान्मनसा ज्ञात्वोपासते परमं शिवम् ॥६४॥
एवं विलाप्य गायत्रीं प्रणवे शिववाचके। अहं वृक्षस्य रेरिवेत्यनुवाकं जपेत्पुनः ॥६५॥
यश्छन्दसामामृषभ इत्यनुवाकमुपक्रमात्। गोपायांतं जपन्पश्चादुत्थितोऽहमितीरयेत् ॥६६॥

वदेज्जपेत्त्रिधा मन्दमध्योच्चक्रमान्मुने। प्रणवं पूर्वमुद्धृत्य सृष्टिस्थितिलयक्रमात् ॥६७॥
तेषामथ क्रमाद्भूयाद्भूः संन्यस्तं भुवस्तथा। संन्यस्तं सुवरित्युक्त्वा संन्यस्तं पदमुच्चरन् ॥६८॥
सर्वमंत्राद्यः प्रदेशे मयेति च पदं वदेत्। प्रणवं पूर्वमुद्धृत्य समष्टिव्याहृतीर्वदेत् ॥६९॥
समस्तमित्यतो ब्रूयान्मयेति च समब्रवीत्। सदाशिवं हृदि ध्यात्वा मंदादीति ततो मुने ७०
प्रैषमंत्रांस्तु जप्त्वैवं सावधानेन चेतसा। अभयं सर्वभूतेभ्यो मत्तः स्वाहेति संजपन् ॥७१॥
प्राच्यां दिश्यप उद्धृत्य प्रक्षिपेदंजलिं ततः। शिखां यज्ञोपवीतं च यत्रोत्पाट्य च पाणिना ७२॥
गृहीत्वा प्रणवं भूश्च समुद्रं गच्छ संवदेत्। वह्निजायां समुच्चार्य सोदकाञ्जलिना ततः ॥७३॥
अप्सु हूयादथ प्रैषैरभिमंत्र्य त्रिधा त्वपः। प्राश्य तीरे समागत्य भूमौ वस्त्रादिकं त्यजेत् ॥
उदङ्मुखः प्राङ्मुखो वा गच्छेत्सप्तपदाधिकम्। किञ्चिद्दूरमथाचार्यस्तिष्ठ तिष्ठेति संवदेत् ॥
लोकस्य व्यवहारार्थं कौपीनं दण्डमेव च। भगवन्स्वीकुरुष्वेति दद्यात्स्वेनैव पाणिना ॥७६॥
दत्त्वा सुदोरं कौपीनं काषायवसनं ततः। आच्छाद्याचम्य च द्वेधा तं शिष्यमिति संवदेत् ॥
इंद्रस्य वज्रोऽसि तत इति मन्त्रमुदाहरेत्। सम्प्रार्थ्य दण्डं गृह्णीयात्सखाय इति सजपन् ७८
अथ गत्वा गुरोः पार्श्वं शिवपादाम्बुजं स्मरन्। प्रणमेद्दंडवद्भूमौ त्रिवारं संयतात्मवान् ॥७९॥
पुनरुत्थाय च शनैः प्रेम्णा पश्यन्गुरुं निजम्। कृतांजलिपुटस्तिष्ठेद्गुरुपादसमीपतः ॥८०॥
कर्मारम्भात्पूर्वमेव गृहीत्वा गोमयं शुभम्। स्थूलामलकमात्रेण कृत्वा पिण्डान्प्रशोषयेत् ८१॥
सौरैस्तु किरणैरेव होमारम्भाग्निमध्यगान्। निक्षिप्य होमसम्पूर्त्तौ भस्म संगृह्य गोपयेत् ॥८२॥
ततो गुरुः समादाय विरजानलजं सितम्। भस्म तेनैव तं शिष्यमग्निरित्यादिभिः क्रमात् ॥
मंत्रैरंगानि संस्पृश्य मूर्द्धादिचरणान्ततः। ईशानाद्यैः पञ्चमंत्रैः शिर आरभ्य सर्वतः ॥८४॥
समुद्धृत्य विधानेन त्रिपुण्ड्रं धारयेत्ततः। त्रियायुषैस्त्र्यम्बकैश्च मूर्ध्न आरभ्य च क्रमात् ॥
ततः सद्भक्तियुक्तेन चेतसा शिष्यसत्तमः। हृत्पङ्कजे समासीनं ध्यायेच्छिवमुमासखम् ॥८६॥
हस्तं निधाय शिरसि शिष्यस्य स गुरुर्वदेत्। त्रिवारं प्रणवं दक्षकर्णे ऋष्यादिसंयुताम् ॥८७॥
ततः कृत्वा च करुणां प्रणवस्यार्थमादिशेत्। षड्विधार्थपरिज्ञानसहितं गुरुसत्तमः ॥८८॥
द्विषट्प्रकारं स गुरुं प्रणमेद्भुवि दण्डवत्। तदधीनो भवेन्नित्यं नान्यत्कर्म समाचरेत् ॥८९॥
तदाज्ञया ततः शिष्यो वेदान्तार्थानुसारतः। शिवज्ञानपरो भूयात्सगुणागुणभेदतः ॥९०॥
ततस्तेनैव शिष्येण श्रवणाद्यङ्गपूर्वकम्। प्राभातिकाद्यनुष्ठानं जपान्तं कारयेद्गुरुः ॥९१॥
पूजां च मण्डले तस्मिन्कैलासप्रस्तराह्वये। शिवोदितेन मार्गेण शिष्यस्तत्रैव पूजयेत् ॥९२॥
देवं नित्यमशक्तश्चेत्पूजितुं गुरुणा शुभम्। स्फाटिकं पीठिकोपेतं गृह्णीयाल्लिंगमैश्वरम् ॥९३॥
वरं प्राणपरित्यागश्छेदनं शिरसोऽपि मे। न त्वनभ्यर्च्य भुंजीयां भगवन्तं त्रिलोचनम् ॥९४॥

एवं त्रिवारमुच्चार्य शपथं गुरुसन्निधौ। कुर्याद्दृढमनाः शिष्यः शिवभक्तिं समुद्वहन् ॥
तत एव महादेवं नित्यमुद्युक्तमानसः। पूजयेत्परया भक्त्या पंचावरणमार्गतः ॥६६
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां संन्यासविधिर्नाम त्रयोदशोऽध्यायः ॥ १३

# अथ चतुर्दशोऽध्यायः

## ( शिवरूपप्रणववर्णनम् )

### वामदेव उवाच

भगवन्षण्मुखाशेषविज्ञानामृतवारिधे। विश्वामरेश्वरसुत प्रणतार्त्तिप्रभंजन ॥ १
षड्विधार्थपरिज्ञानमिष्टदं किमुदाहृतम्। के तत्र षड्विधा अर्थाः परिज्ञानं च किं प्रभो ॥
प्रतिपाद्यश्च कस्तस्य परिज्ञाने च किं फलम्। एतत्सर्वं समाचक्ष्व यद्यत्पृष्टं महागुह ॥ ३
एतमर्थमविज्ञाय पशुशास्त्रविमोहितः। अद्याप्यहं महासेन भ्रान्तश्च शिवमायया ॥ ४
अहं शिवपदद्वंद्वज्ञानामृतरसायनम्। पीत्वा विगतसम्मोहो भविष्यामि यथा तथा ॥
कृपामृतार्द्रया दृष्ट्या विलोक्य सुचिरं मयि। कर्त्तव्योऽनुग्रहः श्रीमत्पादाब्जशरणागते ॥ ६
इति श्रुत्वा मुनीन्द्रोक्तं ज्ञानशक्तिधरो विभुः। प्राहान्यदर्शनमहासंत्रासजनकं वचः ॥ ७

### सुब्रह्मण्य उवाच

श्रूयतां मुनिशार्दूल त्वया यत्पृष्टमादरात्। समष्टिव्यष्टिभावेन परिज्ञानं महेशितुः ॥ ८
प्रणवार्थपरिज्ञानरूपं तद्विस्तरादहम्। वदामि षड्विधार्थैक्यपरिज्ञानेन सुव्रत ॥ ९
प्रथमो मंत्ररूपः स्याद्द्वितीयो मंत्रभावितः। देवतार्थस्तृतीयोऽर्थः प्रपंचार्थस्ततः परम् ॥१०
चतुर्थः पंचमार्थः स्याद्गुरुरूपप्रदर्शकः। षष्ठः शिष्यात्मरूपोऽर्थः षड्विधार्थाः प्रकीर्त्तिताः ॥
तत्र मन्त्रस्वरूपं ते वदामि मुनिसत्तम। येन विज्ञातमात्रेण महाज्ञानी भवेन्नरः ॥१२
आद्यः स्वरः पंचमश्च पंचमान्तस्ततः परः। बिन्दुनादौ पंचार्णाः प्रोक्ता च वेदैर्न चान्यथा ॥
एतत्समष्टिरूपो हि वेदादिः समुदाहृतः। नादः सर्वसमष्टिः स्याद्बिन्द्वाद्यं यच्चतुष्टयम् ॥१४
व्यष्टिरूपेण संसिद्धं प्रणवे शिववाचके। यन्त्ररूपं शृणु प्राज्ञ शिवलिंगं तदेव हि ॥१५
सर्वाधस्तात्लिखेत्पीठं तदूर्ध्वं प्रथमं स्वरम्। उवर्णं च तदूर्ध्वस्थं पवर्गान्तं तदूर्ध्वगम् ॥१६
तन्मस्तकस्थं बिंदुं च तदूर्ध्वं नादमालिखेत्। यंत्रे संपूर्णतां याते सर्वकामः प्रसिध्यति ॥१७
एवं यंत्रं समालिख्य प्रणवेनैव वेष्टयेत्। तदुत्थेनैव नादेन विद्यान्नादावसानकम् ॥१८
देवतार्थं प्रवक्ष्यामि गूढं सर्वत्र यन्मुने। तव स्नेहाद्वामदेव यथा शंकरभाषितम् ॥१९
सद्योजातं प्रपद्यामीत्युपक्रम्य सदाशिवम्। इति प्राह श्रुतिस्तारं ब्रह्मपंचकवाचकम् ॥२०

विज्ञेया ब्रह्मरूपिण्यः सूक्ष्माः पंचैव देवताः। एता एव शिवस्यापि मूर्त्तित्वेनोपबृंहिताः ॥२१॥
शिवस्य वाचको मंत्रः शिवमूर्त्तेश्च वाचकः। मूर्त्तिमूर्त्तिमतोर्भेदो नात्यन्तं विद्यते यतः ॥२२॥
ईशानमुकुटोपेत इत्यारभ्य पुरोदिताः। शिवस्य विग्रहः पंचवक्त्राणि शृणु सांप्रतम् ॥२३॥
पंचमादि समारभ्य सद्योजाताद्यनुक्रमात्। उर्ध्वांतमीशानांतं च मुखपंचकमीरितम् ॥२४॥
ईशानस्यैव देवस्य चतुर्व्यूहपदे स्थितम्। पुरुषाद्यं च सद्यांतं ब्रह्मरूपं चतुष्टयम् ॥२५॥
पंचब्रह्मसमष्टिः स्यादीशानं ब्रह्म विश्रुतम्। पुरुषाद्यं तु तद्व्यष्टिः सद्योजातान्तिकं मुने ॥२६॥
अनुग्रहमयं चक्रमिदं पंचार्थकारणम्। परब्रह्मात्मकं सूक्ष्मं निर्विकारमनामयम् ॥२७॥
अनुग्रहोऽपि द्विविधस्तिरोभावादिगोचरः। प्रभुश्चान्यस्तु जीवानां परावरविमुक्तिदः ॥२८॥
एतत्सदा शिवस्यैव कृत्यद्वयमुदाहृतम्। अनुग्रहेऽपि सृष्ट्यादिकृत्यानां पंचकं विभोः ॥२९॥
मुने तत्रापि सद्याद्या देवताः परिकीर्त्तिताः। परब्रह्मस्वरूपास्ताः पंचकल्याणदाः सदा ॥३०॥
अनुग्रहमयं चक्रं शांत्यतीतकलामयम्। सदाशिवाधिष्ठितं च परमं पदमुच्यते ॥३१॥
एतदेव पदं प्राप्यं यतीनां भावितात्मनाम्। सदाशिवोपासकानां प्रणवासक्तचेतसाम् ॥३२॥
एतदेव पदं प्राप्य तेन साकं मुनीश्वराः। भुक्त्वा सुविपुलान्भोगान्देवेन ब्रह्मरूपिणा ॥३३॥
महाप्रलयसंभूतौ शिवसाम्यं भजंति हि। न पतंति पुनः क्वापि संसाराब्धौ जनाश्च ते ॥३४॥
ते ब्रह्मलोक इति च श्रुतिराह सनातनी। ऐश्वर्यं तु शिवस्यापि समष्टिरिदमेव हि ॥३५॥
सर्वैश्वर्येण सम्पन्न इत्याहाथर्वणी शिखा। सर्वैश्वर्यप्रदातृत्वमस्यैव प्रवदन्ति हि ॥३६॥
चमकस्य पदान्नान्यदधिकं विद्यते पदम्। ब्रह्मपंचकविस्तारप्रपंचः खलु दृश्यते ॥३७॥
ब्रह्मभ्य एवं संजाता निवृत्त्याद्याः कला मताः। सूक्ष्मभूतस्वरूपिण्यः कारणत्वेन विश्रुताः ॥३८॥
स्थूलरूपस्वरूपस्य प्रपंचस्यास्य सुव्रत। पंचधाऽवस्थितं यत्तद्ब्राह्मपंचकमिष्यते ॥३९॥
पुरुषः श्रोत्रवाण्यौ च शब्दाकाशौ च पचमम्। व्याप्तमीशानरूपेण ब्रह्मणा मुनिसत्तम् ॥४०॥
पुरुषः श्रोत्रवाण्यौ च शब्दाकाशौ च पंचकम्। व्याप्तं पुरुषरूपेण ब्रह्मणैव मुनीश्वर ॥४१॥
अहंकारस्तथा चक्षुः पादो रूपं च पावकः। अघोरब्रह्मणा व्याप्तमेतत्पंचकमीरितम् ॥४२॥
बुद्धिश्च रसना पायू रस आपश्च पंचकम्। ब्रह्मणा वामदेवेन व्याप्तं भवति नित्यशः ॥४३॥
मनो नासा तथोपस्थो गन्धो भूमिश्च पंचकम्। सद्येन ब्रह्मणा व्याप्त पचब्रह्ममयं जगत् ॥४४॥
यंत्ररूपेणोपदिष्टः प्रणवः शिववाचकः। समष्टिः पञ्चवर्णानां बिंद्वाद्यं यच्चतुष्टयम् ॥४५॥
शिवोपदिष्टमार्गेण यंत्ररूपं विभावयेत्। प्रणवं परमं मंत्राधिराजं शिवरूपिणम् ॥४६॥

इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां शिवरूपप्रणववर्णनं
नाम चतुर्दशोऽध्यायः ॥ १४ ॥

## अथ पञ्चदशोऽध्यायः

### ( उपासनामूर्तिवर्णनम् )

ईश्वर उवाच

अतः परं प्रवक्ष्यामि सृष्टिपद्धतिमुत्तमाम्। सदाशिवान्महेशादिचतुष्कस्य वरानने ॥ १॥
सदाशिवः समष्टिः स्यादाकाशाधिपतिः प्रभुः। अस्यैव व्यष्टितापन्नं महेशादिचतुष्टयम् ॥ २॥
सदाशिवसहस्रांशान्महेशस्य समुद्भवः। पुरुषाननरूपत्वाद्वायोरधिपतिश्च सः ॥ ३॥
मायाशक्तियुतो वामे सकलश्च क्रियाधिकः। अस्यैव व्यष्टिरूपं स्यादीश्वरादिचतुष्टयम् ॥ ४॥
ईशो विश्वेश्वरः पश्चात् परमेशस्ततः परम्। सर्वेश्वर इतीदं तु तिरोधाचक्रमुत्तमम् ॥ ५॥
तिरोभावो द्विधा भिन्न एको रुद्रादिगोचरः। अन्यश्च देहभावेन पशुवर्गस्य संततेः ॥ ६॥
भोगानुरंजनपरः कर्मसाम्यक्षणावधि। कर्मसाम्ये स एकः स्यादनुग्रहमयो विभुः ॥ ७॥
तत्र सर्वेश्वरा यास्ते देवताः परिकीर्त्तिताः। परब्रह्मात्मकाः साक्षान्निर्विकल्पा निरामयाः ॥८॥
तिरोभावात्मकं चक्रं भवेच्छान्तिकलामयम्। महेश्वराधिष्ठितं च पदमेतदनुत्तमम् ॥ ९॥
एतदेव पदं प्राप्यं महेशपदसेविनाम्। माहेश्वराणां सालोक्यक्रमादेव विमुक्तिदम् ॥१०॥
महेश्वरः सहस्रांशाद्रुद्रमूर्तिरजायत। अघोरवदनाकारस्तेजस्तत्त्वाधिपश्च सः ॥११॥
गौरीशक्तियुतो वामे सर्वसंहारकृत्प्रभुः। अस्यैव व्यष्टिरूपं स्याच्छिवाद्यथ चतुष्टयम् ॥१२॥
शिवो हरो मृडभवौ विदितं चक्रमद्भुतम्। संहाराख्यं महादिव्यं परमं हि मुनीश्वर ॥१३॥
स संहारस्त्रिधा प्रोक्तो बुधैर्नित्यादिभेदतः। नित्यो जीवसुषुप्त्याख्यो विधेर्नैमित्तिकः स्मृतः।
विलयस्तस्य तु महानिति वेदनिदर्शितः। जीवानां जन्मदुःखादिश्रांतानामुषितात्मनाम् १४॥
विश्रांत्यर्थं मुनिश्रेष्ठ कर्मणां पाकहेतवे। संहारः कल्पितस्त्रेधा रुद्रेणामिततेजसा ॥१६॥
रुद्रस्यैव तु कृत्यानां त्रयमेतदुदाहृतम्। संहृतावपि सृष्ट्यादिकृत्यानां पञ्चकं विभोः ॥१७॥
मुने तत्र भवाद्यास्ते देवताः परिकीर्तिताः। परब्रह्मस्वरूपाश्च लोकानुग्रहकारकाः ॥१८॥
संहाराख्यमिदं चक्रं विद्यारूपकलामयम्। अधिष्ठितं च रुद्रेण पदमेतन्निरामयम् ॥१९॥
एतदेव पदं प्राप्यं रुद्राराधनकारिणाम्। रुद्राणां तद्धि सालोक्यक्रमात्सायुज्यदं मुने ॥२०॥
रुद्रमूर्त्तेः सहस्रांशाद्विष्णोश्चैवाभवज्जनिः ।स वामदेवचक्रात्मा वारितत्त्वैकनायकः ॥२१॥
रमाशक्तियुतो वामे सर्वरक्षाकरो महान्। चतुर्भुजोऽरविंदाक्षः श्यामः शंखादिचिह्नभृत्।
अस्यैव वासुदेवादिचतुष्कं व्याष्टता गतम्। उपासनारतानां वै वैष्णवानां विमुक्तिदम् ॥२३
वासुदेवोऽनिरुद्धश्च ततः संकर्षणः परः। प्रद्युम्नश्चेति विख्यातं स्थितिचक्रमनुत्तमम् ॥२४
स्थितिः सृष्टस्य जगतस्तत्कर्त्रा सह पालनम्। आरब्धकर्मभोगान्तं जीवानां फलभोगिनाम्।

विष्णोरेवेदमाख्यातं कृत्यं रक्षाविधायिनः। स्थितावपि तु सृष्ट्यादिकृत्यानां पंचकं विभोः ॥
तत्र प्रद्युम्नमुख्यास्ते देवताः परिकीर्तिताः। निर्विकल्पा निरातंका मुक्तानंदकराः सदा ॥२७॥
स्थितिचक्रमिदं ब्रह्मन्प्रतिष्ठारूपमुत्तमम्। जनार्दनाधिष्ठितं च परमं पदमुच्यते ॥२८॥
एतदेव पदं प्राप्यं विष्णुपादाब्जसेविनाम्। वैष्णवानां चक्रमिदं सालोक्यादिपदप्रदम् ॥२९॥
विष्णोरेव सहस्रांशात्संबभूव पितामहः। सद्योजातमुखात्मा यः पृथिवीतत्त्वनायकः ॥३०॥
वाग्देवीसहितो वामे सृष्टिकर्त्ता जगत्प्रभुः। चतुर्मुखो रक्तवर्णो रजोरूपस्वरूपवान् ॥३१॥
हिरण्यगर्भाद्यस्यैव व्यष्टिरूपं चतुष्टयम्। हिरण्यगर्भोऽथ विराट् पुरुषः काल एव च ॥३२॥
सृष्टिचक्रमिदं ब्रह्मपुत्रादिऋषिसेवितम्। सर्वकामार्थदं ब्रह्मन्परिवारसुखप्रदम् ॥३३॥
सृष्टिस्तु संहृतस्यास्य जीवस्य प्रकृतौ बहिः। आनीय क्रमभोगार्थं साधनांगफलैः सह ॥३४॥
संयोजनमितीदं तु कृत्यं पैतामहं विदुः। जगत्सृष्टिक्रियाविज्ञा यात्रद्वयहं सुखावहम् ॥३५॥
जगत्सृष्टावपि मुने कृत्यानां पचकं विभोः। अस्तकालादयस्तत्र देवताः परिकीर्त्तिताः ॥३६॥
निवृत्तिरूपमाख्यातं सृष्टिचक्रमिदं बुधैः। पितामहाधिष्ठितं च पदमेतद्धि शोभनम् ॥३७॥
एतदेव पदं प्राप्यं ब्रह्मार्पितधियां नृणाम्। पैतामहानामेतद्धि सालोक्यादिविमुक्तिदम् ॥३८॥
अस्मिन्नपि चतुष्के तु चक्राणां प्रणवो भवेत्। महेशादिक्रमादेव गौण्या वृत्त्या स वाचकः ॥
इदं खलु जगच्चक्रं श्रुतिविश्रुतवैभवम्। पञ्चारं चक्रमिति ह स्तौति श्रुतिरिदं मुने ॥४०॥
एकमेव जगच्चक्रं शम्भोः शक्तिविजृम्भितम्। सृष्ट्यादिपंचावयवं पंचारमिति कथ्यते ॥४१॥
अलातचक्रभ्रमिवदविच्छिन्नलयोदयम् । परितो वर्तते यस्मात्तस्माच्चक्रमितीरितम् ॥४२॥
सृष्ट्यादिपृथुसृष्टित्वात्पृथुत्वेनो ग्हश्यते । हिरण्मयस्य देवस्य शम्भोरमिततेजसः ॥४३॥
शक्तिकार्यमिदं चक्रं हिरण्यज्योतिराश्रितम्। सलिलेनावृतमिदं सलिलं वह्निनाऽऽवृतम् ॥४४॥
आवृतो वायुना वह्निराकाशेनावृतं महत्। भूतादिना तथाकाशो भूतादिर्महताऽऽवृतः ॥४५॥
अव्यक्तेनावृतस्तद्वन्महानित्येवमास्तिकैः । ब्रह्माण्डमिति संप्रोक्तमाचार्यैर्मुनिसत्तम ॥४६॥
उक्तानि सप्तावरणान्यस्य विश्वस्य गुप्तये। चक्राद्दशगुणाधिक्यं सलिलस्य विधीयते ॥४७॥
उपर्य्युपरि चान्योन्यमेवं दशगुणाधिकम्। ब्रह्माण्डमिति विज्ञेयं तद्विद्भिर्मुनिनायक ॥४८॥
इममर्थं पुरोकृत्य चक्रसामीप्यवर्त्तनात्। सलिलस्य च तन्मध्ये इति प्राह श्रुतिः स्वयम् ॥४९॥
अनुग्रहतिरोभावसंहृतिस्थितिसृष्टिभिः । करोत्यविरतं लीलामेकः शक्तियुतः शिवः ॥५०॥
बहुनेह किमुक्तेन मुने सारं वदामि ते। शिव एवेदमखिलं शक्तिमानिति निश्चितम् ॥५१॥

इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायामुपासनामूर्ति-
वर्णनं नाम पंचदशोऽध्यायः ॥ १५ ॥

# अथ षोडशोऽध्यायः

## ( शिवतत्त्ववर्णनम् )

### सूत उवाच

श्रुत्वोपदिष्टं गुरुणा वेदार्थं मुनिपुंगवः। परमात्मनि संदिग्धं परिपप्रच्छ सादरम् ॥ १॥

### वामदेव उवाच

ज्ञानशक्तिधर स्वामिन्परमानन्दविग्रह। प्रणवार्थामृतं पीतं श्रीमुखाब्जात्परिस्रुतम् ॥ २॥
दृढप्रज्ञश्च जातोऽस्मि संदेहो विगतो मम। किंचिदन्यन्महासेन पृच्छामि त्वां शृणु प्रभो ॥३॥
सदाशिवादिकीटांतरूपस्य जगतः स्थितिः। स्त्रीपुंरूपेण सर्वत्र दृश्यते न हि संशयः ॥ ४॥
एवंरूपस्य जगतः कारणं यत्सनातनम्। स्त्रीरूपं तत्किमाहोस्वित्पुरुषो वा नपुंसकम् ॥५॥
उत मिश्रं किमन्यद्वा न जातस्तत्र निर्णयः। बहुधा विवदन्तीह विद्वांसः शास्त्रमोहिताः ॥ ६॥
जगत्सृष्टिविधायिन्यः श्रुतयो जगता सह। विष्णुब्रह्मादयो देवाः सिद्धाश्च न विदन्ति हि ॥७॥
यथैक्यभावं गच्छेयुरेतदन्यच्च वेदय। जानामीति करोमीति व्यवहारः प्रदृश्यते ॥ ८॥
स हि सर्वात्मसंसिद्धो विवादो नात्र कस्यचित्। सर्वदेहेन्द्रियमनोबुद्ध्यहंकारसंभवः ॥ ९॥
आहोस्विदात्मनो रूपं महानत्रापि संशयः। द्वयमेतद्धि सर्वेषां विवादास्पदमद्भुतम् ॥१०॥
उत्पाट्याज्ञानसंभूतं संशयाख्यं विषद्रुमम्। शिवाद्वैतमहाकल्पवृक्षभूमिर्यथा भवेत् ॥११॥
चित्तं मम यथा देव बोध्योऽस्मि कृपया तव। कृपातस्तव देवेश दृढज्ञानी भवाम्यहम् ॥१२॥

### सूत उवाच

श्रुत्वैवं मुनिना पृष्टं वचो वेदान्तनिर्वृतम्। रहस्यं प्रभुराहेदं किंचित्प्रहसिताननः ॥१३॥

### सुब्रह्मण्य उवाच

एतदेव मुने गुह्यं शिवेन परिभाषितम्। अम्बायाः शृण्वतो देव्या वामदेव ममापि हि ॥१४॥
तस्याः स्तन्यं तदा पीत्वा संतृप्तोऽस्मि मुहुर्मुहुः। श्रुतवान्निश्चलं तद्वै निश्चितं मे विचारितम् ।
तत्ते वदामि दयया वामदेव महामुने। महद्गुह्यं च परमं सुत त्वं शृणु सांप्रतम् ॥१६॥
कमास्तितत्त्वादारभ्य शास्त्रवादः सुविस्तरः। यथाविवेकं श्रोतव्यो ज्ञानिना ज्ञानदो मुने ॥१७॥
त्वयोपदिष्टा ये शिष्यास्तत्र को वा भवत्समः। कापिलादिषु शास्त्रेषु भ्रमंत्यद्यापि तेऽधमाः १८
ते शप्ता मुनिभिः षड्भिःशिवनिन्दापराः पुरा। न श्रोतव्या हि तद्वार्ता तेऽन्यथावादिनो यतः।
अनुमानप्रयोगस्याप्यवकाशो न विद्यते। पंचावयवयुक्तस्य स तु धूमस्य दर्शनात् ॥२०॥
पर्वतस्याग्निमद्भावं वदंत्यत्रापि सुव्रत। प्रत्यक्षस्य प्रपंचस्य दर्शनालंबनं स्वतः ॥२१॥

ज्ञातव्यः परमेशानः परमात्मा न संशयः। स्त्रीपुंरूपमयं विश्वं प्रत्यक्षेणैव दृश्यते ॥२२॥
षट्कोशरूपः पिण्डो हि तत्र चाद्यत्रयं भवेत्। मात्रंशजं पुनश्चान्यत्पित्रंशजमिति श्रुतिः ॥२३॥
एवं सर्वशरीरेषु स्त्रीपुंभावविदो जनाः। परमात्मन्यपि मुने स्त्रीपुंभावं विदुर्बुधाः ॥२४॥
सच्चिदानंदरूपत्वं वदति ब्रह्मणः श्रुतिः। असन्निवर्त्तकः शब्दः सदात्मेति निगद्यते ॥२५॥
निवर्त्तनं जगत्त्वस्य चिच्छब्देन विधीयते। त्रिलिंगवर्त्ती सच्छब्दः पुरुषोऽत्र विधीयताम् ॥२६॥
प्रकाशवाची स भवेत्सप्रकाश इति स्फुटम्। ज्ञानशब्दस्य पर्यायश्चिच्छब्दः स्त्रीत्वमागतः ॥२७॥
प्रकाशश्चिच्च मिथुनं जगत्कारणतां गतम्। सच्चिदात्मन्यपि तथा जगत्कारणतां गते ॥२८॥
एकत्रैव शिवः शक्तिरिति भावो विधीयते। तैलवर्त्त्यादिमालिन्यात्प्रकाशस्यापि वर्त्तते ॥२९॥
मालिन्यमशिवत्वं च चिताग्न्यादिषु दृश्यते। एवं विवर्त्तकत्वेन शिवत्वं श्रुतिचोदितम् ॥३०॥
जीवाश्रितायाश्चिच्छक्तेर्दौर्बल्यं विद्यते सदा। तन्निवृत्त्यर्थमेवात्र शक्तित्वं सार्वकालिकम् ॥३१॥
बलवाञ्छक्तिमांश्चेति व्यवहारः प्रदृश्यते। लोके वेदे च सततं वामदेव महामुने ॥३२॥
एवं शिवत्वं शक्तित्वं परमात्मनि दर्शितम्। शिवशक्त्योस्तु संयोगादानंदः सततोदितः ॥३३॥
अतो मुने तमुद्दिश्य मुनयः क्षीणकल्मषाः। शिवे मनः समाधाय प्राप्ताः शिवमनामयम् ॥३४॥
सर्वात्मत्वं तयोरेवं ब्रह्मेत्युपनिषत्सु च। गीयते ब्रह्मशब्देन बृहिधात्वर्थगोचरम् ॥३५॥
बृंहणत्वं बृहत्वं च सदा शंभ्वाख्यविग्रहे। पंचब्रह्ममये विश्वप्रतीतिर्ब्रह्मशब्दिता ॥३६॥
प्रतिलोमात्मकं हंसे वक्ष्यामि प्रणवोद्भवम्। तव स्नेहाद्वामदेव सावधानतया शृणु ॥३७॥
व्यंजनस्य सकारस्य हकारस्य च वर्जनात्। ओमित्येव भवेत्स्थूलो वाचकः परमात्मनः ॥३८॥
महामन्त्रः स विज्ञेयो मुनिभिस्तत्त्वदर्शिभिः। तत्र सूक्ष्मो महामन्त्रस्तदुद्धारं वदामि ते ॥३९॥
आद्ये त्रिपंचरूपे च स्वरे षोडशके त्रिषु। महामन्त्रो भवेदादौ ससकारो भवेद्यदा ॥४०॥
हंसस्य प्रतिलोमः स्यात्सकारार्थः शिवः स्मृतः। शक्त्यात्मको महामन्त्रवाच्यः स्यादिति निर्णयः॥
गुरूपदेशकाले तु सोहं शक्त्यात्मकः शिवः। इति जीवपरो भूयान्महामन्त्रस्तदा पशुः ॥४२॥
शक्त्यात्मकः शिवांशश्च शिवैक्याच्छिवसाम्यभाक्। प्रज्ञानं ब्रह्मवाक्ये तु प्रज्ञानार्थः प्रदृश्यते ॥
प्रज्ञानशब्दश्चैतन्यपर्यायः स्यान्न संशयः। चैतन्यमात्मेति मुने शिवसूत्रं प्रवर्त्तितम् ॥४४॥
चैतन्यमिति विश्वस्य सर्वज्ञानक्रियात्मकम्। स्वातन्त्र्यं तत्स्वभावो यः स आत्मा परिकीर्त्तितः॥
इत्यादिशिवसूत्राणां वार्त्तिकं कथितं मया। ज्ञानं बंध इतीदं तु द्वितीयं सूत्रमीशितुः ॥४६॥
ज्ञानमित्यात्मनस्तस्य किंचिज्ज्ञानक्रियात्मकम्। इत्याहाद्यपदेनेशः पशुवर्गस्य लक्षणम् ॥४७॥
एतद्द्वयं पराशक्तेः प्रथमं स्पंदतां गतम्। एतामेव परां शक्तिं श्वेताश्वतरशाखिनः ॥४८॥
स्वाभाविकी ज्ञानबलक्रिया चेत्यस्तुवन्मुदा। ज्ञानक्रियेच्छारूपं हि शंभोर्दृष्टित्रयं विदुः ॥४९॥

एतन्मनोमध्यगं सदिन्द्रियज्ञानगोचरम्। अनुप्रविश्य जानाति करोति च पशुः सदा ॥५०॥
तस्मादात्मन एवेदं रूपमित्येव निश्चितम्। प्रपंचार्थं प्रवक्ष्यामि प्रणवैक्यप्रदर्शनम् ॥५१॥
ॐमितीदं सर्वमिति श्रुतिराह सनातनी। तस्माद्वेतीत्युपक्रम्य जगत्सृष्टिः प्रकीर्तिता ॥५२॥
तस्याः श्रुतेस्तु तात्पर्यं वक्ष्यामि श्रूयतामिदम्। तव स्नेहाद्वामदेव विवेकार्थविजृम्भितम् ॥५३॥
शिवशक्तिसमायोगः परमात्मेति निश्चितम्। पराशक्तेस्तु संजाता चिच्छक्तिस्तु तदुद्भवा ॥५४॥
आनन्दशक्तिस्तज्जा स्यादिच्छाशक्तिस्तदुद्भवा।
ज्ञानशक्तिस्ततो जाता क्रियाशक्तिस्तु पंचमी। एताभ्य एव संजाता निवृत्याद्याः कला मुने ॥५५॥
चिदानन्दसमुत्पन्नौ नादबिन्दू प्रकीर्तितौ। इच्छाशक्तेर्मकारस्तु ज्ञानशक्तेस्तु पंचमः ॥५६॥
स्वरः क्रियाशक्तिजातो ह्यकारस्तु मुनीश्वर। इत्युक्ता प्रणवोत्पत्तिः पंचब्रह्मोद्भवं शृणु ॥५७॥
शिवादीशान उत्पन्नस्ततस्तत्पुरुषोद्भवः। ततोऽघोरस्ततो वामः सद्योजातोद्भवस्ततः ॥५८॥
एतस्मान्मातृकादष्टत्रिंशन्मातृसमुद्भवः।
ईशानाच्छान्त्यतीताख्या कला जाताऽथ पूरुषात्। उत्पद्यते शान्तिकला विद्याऽघोरसमुद्भवा।
प्रतिष्ठा च निवृत्तिश्च वामसद्योद्भवे मते। ईशाच्चिच्छक्तिमुखतो विभोर्मिथुनपञ्चकम् ॥६०॥
अनुग्रहादिकृत्यानां हेतुः पञ्चकमिष्यते। तद्भिद्भिर्मुनिभिः प्रज्ञैर्वरतत्त्वप्रदर्शिभिः ॥६१॥
वाच्यवाचकसम्बन्धान्मिथुनत्वमुपेयुषि। कलावर्णस्वरूपेऽस्मिन्पञ्चके भूतपञ्चकम् ॥६२॥
वियदादिक्रमादासीदुत्पन्नं मुनिपुङ्गव। आद्यं मिथुनमारभ्य पञ्चमं यन्मयं विदुः ॥६३॥
शब्दैकगुण आकाशः शब्दस्पर्शगुणो मरुत्। शब्दस्पर्शरूपगुणप्रधानो वह्निरुच्यत ॥६४॥
शब्दस्पर्शरूपरसगुणकं सलिलं स्मृतम्। शब्दस्पर्शरूपरसगन्धाढ्या पृथिवी स्मृता ॥६५॥
व्यापकत्वञ्च भूतानामिदमेव प्रकीर्तितम्। व्याप्यत्वं वैपरीत्येन गन्धादिक्रमतो भवेत् ॥६६॥
भूतपञ्चकरूपोऽयं प्रपञ्चः परिकीर्त्यते। विराट् सर्वसमष्ट्यात्मा ब्रह्माण्डमिति च स्फुटम्
पृथिवीतत्त्वमारभ्य शिवतत्त्वावधि क्रमात्। निलीय तत्त्वसंदोहे जीव एव विलीयते ॥६८॥
संशक्तिकः पुनः सृष्टौ शक्तिद्वारा विनिर्गतः। स्थूलप्रपञ्चरूपेण तिष्ठत्याप्रलयं सुखम् ॥६९॥
निजेच्छया जगत्सृष्टुमुद्युक्तस्य महेशितुः। प्रथमो यः परिस्पन्दः शिव तत्त्वं तदुच्यते ॥७०॥
एषैवेच्छाशक्तितत्त्वं सर्वकृत्यानुवर्तनात्। ज्ञानक्रियाशक्तियुग्मे ज्ञानाधिक्ये सदाशिवः ॥७१॥
महेश्वरं क्रियोद्रेके तत्त्वं विद्धि मुनीश्वर। ज्ञानक्रियाशक्तिसाम्यं शुद्धविद्यात्मकं मतम् ॥७२॥
स्वाङ्गरूपेषु भावेषु मायातत्त्वविभेदधीः। शिवो यदा निजं रूपं परमैश्वर्यपूर्वकम् ॥७३॥
निगृह्य माययाऽशेषपदार्थग्राहको भवेत्। तदा पुरुष इत्याख्या तत्सृष्ट्वेत्यभवच्छ्रुतिः ॥७४॥
अयमेव हि संसारी मायया मोहितः पशुः। शिवज्ञानविहीनो हि नानाकर्मविमूढधीः ॥७५॥

शिवादभिन्नं न जगदात्मानं भिन्नमित्यपि। जानतोऽस्य पशोरेव मोहो भवति न प्रभोः ॥७६॥
यथैन्द्रजालिकस्यापि योगिनो न भवेद्भ्रमः। गुरुणा ज्ञापितैश्वर्यः शिवो भवति चिद्घनः ॥७७॥
सर्वकर्तृत्वरूपा च सर्वज्ञत्वस्वरूपिणी। पूर्णत्वरूपा नित्यत्वव्यापकत्वस्वरूपिणी ॥७८॥
शिवस्य शक्तयः पंच संकुचद्रूपभास्वराः। अपि संकोचरूपेण विभान्त्य इति नित्यशः ॥७९॥
पशोः कलाख्यविद्येति रागकालौ नियत्यपि। तत्त्वपंचकरूपेण भवत्यत्र कलेति सा ॥८०॥
किंचित्कर्तृत्वहेतुः स्यात्किंचित्तत्त्वैकसाधनम्। सा विद्या तु भवेद्रागो विषयेष्वनुरंजकः ॥८१॥
कालो हि भावभावानां भासानां भासनात्मकः। क्रमावच्छेदको भूत्वा भूतादिरिति कथ्यते ॥
इदं तु मम कर्तव्यमिदं नेति नियामिका। नियतिः स्याद्विभोः शक्तिस्तदाक्षेपात्पतेत्पशुः ॥
एतत्पंचकमेवास्य स्वरूपावारकत्वतः। पंचकञ्चुकमाख्यातमन्तरंगं च साधनम् ॥८४॥
इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां शिवतत्त्ववर्णनं नाम षोडशोऽध्यायः ॥१६॥

## अथ सप्तदशोऽध्यायः

### ( शिवाद्वैतज्ञानमादिसृष्टिकथनञ्च )

वामदेव उवाच

नियत्यधस्तात्प्रकृतेरुपरिस्थः पुमानिति। पूर्वत्र भवता प्रोक्तमिदानीं कथमन्यथा ॥ १ ॥
मायया संकुचद्रूपस्तदाधस्तादिति प्रभो। इति मे संशयं नाथ छेत्तुमर्हसि तत्त्वतः ॥ २ ॥

श्रीसुब्रह्मण्य उवाच

अद्वैतशैववादोऽयं द्वैतं न सहते क्वचित्। द्वैतं च नश्वरं ब्रह्माद्वैतं परमनश्वरम् ॥ ३ ॥
सर्वज्ञः सर्वकर्ता च शिवः सर्वेश्वरोऽगुणः। त्रिदेवजनको ब्रह्मा सच्चिदानन्दविग्रहः ॥ ४ ॥
स एव शंकरो देवः स्वेच्छया च स्वमायया। संकुचद्रूप इव सन्पुरुषः संबभूव ह ॥ ५ ॥
कलादिपञ्चकेनैव भोक्तृत्वेन प्रकल्पितः। प्रकृतिस्थः पुमानेष भुंक्ते प्रकृतिजान्गुणान् ॥ ६ ॥
इति स्थानद्वयान्तःस्थः पुरुषो न विरोधकः। संकुचन्निजरूपाणां ज्ञानादीनां समष्टिमान् ॥ ७ ॥
सत्त्वादिगुणसाध्यं च बुध्यादित्रितयात्मकम्। चित्तम्प्रकृतितत्त्वं तदासीत्सत्त्वादिकारणात् ॥ ८ ॥
सात्त्विकादिविभेदेन गुणाः प्रकृतिसम्भवाः। गुणेभ्यो बुद्धिरुत्पन्ना वस्तुनिश्चयकारिणी ॥ ९ ॥
ततो महानहङ्कारस्ततो बुद्धीन्द्रियाणि च। जातानि मनसो रूपं स्यात्संकल्पविकल्पकम् ॥१०॥
बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वा च नासिका। शब्दः स्पर्शश्च रूपं च रसो गन्धश्च गोचरः ११॥
बुद्धीन्द्रियाणां कथितः श्रोत्रादिक्रमतस्ततः। वैकारिकादहंकारात्तन्मात्राण्यभवन्क्रमात् ॥१२॥
तानि प्रोक्तानि सूक्ष्माणि मुनिभिस्तत्त्वदर्शिभिः। कर्मेन्द्रियाणि ज्ञेयानि स्वकार्यसहितानि च ॥

विप्रर्षे वाक्करौ पादौ पायूपस्थौ च तत्क्रियाः। वचनादानगमनविसर्गानन्दसंज्ञिताः ॥१४
भूतादिकादहंकारात्तन्मात्राण्यभवन् क्रमात्। तानि सूक्ष्माणि रूपाणि शब्दादीनामिति स्थितिः॥
तेभ्यश्चाकाशवाय्वग्निजलभूमिजनिः क्रमात्। विज्ञेया मुनिशार्दूल पंचभूतमितीष्यते ॥१६
अवकाशप्रदानं च वाहकत्वं च पावनम्। संरम्भो धारणं तेषां व्यापाराः परिकीर्तिताः ॥१७
## वामदेव उवाच
भूतसृष्टिः पुरा प्रोक्ता कलादिभ्यः कथं पुनः। अन्यथा प्रोच्यते स्कंद संदेहोऽत्र महान्मम ॥१८
आत्मतत्त्वमकारः स्याद्विद्या स्यादुस्ततः परम्। शिवतत्त्वं मकारः स्याद्वामदेवेति चिंत्यताम्॥
बिंदुनादौ तु विज्ञेयौ सर्वतत्त्वार्थकावुभौ। तत्रत्या देवता याश्च ता मुने शृणु सांप्रतम् ॥२०
ब्रह्मा विष्णुश्च रुद्रश्च महेश्वरसदाशिवौ। ते हि साक्षाच्छिवस्यैव मूर्तयः श्रुतिविश्रुताः ॥२१
इत्युक्तं भवता पूर्वमिदानीमुच्यतेऽन्यथा। तन्मात्रेभ्यो भवन्तीति सन्देहोऽत्र महान्मम ॥२२
कृत्वा तत्करुणां स्कन्द संशयं छेत्तुमर्हसि। इत्याकर्ण्य मुनेर्वाक्यं कुमारः प्रत्यभाषत ॥२३
## श्रीसुब्रह्मण्य उवाच
तस्माद्वेति समारभ्य भूतसृष्टिक्रमे मुने। ताञ्छृणुष्व महाप्राज्ञ सावधानतयाऽऽदरात् ॥२४
जातानि पंच भूतानि कलाभ्य इति निश्चितम्। स्थूलप्रपंचरूपाणि तानि भूतपतेर्वपुः ॥२५
शिवतत्त्वादिपृथ्व्यन्तं तत्त्वानामुदयक्रमे। तन्मात्रेभ्यो भवन्तीति वक्तव्यानि क्रमान्मुने २६
तन्मात्राणां कलानामप्यैक्यं स्याद्भूतकारणम्। अविरुद्धत्वमेवात्र विद्धि ब्रह्मविदां वर ॥२७
स्थूलसूक्ष्मात्मके विश्वे चन्द्रसूर्यादयो ग्रहाः। सनक्षत्राश्च संजातास्तथान्ये ज्योतिषां गणाः २८
ब्रह्मविष्णुमहेशादिदेवता भूतजातयः। इन्द्रादयोऽपि दिक्पाला देवाश्च पितरोऽसुराः ॥२९
राक्षसा मानुषाश्चान्ये जंगमत्वविभागिनः। पशवः पक्षिणः कीटाः पन्नगादिप्रभेदिनः ॥३०
तरुगुल्मलतौषध्यः पर्वताश्चाष्ट विश्रुताः। गंगाद्याः सरितः सप्त सागराश्च महर्द्धयः ॥३१
यत्किंचिद्वस्तु जातं तत्सर्वमत्र प्रतिष्ठितम्। विचारणीयं सद्बुद्ध्या न बहिर्मुनिसत्तम ॥३२
स्त्रीपुंरूपमिदं विश्वं शिवशक्त्यात्मकं बुधैः। भवादृशैरुपास्यं स्याच्छिवज्ञानविशारदैः ॥३३
सर्वं ब्रह्मेत्युपासीत सर्वं वै रुद्र इत्यपि। श्रुतिराह मुने तस्मात्प्रपंचात्मा सदाशिवः ॥३४
अष्टत्रिंशत्कलान्याससामर्थ्याद्द्वैतभावना ।सदाशिवोऽहमेवेति भवितात्मा गुरुः शिवः॥३५
एवंविचारी सच्छिष्यो गुरुः स्यात्स शिवः स्वयम्। प्रपंचदेवतायंत्रमंत्रात्मा न हि संशयः।
आचार्यरूपया विप्र संच्छिन्नाखिलबन्धनः। शिशुः शिवपदासक्तो गुर्वात्मा भवति ध्रुवम् ३७
यदस्ति वस्तु तत्सर्वं गुणप्राधान्ययोगतः। समस्तं व्यस्तमपि च प्रणवार्थं प्रचक्षते ॥३८
रागादिदोषरहितं वेदसारः शिवो दिशः। तुभ्यं मे कथितं प्रीत्याद्वैतज्ञानं शिवप्रियम् ॥३९

यो ह्यन्यथैतन्मनुते मद्वचो मदगर्वितः। देवो वा मानवः सिद्धो गन्धर्वो मनुजोऽपि वा ॥
दुरात्मनस्तस्य शिरः छिंद्यां समतया ध्रुवम्। सच्छक्त्या रिपुकालाग्निकल्पया न हि संशयः ॥
भवानेव मुने साक्षाच्छिवाद्वैतविदां वरः। शिवज्ञानोपदेशे हि शिवाचारप्रदर्शकः ॥४२॥
यद्देहभस्मसम्पर्कात्संछिन्नाघव्रजोऽशुचिः। महापिशाचः सम्प्राप त्वत्कृपातः सतां गतिम् ॥
शिवयोगीति संख्यातस्त्रिलोकविभवो भवान्। भवत्कटाक्षसम्पर्कात्पशुः पशुपतिर्भवेत् ॥४४॥
तव तस्य मयि प्रेम्णा लोकशिक्षार्थमादरात्। लोकोपकारकरणे विचरन्तीह साधवः ॥४५॥
इदं रहस्यं परमं प्रतिष्ठितमतस्त्वयि। त्वमपि श्रद्धया भक्त्या प्रणवेष्वेव सादरम् ॥४६॥
उपविश्य च तान्सर्वान्संयोज्य परमेश्वरे। शिवाचारं ग्राहयस्व भूतिरुद्राक्षमिश्रितम् ॥४७॥
त्वं शिवो हि शिवाचारी सम्प्राप्ताद्वैतभावतः। विचरंल्लोकरक्षायै सुखमक्षयमाप्नुहि ॥४८॥

सूत उवाच

श्रुत्वेदमद्भुतमतं हि षडाननोक्तं वेदान्तनिष्ठितमृषिस्तु विनम्रमूर्तिः।
भूत्वा प्रणम्य बहुशो भुवि दण्डवत्तत्पादारविंदविहरन्मधुपत्वमाप ॥४९॥

इति श्रीशिवमहापुराणे षष्ठ्यां कैलाससंहितायां शिवाद्वैतज्ञानकथनादिसृष्टिवर्णनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

## अथाष्टादशोऽध्यायः

### (शिष्यकरणविधिः)

शौनक उवाच

श्रुत्वा वेदान्तसारं तद्रहस्यं परमाद्भुतम्। किं पृष्टवान्वामदेवो महेश्वरसुतं तदा ॥ १ ॥
धन्यो योगी वामदेवः शिवज्ञानरतः सदा। यत्सम्बन्धात्कथोत्पन्ना दिव्या परमपावनी ॥ २ ॥
इति श्रुत्वा मुनीनां तद्वचनं प्रेमगर्भितम्। सूतः प्राह प्रसन्नस्ताञ्छिवासक्तमना बुधः ॥ ३ ॥

सूत उवाच

धन्या यूयं महादेवभक्ता लोकोपकारकाः। शृणुध्वं मुनयः सर्वे संवादं च तयोः पुनः ॥ ४ ॥
श्रुत्वा महेशतनयवचनं द्वैतनाशकम्। अद्वैतज्ञानजनकं सन्तुष्टोऽभून्महामुनिः ॥ ५ ॥
नत्वा स्तुत्वा च विविधं कार्तिकेयं शिवात्मजम्। पुनः प्रपच्छ तत्त्वं हि विनयेन महामुनिः ॥६॥

वामदेव उवाच

भगवन्सर्वतत्त्वज्ञ षण्मुखामृतवारिधे। गुरुत्वं कथमेतेषां यतिनां भावितात्मनाम् ॥ ७ ॥
जीवानां भोगमोक्षादिसिद्धिः सिध्यति यद्वशात्। पारम्पर्यं विना नैषामुपदेशाधिकारिता ॥८॥

एवं च क्षौरकर्मांगं स्नानञ्च कथमीदृशम्। इति विज्ञापय स्वामिन्संशयं छेत्तुमर्हसि ॥
इति श्रुत्वा कार्तिकेयो वामदेववचः स्मरन्। शिवं शिवां च मनसा व्याचष्टुमुपचक्रमे ॥

श्रीसुब्रह्मण्य उवाच

योगपट्टं प्रवक्ष्यामि गुरुत्वं येन जायते। तव स्नेहाद्वामदेव महद्गोप्यं विमुक्तिदम् ॥
वैशाखे श्रावणे मासि तथाश्वयुजि कार्तिके। मार्गशीर्षे च माघे वा शुक्लपक्षे शुभे दिने ॥
पञ्चम्यां पौर्णमास्यां वा कृतप्राभातिकक्रियः। लब्धानुज्ञस्तु गुरुणा स्नात्वा नियतमानसः ॥
पर्यंकशौचं कृत्वा तद्वाससांगं प्रमृज्य च। द्विगुणं दोरमाबध्य वाससी परिधाय च ॥
क्षालितांघ्रिर्द्विराचम्य भस्म सद्यादिमन्त्रतः। धारयेद्धि समादाय समुद्धूलनमार्गतः ॥
गृहीतहस्तो गुरुणा सानुकूलेन वै मुने। सशिष्यः साञ्जलिः स्वाभ्यां हस्ताभ्यां प्राङ्मुखो यथा
तथोपवेष्टितस्तिष्ठेन्मंडपे समलंकृते। गुर्वासनवरे शुद्धे चैलाजिनकुशोत्तरे ॥
अथ देशिक आदाय शंखं साधारमस्त्रतः। विशोध्य तस्य पुरतः स्थापयेत्सानुकूलतः ॥
साधारं शंखमपि च सम्पूज्य कुसुमादिभिः। निःक्षिपेदस्त्रवर्मभ्यां शोधितं तत्र सज्जलम् ॥
आपूर्य पूर्ववत्पूज्ये षडंगोक्तक्रमेण च। प्रणवेन पुनस्तद्वै सप्तधैवाभिमन्त्रयेत् ॥
अभ्यर्च्य गन्धपुष्पाद्यैर्धूपदीपौ प्रदर्श्य च। संरक्ष्यास्त्रेण तं शंखं वर्मणाऽथावगुण्ठयेत् ॥
धेनुशंखाख्यमुद्रे च दर्शयेदथ देशिकः। पुनः स्वपुरतः शंखदक्षिणे देश उत्तमे ॥
पूजार्घ्योक्तविधानेन सुन्दरं मण्डलं शुभम्। कुर्यात्सम्पूजयेत्तं च सुगन्धकुसुमादिभिः ॥
साधारं शोधितं शुद्धं घटं तन्तुपरिष्कृतम्। धूपितं स्थापितं शुद्धवासितोदप्रपूरितम् ॥
पञ्चत्वक्पञ्चपत्रैश्च मृत्तिकाभिश्च पञ्चभिः। मिलितं च सुगन्धेन लेपयेत्तं मुनीश्वर ॥
वस्त्राम्रदलदूर्वाग्रनारिकेलसुमैस्ततः। तं घटं वस्तुभिश्चान्यैः संस्कुर्यात्समलंकृतम् ॥
विन्यसेत्पञ्च रत्नानि घटे तत्र मुनीश्वर। हिरण्यं चापि तेषां वाभावे भक्त्या प्रविन्यसेत् ॥
नीलाख्यरत्नं च तथा रत्ने माणिक्यहेमनी। प्रवालगोमेदके च पञ्चरत्नमिदं स्मृतम् ॥
नृम्ल्स्कमिति सम्प्रोच्य ग्लूमित्यन्तेऽथ देशिकः। सम्यग्विधानतः प्रीत्या सानुकूलः समर्चयेत्
आधारशक्तिमारभ्य यजनोक्तविधानतः। पञ्चावरणमार्गेण देवमावाह्य पूजयेत् ॥
निवेद्य पायसान्नञ्च तांबूलादि यथा पुरा। नामाष्टकार्चनान्तं च कृत्वा तमभिमन्त्रयेत् ॥
प्रणवाष्टोत्तरशतं ब्रह्मभिः पञ्चभिः क्रमात्। सद्यादीशान्तमप्यस्त्रं रक्षितं वर्मणा पुनः ॥
अवगुण्ठ्य प्रदर्श्याथ धूपदीपौ च भक्तितः। धेनुयोन्याख्यमुद्रे च सम्यक्तत्र प्रदर्शयेत् ॥
ततश्च देशिकस्तस्य दर्भैराच्छाद्य मस्तके। मण्डलस्थेशदिग्भागे चतुरस्रं प्रकल्पयेत् ॥
तदुपर्य्यासनं रम्यं कल्पयित्वा विधानतः। तत्र संस्थापयेच्छिष्यं तं शिशुं सानुकूलतः ॥

प्रागेवैषां तु गमनात्पवनो लोकपावनः। दर्शनं नैमिषीयाणां संवादस्तैर्महात्मनः ॥१३॥
शुद्धां बुद्धिं ततस्तेषां सांबे सानुचरे शिवे। समाप्तिं चापि सत्रस्य दीर्घपूर्वस्य सत्रिणाम् ॥१४॥
विज्ञाप्य जगतां धात्रे ब्रह्मणे ब्रह्मयोनये। स्वकार्ये तदनुज्ञातो जगाम स्वपुरं प्रति ॥१५॥
अथ स्थानगतो ब्रह्मा तुंबुरोर्नारदस्य च। परस्परं स्पर्द्धितयोर्गानेन विवदमानयोः ॥१६॥
तदुद्भावितगानोत्थरसैर्माध्यस्थमाचरन्। गंधर्वैरप्सरोभिश्च सुखमास्ते निषेवितः ॥१७॥
तदानवसरादेव द्वाःस्थैर्द्वारि निवारिताः। मुनयो ब्रह्मभवनाद्बहिः पार्श्वमुपाविशन् ॥१८॥
अथ तुंबुरुणा गाने समतां प्राप्य नारदः। साहचर्येष्वनुज्ञातो ब्रह्मणा परमेष्ठिना ॥१९॥
त्यक्त्वा परस्परस्पर्द्धां मैत्रीं च परमां गतः। सह तेनाप्सरोभिश्च गंधर्वैश्च समावृतः ॥२०॥
उपवीणयितुं देवं नकुलीश्वरमीश्वरम्। भवनान्निर्ययौ धातुर्जलदादंशुमानिव ॥२१॥
तं दृष्ट्वा षट्कुलीयास्ते नारदं मुनिगोवृषम्। प्रणम्यावसरं शंभोः पप्रच्छुः परमादरात् ॥२२॥
स चावसर एवायमितोऽन्तर्गम्यतामिति। वदन्ययावन्यपरस्त्वरया परया युतः ॥२३॥
ततो द्वारि स्थिता ये वै ब्रह्मणे तान्न्यवेदयन्। तेन ते विविशुर्वेश्म पिंडीभूयांडजन्मनः ॥२४॥
प्रविश्य दूरतो देवं प्रणम्य भुवि दंडवत्। समीपे तदनुज्ञाताः परिवृत्योपतस्थिरे ॥२५॥
तांस्तत्रावस्थितान् पृष्ट्वा कुशलं कमलासनः। वृत्तांतं वो मया ज्ञातं वायुरेवाह नो यतः ॥२६॥
भवद्भिः किं कृतं पश्चान्मारुतेऽन्तर्हिते सति। इत्युक्तवति देवेशे मुनयोऽवभृथात्परम् ॥२७॥
गंगातीर्थेऽस्य गमनं यात्रां वाराणसीं प्रति। दर्शनं तत्र लिंगानां स्थापितानां सुरेश्वरैः ॥२८॥
अविमुक्तेश्वरस्यापि लिंगस्याभ्यर्चनं सकृत्। आकाशे महतस्तस्य तेजोराशेश्च दर्शनम् ॥२९॥
मुनीनां विलयं तत्र निरोधं तेजसस्ततः। याथात्म्यवेदनं तस्य चिंतितस्यापि चात्मभिः ॥३०॥
सर्वं सविस्तरं तस्मै प्रणम्याहुर्मुहुर्मुहुः। मुनिभिः कथितं श्रुत्वा विश्वकर्मा चतुर्मुखः ॥३१॥
कंपयित्वा शिरः किंचित्प्राह गंभीरया गिरा। प्रत्यासीदति युष्माकं सिद्धिरामुष्मिकी परा ॥३२॥
भवद्भिर्दीर्घसत्रेण चिरमाराधितः प्रभुः। प्रसादाभिमुखो भूत इति भूतार्थसूचितम् ॥३३॥
वाराणस्यां तु युष्माभिर्यद्दृष्टं दिवि दीप्तिमत्। तल्लिंगसंज्ञितं साक्षात्तेजो माहेश्वरं परम् ॥३४॥
तत्र लीनाश्च मुनयः श्रौतपाशुपतव्रताः। मुक्ता बभूवुः स्वस्थाश्च नैष्ठिका दग्धकिल्बिषाः ॥
प्राप्तानेन यथा मुक्तिरचिराद्भवतामपि। स चायमर्थः सूच्येत युस्मद्दृष्टेन तेजसा ॥३६॥
तत्र वः काल एवैष दैवादुपनतः स्वयम्। प्रयात दक्षिणं मेरोः शिखरं देवसेवितम् ॥३७॥
सनत्कुमारो यत्रास्ते मम पुत्रः परो मुनिः। प्रतीक्ष्यागमनं साक्षाद्भूतनाथस्य नंदिनः ॥३८॥
पुरा सनत्कुमारोऽपि दृष्ट्वापि परमेश्वरम्। अज्ञानात्सर्वयोगीन्द्रमानी विनयदूषितः ॥३९॥
अभ्युत्थानादिकं युक्तमकुर्वन्नतिनिर्भयः। ततोऽपराधात्क्रुद्धेन महोष्ट्रो नन्दिना कृतः ॥४०॥

अथ कालेन महता तदर्थं शोचता मया। उपास्य देवं देवीश्च नन्दिनं चानुनीय वै ॥४१॥
कथंचिद् दुष्टता तस्य प्रयत्नेन निवारिता। प्रापितो हि यथापूर्वं सनत्पूर्वो कुमारताम् ॥४२॥
तदाह च महादेवः स्मयन्निव गणाधिपम्। अवज्ञाय हि मामेव तथाऽहंकृतवान्मुनिः ॥४३॥
अतस्त्वमेव याथात्म्यं ममास्मै कथयानघ। ब्रह्मणः पूर्वजः पुत्रो मां मूढमिव संस्मरन् ॥४४॥
मयैव शिष्यस्ते दत्तो मम ज्ञानप्रवर्तकः। धर्माध्यक्षाभिषेकं च तव निर्वर्त्तयिष्यति ॥४५॥
स एवं व्याहृतो भूयः सर्वभूतगणाग्रणीः। यत्पुराज्ञापनं मूर्ध्ना प्रातः प्रतिगृहीतवान् ॥४६॥
तथा सनत्कुमारोऽपि मेरौ मदनुशासनात्। प्रसादार्थं गणस्यास्य तपश्चरति दुश्चरम् ॥४७॥
द्रष्टव्यश्चेति युष्माभिः प्राग्गणेशसमागमात्। तत्प्रसादार्थमचिरान्नंदी तत्रागमिष्यति ॥४८॥
इति सत्वरमादिश्य प्रेषिता विश्वयोगिना। कुमारशिखरं मेरोर्दक्षिणं मुनयो ययुः ॥४९॥

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरभागे नैमिषर्षियात्रावर्णनं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

## अथैकचत्वारिंशोऽध्यायः
### ( व्यासोपदेशः )

सूत उवाच

तत्र स्कन्दसरो नाम सरः सागरसन्निभम्। अमृतस्वादुशिशिरस्वच्छागाधलघूदकम् ॥ १ ॥
समन्ततः संघटितं स्फटिकोपलसंचयैः। सर्वर्तुकुसुमैः फुल्लैश्छादिताखिलदिङ्मुखम् ॥ २ ॥
शैवलैरुत्पलैः पद्मैः कुमुदैस्तारकोपमैः। तरंगैरभ्रसंकाशैराकाशमिव भूमिगम् ॥ ३ ॥
सुखावतरणारोहैः स्थलैर्नीलशिलामयैः। सोपानमार्गैं रुचिरैः शोभमानाष्टदिङ्मुखम् ॥ ४ ॥
तत्रावतीर्णैश्च यथा तत्रोत्तीर्णैश्च भूयसा। स्नातैः सितोपवीतैश्च शुक्लकौपीनवल्कलैः ॥ ५ ॥
जटाशिखायनैर्मुंडैस्त्रिपुण्ड्रकृतमण्डनैः। विरागविवशस्मेरमुखैर्मुनिकुमारकैः ॥ ६ ॥
घटैः कमलिनीपत्रपुटैश्च कलशैः शिवैः। कमण्डलुभिरन्यैश्च तादृशैः करकादिभिः ॥ ७ ॥
आत्मार्थं च परार्थं च देवतार्थं विशेषतः। आनीयमानसलिलमात्तपुष्पं च नित्यशः ॥ ८ ॥
अन्तर्जलशिलारूढैर्नीचानां स्पर्शशंकया। आचारवद्भिर्मुनिभिः कृतभस्मांगधूसरैः ॥ ९ ॥
इतस्ततोऽप्सु मज्जद्भिरिष्टशिष्टैः शिलागतैः। तिलैश्च साक्षतैः पुष्पैस्त्यक्तदर्भपवित्रकैः ॥१०॥
देवाद्यमृषिमध्यं च निर्वर्त्य पितृतर्पणम्। निवेदयेदभिज्ञेभ्यो नित्यस्नानगतान् द्विजान् ११॥
स्थाने स्थाने कृतानेकबलिपुष्पसमीरणैः। सौराध्यंपूर्वं कुर्वद्भिः स्थंडिलेऽभ्यर्चनादिकम् ॥१२॥
क्वचिन्निमज्जदुन्मज्जत्प्रस्तगजयूथपम्। क्वचिच्च तृषयायातमृगीमृगतुरंगमम् ॥१३॥
क्वचित्पीतजलोत्तीर्णमयूरवरवारणम्। क्वचित्कृततटाघातवृषप्रतिवृषोज्ज्वलम् ॥१४॥

क्वचित्कारण्डवरवैः क्वचित्सारसकूजितैः। क्वचिच्च कोकनिनदैः क्वचिद्भ्रमरगीतिभिः ॥१५॥
स्नानपानादिकरणैः स्वसंपद्द्रुमजीविभिः। प्रणयात्प्राणिभिस्तैस्तैर्भाषमाणमिवासकृत् ॥१६॥
कूलशाखिशिखालीनकोकिलाकुलकूजितैः। आतपोपहतान्सर्वान्नामंत्रयदिवानिशम् ॥१७॥
उत्तरे तस्य सरसस्तीरे कल्पतरोरधः। वेद्यां वज्रशिलमय्यां मृदुले मृगचर्मणि ॥१८॥
सनत्कुमारमासीनं शश्वद्बालवपुर्द्धरम्। तत्कालमात्रोपरतं समाधेरचलात्मनः ॥१९॥
उपास्यमानं मुनिभिर्योगींद्रैरपि पूजितम्। ददृशुर्नैमिषेयास्ते प्रणताश्चोपतस्थिरे ॥२०॥
यावत्पृष्टवते तस्मै प्रोचुः स्वागतकारणम्। तुमुलः शुश्रुवे तावद्दिवि दुन्दुभिनिस्वनः ॥२१॥
ददृशे तत्क्षणे तस्मिन्विमानं भानुसन्निभम्। गणेश्वरैरसंख्येयैः संवृतं च समन्ततः ॥२२॥
अप्सरोगणसंकीर्णं रुद्रकन्याभिरावृतम्। मृदंगमुरजोद्घुष्टं वेणुवीणारवान्वितम् ॥२३॥
चित्ररत्नवितानाढ्यं मुक्तादामविराजितम्। मुनिभिः सिद्धगंधर्वैर्यक्षचारणकिन्नरैः ॥२४॥
नृत्यद्भिश्चैव गायद्भिर्वादयद्भिश्च संवृतम्। वीरगोवृषचिह्नेन विद्रुमद्रुमयष्टिना ॥२५॥
कृतगोपुरसत्कारं केतुना मान्यहेतुना। तस्य मध्ये विमानस्य चामरद्वितयांतरे ॥२६॥
छत्रस्य मणिदण्डस्य चन्द्रस्येव शुचेरधः। दिव्यसिंहासनारूढं देव्या सुयशया सह ॥२७॥
श्रिया च वपुषा चैव त्रिभिश्चापि विलोचनैः। प्राकारैरभिकृत्यानां प्रत्यभिज्ञापकं प्रभोः ॥२८॥
अविलंघ्यजगत्कर्तुराज्ञापनमिवागतम् । सर्वानुग्रहणं शंभोः साक्षादिव पुरः स्थितम् ॥२९॥
शिलादतनयं साक्षाच्छ्रीमच्छूलवरायुधम्। विश्वेश्वरगणाध्यक्षं विश्वेश्वरमिवापरम् ॥३०॥
विश्वस्यापि विधातॄणां निग्रहानुग्रहक्षमम्। चतुर्बाहुमुदारांगं ।चन्द्ररेखाविभूषितम् ॥३१॥
कंठे नागेन मौलौ च शशांकेनाप्यलंकृतम्। सविग्रहमिवैश्वर्यं सामर्थ्यमिव सक्रियम् ॥३२॥
समाप्तमिव निर्वाणं सर्वज्ञमिव संगतम्। दृष्ट्वा प्रहृष्टवदनो ब्रह्मपुत्रः सहर्षिभिः ॥३३॥
तस्थौ प्राञ्जलिरुत्थाय तस्यात्मानमिवार्पयन्। अथ तत्रांतरे तस्मिन्विमाने चावनिं गते ॥३४॥

प्रणम्य दण्डवद्देवं स्तुत्वा व्यज्ञापयन्मुनीन्।
षट्कुलीया इमे दीर्घं नैमिषे सत्रमास्थिताः। आगता ब्रह्मणादिष्टाः पूर्वमेवाभिकांक्षया ॥३५॥

श्रुत्वा वाक्यं ब्रह्मपुत्रस्य नन्दी छित्वा पाशान्दृष्टिपातेन सद्यः।
शैवं धर्मं चैश्वरं ज्ञानयोगं दत्त्वा भूयो देवपार्श्वं जगाम ॥३६॥

सनत्कुमारेण च तत्समस्तं व्यासाय साक्षाद्गुरवे ममोक्तम्।
व्यासेन चोक्तं महितेन मह्यं मया च तद्वः कथितं समासात् ॥३७॥

नावेदविद्भ्यः कथनीयमेतत्पुराणरत्नं पुरशासनस्य ।
नाभक्तशिष्याय च नास्तिकेभ्यो दत्तं हि मोहान्निरयं ददाति ॥३८॥

मार्गेण सेवानुगतेन यैस्तद्वृत्तं गृहीतं पठितं श्रुतं वा।
तेभ्यः सुखं धर्ममुखं त्रिवर्गं निर्वाणमंते नियतं ददाति ॥३९॥
परस्परस्योपकृतं भवद्भिर्मया च पौराणिकमार्गयोगात् ।
अतो गमिष्येऽहमवाप्तकामः समस्तमेवास्तु शिवं सदा नः ॥४०॥
सूते कृताशिषि गते मुनयः सुवृत्ता यागे च पर्यवसिते महति प्रयागे ।
काले कलौ च विषयैः कलुषायमाणे वाराणसीपरिसरे वसतिं वितेनुः ॥४१॥
अथ च ते पशुपाशमुमुक्षयाऽखिलतया कृतपाशुपतव्रताः ।
अधिकृताखिलबोधसमाधयः परमनिर्वृतिमापुरनिंदिताः ॥४२॥

## व्यास उवाच

एतच्छिवपुराणं हि समाप्तं हितमादरात्। पठितव्यं प्रयत्नेन श्रोतव्यं च तथैव हि ॥४३॥
नास्तिकाय न वक्तव्यमश्रद्धाय शठाय च। अभक्ताय महेशस्य तथा धर्मध्वजाय च ॥४४॥
एतच्छ्रुत्वा ह्येकवारं भवेत्पापं हि भस्मसात्। अभक्तो भक्तिमाप्नोति भक्तो भक्तिसमृद्धिभाक् ॥
पुनः श्रुते च सद्भक्तिर्मुक्तिः स्याच्च श्रुते पुनः। तस्मात्पुनः पुनश्चैव श्रोतव्यं हि मुमुक्षुभिः ॥४६॥
पंचावृत्तिः प्रकर्तव्या पुराणस्यास्य सद्धिया। परं फलं समुद्दिश्य तत्प्राप्नोति न संशयः ॥४७॥
पुरातनाश्च राजानो विप्रा वैश्याश्च सत्तमाः। सप्तकृत्वस्तदावृत्त्याऽलभंत शिवदर्शनम् ॥४८॥
श्रोष्यत्यथापि यश्चेदं मानवो भक्तितत्परः। इह भुक्त्वाऽखिलान्भोगानंते मुक्तिं लभेच्च सः ॥
एतच्छिवपुराणं हि शिवस्यातिप्रियं परम्। भुक्तिमुक्तिप्रदं ब्रह्मसंमितं भक्तिवर्द्धनम् ॥५०॥
एतच्छिवपुराणस्य वक्तुः श्रोतुश्च सर्वदा। सगणः ससुतः सांबः शं करोतु स शंकरः ॥५१॥

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरभागे व्यासोपदेशश्रीशिवपुराण-माहात्म्यवर्णनं नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## समाप्तोऽयं ग्रन्थः

गौरीशंकर प्रेस, मध्यमेश्वर वाराणसी।

# मेरे विश्वविख्यात महाग्रन्थ–

| | |
|---|---|
| श्रीमद्भागवत 'सामयिकी' भाषा टीका ( बहुतेरे दृष्टान्तों सहित ) पत्राकार | २४—०० |
| श्रीमद्भागवत 'सामयिकी' भाषा टीका सजिल्द (नित्यपाठोपयोगी घरेलू संस्करण) | १५—०० |
| श्रीमद्भागवत 'श्रीधरी' संस्कृत टीका ( बढ़िया कागज, स्वच्छ छपाई ) | २४—०० |
| श्रीमद्भागवत 'चूर्णिका' संस्कृत टीका ( सप्ताहोपयोगी ) पत्राकार | २४—०० |
| श्रीमद्भागवत दशमस्कन्ध भाषा टीका पत्राकार | ८—०० |
| श्रीमद्देवीभागवत भाषा टीका पत्राकार ( बहुत अच्छा संस्करण ) | ३२—०० |
| श्रीमद्देवीभागवत मूल ( बढ़िया कागज, पक्की जिल्द और अच्छी छपाई ) | ८—०० |
| श्रीमद्वाल्मीकीय रामायण 'रामाभिनन्दिनी' भा० टी० ( पक्की जिल्द ) | २४—०० |
| श्रीमद्वाल्मीकीय रामायण मूल ( नित्यपाठोपयोगी दिव्य संस्करण ) | ८—०० |
| श्रीशिवमहापुराण मूल ( नित्यपाठोपयोगी दिव्य संस्करण ) | १०—०० |
| श्रीमद्वाल्मीकीय रामायण सुन्दरकाण्ड भाषा टीका सहित | ३—०० |
| आनन्दरामायण 'ज्योत्स्ना' भाषा टीका ( पक्की जिल्द और स्वच्छ छपाई ) | १६—०० |
| राजतरङ्गिणी ( महाकवि कल्हणकृत ) 'शोभना' भाषा टीका सहित | २०—०० |
| भैषज्यरत्नावली 'चूर्णिका' टिप्पणी सहित | ४—०० |
| रसेन्द्रसारसंग्रह 'रसायनी' भाषा टीका सहित | ३—०० |
| शार्ङ्गधरसंहिता 'श्यामा' भाषा टीका सहित (बढ़िया जिल्द और स्वच्छ छपाई) | ४—०० |
| माधवनिदान 'माधवी' भाषा टीका ( नया संस्करण ) | २—५० |
| भावप्रकाशनिघण्टु 'सटिप्पण' ( परीक्षोपयोगी ) ग्लेज, नया संस्करण | १—५० |
| नाड़ीज्ञानदर्पण भाषा टीका सहित ( अपने विषयकी अनूठी पोथी ) | ०—५० |
| कादम्बरी ( बाणभट्टकृत ) अच्छी हिन्दी टीका सहित सम्पूर्ण | ७—०० |
| वैयाकरणसिद्धान्तकौमुदी 'सुगन्धा' बढ़िया कागज स्वच्छ छपाई (नया संस्करण) | ३—[illegible]० |
| रघुवंश महाकाव्य ( कालिदासकृत ) मल्लिनाथी संस्कृत टीका ( सम्पूर्ण ) | ३—०० |
| रघुवंश महाकाव्य ( कालिदासकृत ) हिन्दी टीका सहित ( सम्पूर्ण ) | ३—०० |

| | |
|---|---|
| मेघदूत काव्य ( कालिदासकृत ) संस्कृत टीका और भाषा टीका सहित | ०—७५ |
| कुमारसंभव ( कालिदासकृत ) भाषा टीका सहित सम्पूर्ण | २—०० |
| अभिज्ञानशाकुन्तल नाटक ( कालिदासकृत ) भाषा टीका सहित | २—०० |
| कौटिलीय अर्थशास्त्र ( आचार्य चाणक्य कृत ) भाषा टीका सम्पूर्ण | ८—०० |
| बृहत्स्तोत्ररत्नाकर बड़ा ( स्तोत्रसंख्या ४०० ) नया संस्करण | ३—०० |
| हितोपदेश भाषा टीका सहित नवीन संस्करण | १—५० |
| पञ्चतन्त्र ( विष्णुशर्मा कृत ) भाषा टीका सहित | ४—०० |
| श्रीशुक्लयजुर्वेदीय मंत्रसंहिता ( कर्मकाण्ड सम्बन्धी मंत्रोंका विशाल संग्रह ) | १—०० |
| श्रीशुक्लयजुर्वेदीय रुद्राष्टाध्यायी ( रुद्री ) | ०—३७ |
| अमरकोष हिन्दी टिप्पणी सहित ( सम्पूर्ण ) | १—०० |
| उपनयनपद्धति भाषा टीका सहित बड़ी ( प्रामाणिक संस्करण ) | ०—७५ |
| मनुस्मृति भाषा टीका सहित ( भारतवर्षका प्रामाणिक धर्मशास्त्र-ग्रन्थ ) | ३—०० |
| दुर्गासप्तशती 'हैमवती' भाषा टीका सहित | १—०० |
| गरुड़पुराण ( प्रेतकल्प ) भाषा टीका सहित ( ३४ अध्याय ) | १—५० |
| श्रीरामचरित मानस ( तुलसीदासजी कृत ) बड़ा अक्षर और गुटका साइज | ३—०० |
| दृष्टान्तदीपक ( दृष्टान्तसंख्या ४३२ ) द्वितीय संस्करण | २—०० |
| राजसी कुण्डली ( अनोखे जन्मपत्रफार्म ) मोटा कागज, दोरंगी छपाई | ६—०सै० |
| श्रीशुभविवाहलग्नपत्रिका (वरकन्या उभयपक्षके लिये उपयोगी) दोरंगी छपाई | १०—०सै० |

५-३-६३



—प्राप्तिस्थान—

**पण्डित-पुस्तकालय, राजादरवाजा, वाराणसी—१**

